## ४२० । ओर्लोपोऽकद्रुपाण्ड्वोरेये ।

ओ. ६।, लोप १।, अकद्रुपाण्ड्वो ६॥, एये ७। ।

उवर्णस्य एये परे लोपः स्यात् नत्वनयोः । कामण्डलेयः । तयोस्तु काद्रवेयः पाण्डवेयः ।

---

स्वावादित्वात् णौ सिद्धे पाठः यदा तु श्रौतत्वाभिधायिनी तदैव बाधनार्थं प्रवाहण-शब्दस्य सुभगादिसुपञ्चालाद्यौ पाठात् प्रवाहणेयं गोधाशब्दस्यापाठो गोधादेरारस्य नित्यत्वज्ञापनार्थः। भ्रुवोऽपत्यं भौवेयं णेये भ्रुवादिश्च भ्रुव इति किं शालाकाभ्रेयं लेखाभ्रेयं णेये भ्रूर्लोपः। श्यामेयो वाशिष्ठः ब्राह्मणेयो वाशिष्ठः अन्यत्र श्यामायनः लाक्षणायणि लाक्षणायण्यः अणेय इत्यादि। हरेरपत्यं हारेयं एवं वैधवेयं शाक्तेयं इत्यादि। अणः इति किं दाक्षेरपत्यं दाक्षायणः प्लाक्षायणः। द्व्यच इति किं मारीचं सौरुचं. वडवाया अपत्यं वाडवेयं शुक्लं अन्यत्र वाडवं. वैकर्णेयं काश्यपः कौसीतकेयं. काश्यपः अन्यत्र वैकर्णिः कौसीतकिः चतुष्पाद इति कमण्डलुश्चतुष्पादजातिविशेषः तस्यापत्यं णेये उत्वलोपार्थमाह ॥ ४१९ ॥

कमण्डलोरपत्यं कामण्डलेयं अत्र कमण्डलुशब्दात् संज्ञायामूप् प्रागुक्तः। ऊवन्तात् णेये उकारस्य लोपः। महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्ममेति” भट्टौ। ऐक्ष्वाक इति तु इक्ष्वाकुमाचष्टे इति ञौ ङित्वात् टिलोपे इक्ष्वाकयति इति स्थितौ ततः इक्ष्वाक्यते इक्ष्वाकुरुच्यते असौ इति कर्मणि घञि इक्ष्वाकः इक्ष्वाकस्यायं ऐक्ष्वाकः इति साध्यम्। तयोस्तु काद्रवेयं पाण्डवेयं अत्र न्वोर्लोपोताविल्युकारस्य ओकारः। पाण्डुशब्दस्य गर्गादिपाठात् ण्ये पाण्डव्यः. शिवादिपाठात् णे पाण्डवः ॥ ४२० ॥

श्रीरा-टी—कद्रुश्च पाण्डुश्च तत् कद्रुपाण्डु तस्य पुंस्त्वं सौत्वात् अनिताऽका णौ गृह्यते उकारलोपे कामण्डलेयं एवं शितिबाहोरपत्यं शैतवाहेयं अम्बाया अपत्यं आम्बेयं काद्रवेयः इति नागमातृवाचकस्य नेह ग्रहणं तस्योवन्तत्वात् णेयप्राप्तेः। पाण्डवेयं इति शिवादित्वात् पाण्डवं दौष्कुलेयं दुष्कुलीनः। मातृष्वसृपितृष्वसृभ्यां णेयो ङित् मातृष्वसेयं पैतृष्वसेयं. पितृष्वस्रादित्वात् मातृष्वस्रीयः पैतृष्वस्रीयं अदितेरपत्यम् आदितेयं कुर्वादित्वात् आदित्यः एवं दैतेयः दैत्यः आकृतिगणोऽयम्। आबाद्युदाहरति माहेयः इति मह्या अपत्यम् इति वाक्यम् एवं यौवतेयः

४२१। कल्याणी सुभगा दुर्भगा बन्धकी रजकी वलीवर्द्दी ज्येष्ठा कनिष्ठा मध्यमा, परस्त्र्यनुसृष्ट्यनुदृष्टिकुलटाभ्य इनेयः।

कल्याणी—कुलटाभ्य ५।॥, इनेय. १।।

सौभागिनेयः दौर्भागिनेयः।

---

सौपर्णेय कौम्भकारेय। द्व्यचोऽनद्या नदीवर्जितात् प्रीत्यान्तात् द्व्यच ण्येय. स्यात्। दाक्षेय गौपेय नद्या इति कि गौणा गोदावरी गौण इङ्गाभ्यो नदी मानुषी सञ्ज्ञाभ्य. इति ण्येयप्राप्तेविषयम् एतत् ग्रन्थकृता माहेय इत्युक्तम् ॥ ४२० ॥

अर्थवशाद्विभक्तेर्विपरिणाम इति न्यायात् एय इति सप्तम्यन्त षष्ठ्यन्त भूत्वाऽनुवर्त्तते इति तयोदशभ्य परस्य ण्येयस्य स्थाने इनेय. स्यात्। स्थानिवत्त्वाद्वृद्धि स्त्रियामीप् च। कल्याण्या अपत्य काल्याणिनेय. स्त्रिया काल्याणिनेयी अत्र सुभगा दुर्भगा परस्त्री इति त्रयाणा सुभगादित्वात् उभयपदस्य वृद्धि. यथा सौभागिनेय. परस्त्रिया अपत्यं पारस्त्रैणेय इत्यत्र इनेये कृते सुभगादिपाठसामर्थ्यात् यत्योर्लोप इतीकारस्य लोपाभावे सन्धौ अत्रैव वृद्धिः ॥ ४२१ ॥

श्रीरा टी—कल्याणी च सुभगा च दुर्भगा च बन्धकी च रजकी च वलीवर्द्दी च ज्येष्ठा च कनिष्ठा च मध्यमा च परस्त्री च अनुसृष्टिश्च अनुदृष्टिश्च च कुलटा च ता ताभ्य। राजतीस्थाने रजकीति लिपिकरप्रमाद। जिनेन्द्रबुद्धिपादैन नृधीरत्वेन साधितम् एभ्यश्चतुर्दशभ्यः पूर्वस्थितसप्तम्यन्तनिर्दिष्टस्य ण्येयस्य क्ति विपरिणामात् इनेय यकारणकार विनैवादेश.। अतएव षीत्त्वादीप् णित्वाद्वृद्धिः। तेन काल्याणिनेयीत्यादि। इतो लुगिनेयस्य परस्त्रिया.। परस्त्रीशब्दात् परस्य इनेयस्य इतो लुक् स्यात् पारस्त्रैणेय' सुभगादित्वात् पदद्वयोर्वृद्धि.। इहासत्यर्थकुलटाया ग्रहण तेन सत्या. कुलटाया अपत्यं कौलटिनेयः अत्रादेराकृतिगणत्वात् कौलटिनेय। असत्यास्तु कौलटेर कौलटेयः। सौभागिनेय इति। सुभगादिर्यथा। "सुभगजङ्गलकृत् सिन्धु धेनु वनजदीत्तरा.। वध्योगी गारवेणुश्च शतकुम्भपरस्त्रियो। इह सवपरादिस्तु लोक प्रयोग इत्यपि। असिहत्या चतुर्विद्या कुरुपञ्चाल एव च। अधिदेवादिभूतौ च ण्यो राजपुरुषी मत। सर्वात् पुरुषभूमी च तथा वान्तरहत् स्मृतः। अन्यादि-

शति कोऽपि स्यादनुसंवत्सरो मत । अस्य हेत्यस्य ईर्ष्या च तथा कुरुकाती मत । स्यात् पुष्करसदित्येव सत्रपूर्वनड स्मृत । अभिगमोऽनुहोडश प्राग्देशनगरान्तटा । नैन्द्रान्तघादिवरुणास्तश्च चेद्देवता अपि। अथ प्रवाहण: ण्येये ण्येयान्तास्य षष्ठी-त्यपि। अर्द्धादिपरिमाणञ्च भवेदाद्यजनद्द यदि। अनीश्वरोऽशुचिश्चैवाचिवप्रा-कुशलौ मतौ। सुभगादिरिति ख्यातोऽसंख्यस्तन्त्रेषु तान्त्रिकै ।" सुभगादीनि दान्यु-त्तरदानि येषा ते सुभगाया अपत्य सौभागिनेय । द्वयोर्द्वयोर्वृद्धि । एव सौभाग्य दौर्भाग्य महासौभगाय दीयते उद्याचिदिषु क्रान्तस । कुरुजङ्गले भव. कौरु-जाङ्गल: कश्चित् जङ्गलधेनुवनजान्ता सुभगादौ न पठ्यन्ते तन्मते कौरुजङ्गल. वैश्व-धेनव सौवर्णवनज इति। सुहृद इद भाव सौहार्द्य सौहार्दम् इह मुख्यस्य ग्रहणात् आदिष्टस्य तु सौहृदमिति सुहृद इद सौहाद प्रकृप्रधान सिन्धु. मध्यदलोपात् प्रकृ-सिन्धु. तत्र भव प्राक्सैन्धव सिन्धुशब्द. कच्छादिषु पठ्यते तेन तदन्तविधेरपि ष्णा वैश्वधेनव समहे आधेनव सौवर्णवानज वर्गीगशब्दो विदादिस्तस्यान्तरापत्य ट्न: वार्ग्यौग. अनन्तरे वार्ग्यौगि । अगारवेणुनामा कश्चित् तस्यापत्यम् आगारवैणव., एव शातकौम्भ परस्त्रिया अपत्य पारस्त्रैणेय: षोयस्य इनेय इह लोके भव ऐह-लौकिक लोकोत्तरादिति ष्णिक सर्वलोके विदित. सार्वलौकिक: परलोके भव: पारलौकिक प्रयोगे भव प्रायौगिक आध्यात्मादित्वात् ष्णिक असिहत्याया भव: आसिहात्य चतस्रो विद्या' चतुर्विद्या. चतुर्विद्या एव चातुर्विद्य' चातुर्वर्ण्यमित्यन्य. । परे तु विद्यास्थानेऽप्येवमाहु: कुरुपाञ्चाले भव कौरुपाञ्चाल' अधिदैवे अधिभूते भवम् आधिदैविकम् आधिभौतिकम् आध्यात्मादित्वात् ष्णिक । राजपुरुषस्य भावो ब्राह्म-णादित्वात् ष्य. राजपौरुष्य धेता कि राजपुरुषस्यापत्य राजपुरुषायणि' सर्वपुरुष-स्येद सार्वपौरुष सर्वभूमे निमित्तम् ईश्वर. संयोग: उत्पातो विदितो वा सार्वभौम. । अन्तरहतोऽपत्यम् आन्तरहाति. अनुशतिकस्येदम् आनुशतिकम् अनुसंवत्सरेण दीयते आनुसंवत्सरिकम् अस्य हेति. प्रयोजकमस्य आस्यहैतिक गणपाठात् मध्यलुक् । अस्य हत्येति युक्त. आस्यहात्य: ष्ण: । अत्र परेकदेशिन अस्यहेति अस्यहेत्यौ शब्दौ न पठन्ति। अस्यहत्यशब्दोऽध्याये वर्त्तते। कुरुकतस्यापत्य कौरुकात्य. गर्गादित्वात् ष्ण्य । पुष्करसदोऽपत्य पौष्करसादि बाह्वादित्वात् ष्णि । सूत्र पूर्व यस्य स सूत्रपूर्व. स चासौ नडश्चेति तस्यापत्य सौत्रनाडि । अभिगममर्हति अभिगामिको गुण. । अनुहोतेन पठति आनुहोतिक.। नगररूपमिद येषा ते प्राग्देशे वर्त्तमानाश्चेत् सुभ-गादय: । पुण्ड्रनगरे भव. पौण्ड्रनागर: सौचनागर. । प्राग्देश इति कि महानगरे भव.

महानागर. इन्द्रोऽन्तो यस्य स इन्द्रान्त घ आदिर्यस्य स घादि घादिश्चासौ वरुणश्चेति घादिवरुण इन्द्रान्तश्च घादिवरुणश्च तौ न विद्येते यासु ता. तच्छब्देन देवतोच्यते। तासाञ्च: इन्द्व: तत्र तस्मिन् तथाच देवताना चे सति देवतावाचकशब्दा.* सुभगादौ पठ्यन्ते तेनाग्निश्च मरुच्च तौ देवतेऽस्य आग्निमारुत कर्म क्रियते यो देवताइन्द्व: सूक्तसम्बन्धी हवि:सम्बन्धी वा तत्रैवायं विधि इह तु न भवति स्कान्दविशाख ब्राह्मप्रजापत्य: नेन्द्रान्तघादिवरुणा इति कि सोमेन्द्रम् ऐन्द्रावरुण हवि. इह तु स्यादेव ऐन्द्राग्नम् आग्निमारुतम्। अथानन्तर प्रवाहणशब्दोऽस्त्र्यादिषु पठ्यते ण य एव तस्य ग्रहण तेन प्रवाहणस्यापत्य प्रावाहणेय तस्यापत्यं युवा प्रावाहणेयि एतदादि सर्वं सुपञ्चालादावपि पठ्यन्ते। तेन पूर्वदस्य विकल्प प्रावाहणेय प्रावाहणेयि। आदि Iकिसौ अत्रेति आद्यच् न अत् अनत् आद्यच् अनत् यस्य तत् परिमाणविशेषण तथा चाकारात् भिन्नाद्यच् अद्धादिपरिमाण सुभगादौ पठ्यते तेन अर्द्धद्रोणेन क्रीतम् आर्द्धद्रौणिकम् अर्द्धकौडविकम् अनदिति किम् अर्द्धप्रस्थेन क्रीतम् आर्द्धप्रास्थिकम् अर्द्धप्रस्थिकम् इति कश्चित् सुपञ्चालादित्वात् अर्द्धद्रौणिकम् अर्द्धकौडविकम्। एवम् आनैश्वर्य्यम् आशौचम् अशौचम् आचैतन्नम् अचैतन्नम् आकौशलम् अकौशलम् आनैपुण्यम् इत्यादि। अमरख्य' सुभगादि तन्त्र तान्निरुक्त तेन उदकशुद्धस्यापत्यम् औदकशुद्धिरित्यादि। प्रसङ्गसङ्गत्या साहित्येन सुपञ्चालादिरिह निरूप्यते। सुसर्वार्द्धाज्जनपदा दयामद्रादिशश्च ते। प्राग्ग्रामनगरादिभ्योऽवयवाद्दत्तवाचिन। संवत्सरस्तु सख्यादि: सख्या संख्यादिरेव च। अमानपरिमाणञ्च सख्यादिचेटनामनि। अभिविष्याति सख्यादिवष प्रोष्ठपदास्तुर्ज। अथ प्रवाहण. णेय णेयान्तषणीत्यपि। अद्धादिपरिमाणञ्च भवेदाद्यजम:यदि। अनोश्वरो शुचिश्चैव चैतन्नाऽकुशलौ मतौ। अनिपुणश्च कथ्यन्ते यथा तथा यथा पुरौ। सुपञ्चालादयश्चेते कथ्यन्ते कोविदोत्तमै। सु सर्व अर्द्ध इत्येतेभ्यो जनपदा सुपञ्चालादौ पठिता तेन सुपाञ्चाले भव सुपाञ्चालक. एव सर्वपाञ्चालक. अर्द्धपाञ्चालक' अथानन्तर ते जनपदा मद्रभिन्ना दिक्पूर्वाश्चेद्भवन्ति तदा सुपञ्चालादौ पठ्यन्ते यथा पूर्वपाञ्चालक उत्तरपाञ्चालक दक्षिणपाञ्चालक अमद्रा इति कि पौर्वमद्र आपरमद्र दिग्वाचकेभ्य. प्राग्देशवर्त्ति ग्रामनगरवाचका. सुपञ्चालादौ यथा पूर्वा चासौ इषुकामशमी तत्र भव. पूर्वेषुकामशम. पूर्वकार्ण्णच्छत्तिक नगराणा तावत पूर्वस्मिन् पाटलिपुत्रे भव: पूर्वपाटलिपुत्रक' पूर्वकान्यकुब्जक: नगराणा ग्रामग्रहणेनैव सिद्धे भेदेन यत् उभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थ तथाच दिक्पूर्वसमुदाय. पूर्वेषु

## ४२२ । क्षुद्रागोधाभ्यो वैरारौ ।

क्षुद्रागोधाभ्य. ५॥, वा ।१।, एरारौ १॥ ।

**नाटेर: नाटेय:, गौधेर' गौधार: गौधेय: । गार्ग्य: वात्स्य जामदग्न्य: पाराशर्य्य: ।**

---

कामशम्यादिर्ग्रामनामधेयम् इह तु दिग्वाचक' विनैव पाटलिपुत्रादिशब्दो नगरमाह । पूर्व्वत्र ग्रामवाचकसमुदायस्यादिक्पूर्वावयवादुत्तरस्य त्रि. । इह तु दिग्वाचकान्नगरस्योत्तरदस्य त्रिरिति । ऋतुशब्दस्य समभिव्याहारात् ऋत्ववयववाचिन पूर्व्वदात् ऋतव सुपञ्चालादौ पठ्यन्ते यथा पूर्व वर्षाणा पूर्व्ववर्षास्तत्र भव' पूर्व्ववार्षिक पूर्व्वहैमन्तम् अवयवादिति कि पूर्वासु वर्षासु भव पौर्व वार्षिक । संख्यापूर्व सवत्सर सुपञ्चालादौ पठ्यते यथा द्वौ सवत्सरौ व्याप्याधीष्टो भृतो भावी वा द्विसावत्सरिक एव सख्यापूर्व संख्यापि सुपञ्चालादौ यथा द्वे षष्टी व्याप्याधीष्टो भृतो भावी वा द्विषाष्टिक. द्विसाप्ततिक द्विषष्ट्यादिशब्दा' संख्यासु वर्त्तमाना कालाधिकारीयत्यमुत्पादयन्ति । सख्यादिशानवर्जित परिमाणसज्ञायां सुपञ्चालादौ पठ्यते । यथा द्वौ कुडवौ मानमस्य द्विकौडविक द्वाभ्या सुवर्णाभ्या क्रीत द्विसौवर्ण्णिकम् । अनामनि इति कि पाञ्चलोहितिक पाञ्चकपालिक । भविष्यति तु त्रीणि वर्षाणि व्याप्य भावी त्रैवार्षिक तथाच नक्षत्र ताभिर्युक्तकाल इत्यर्थे ण तस्याऽर्थशेषे लुप् प्रोष्ठपदा तत्र जात इत्यर्थे ऋतुनक्षत्रात् ण, प्रोष्ठपाद ज इति कि प्रोष्ठपदासु भव कुशलो वा इत्यर्थे ण प्रोष्ठपद प्रोष्ठपदा । इति निर्देशात् तत् पर्य्यायभाद्रपदाशब्दस्यापि ग्रहण तेन भाद्रपाद अजे तु भादपद इति । अथ प्रवाहण णेय इत्यादि प्रयोगा प्रदर्शिता । केऽपीत्यादि आहुरिति शेष तेन अयाथातथ्यम् अयाथापूर्व्य परमते अयथातथ्यम् अयथापूर्व्यमिति ॥४३१॥

क्षुद्राश्च गोधाश्च क्षुद्रागोधा ताभ्य एरश्च आरश्च एरारौ । क्षुद्रा शीलकुलहीना अङ्गहीनाश्च । गोधा गोधादि अत्र वाशब्दस्य व्यवस्थावाचित्वात् क्षुद्राभ्य, परस्य णेयस्य एर' स्याद्वा । गोधाटे, परस्य णेयस्य एरारौ स्यातां वा इत्यर्थ, । शीलहीना यथा नट्या अपत्य नाटेर नाटेय, एव कुलटाया अपत्य कौलटेर' कौलटेय' पूर्व्वोदिनेये कौलटिनेय एव' दास्या अपत्य दासेर दासेय. । अङ्गहीना यथा । काणाया अपत्य काणेर. काणेय गोधाया अपत्य गौधेर गौधेय. गौधार: ।

चटकाया अपत्यं चाटकैर अव ययोर्लोप इत्यत्र ययोरिति ज्ञापकादाकारलोपा-भावः बाभ्रव्द्यवस्थयास्य नित्यम्। एवं स्त्र्यपत्ये णेयस्य लुकि चटका इत्येव निपात्यते। गर्गादिमा८। गर्गस्यापत्य गार्ग्य इत्यादौ ययोरित्यनेन अकारादेर्लोपः। स्त्र्यपत्ये गार्गी मत्स्यागस्त्यस्येति यकारलोप एव वात्स्य इत्यादि ॥ ४२२ ॥

श्रीरा-टी—क्षुद्राश्च गोधाश्च ताभ्याश्च त्वनिर्द्दिष्टार्थ एयवाविधानसामर्थ्यात नद्या अपत्य इति वाक्य पर्चे नाटेय, एव यदा कुलटाशब्दोऽसतीवाचकस्तदा कौलटेर कौलटेय शीलहीनत्वात। अङ्गहीनायान्तु काणाया अपत्य काणेर काणेय एव कौञ्जेर इत्यादि। गोधार इति गोधाया अपत्यम् इति वाक्य क्षुद्रादिपाठात् गौधेर, अवग्रादौ पृथक् पाठात गौधेय इति जुष्टस्यापत्य जौष्टार मृग्या अपत्य मार्गार, षण्डस्यापत्य षाण्डार काक्या अपत्य काकार मूषिकाया अपत्य मौषिकार वाह्वादित्वात मौषिकि। चटकाभ्यो मैरो लुप्ण तु स्त्रियाम्। चटकाच्च चटकायाश्च परस्य णेरस्य णेर, स्यात्। स्त्र्यपत्ये णेरस्य लुक्। अतएव चटकात् णेय, चटकस्य चटकाया अपत्य चाटकैर स्त्रियान्तु चटकस्य चटकाया अपत्य स्त्री चटका। गार्ग्य इत्यादि। ननु गर्गादिनडादिभ्या गोत्र एव ण्यण्णायनौ तत कथमपत्यसामान्ये विहित इति चेत सत्य जामदग्न्य पाराशर्य्य इत्युभाभ्याम् अनन्तरे ण्यस्य द्वीपायन इत्यत्र ण्यायनस्य दर्शनात सामान्येनोक्त अन्यतान्तरे ण्यस्य द्वीपायन इत्यत्र ण्यायनस्य दर्शनात समान्येनोक्तम् अन्यत्रान्तर एवेति भाव। गर्गस्य गोत्रापत्य गार्ग्य: अनन्तरे तु अत, ण्ण गार्गिरित्यादि। गर्गादिर्यथा। गर्गो वत्साक्तवीरेभ्यो व्याघ्रपादवट शठ,। अजो निलस्त्यग्निवेश्यौ जवमानो धनञ्जय। इन्चो विश्वावसु शङ्खौ वर्म्मधूमपुलस्तय,। सस्कृतिर्वेदस्वदयागेन्द्रहुराजस्तसैमधुः। विप्रोऽथ लोहितो मण्ड,जिगीषुर्गुहसुर्नतु। कपि बोधवतण्डास्ताङ्गिरसोऽप्यथ कौशिके। कद्रु शसित्वसल्लिन्द्र मानायी मनुकच्छपा,। मङ्सु शम्बु, कतेस्तण्ड-स्तरुचा रुच मङ्क्षु च। तनु ण्यरुकतस्थैव शकलिभनर तथा। कण्वागस्तिविरोहितौ हषवद्द, पूर्वोगण शिप्पलु क्रुष्टी भिण्डिलशण्डिलौ च चिकितोदभस्तितिचाभिषक्। गोकच्चारिव काचुलूकमयनौ स्थूलासुनाभृत्तुकम्। ताता सन्त्वितभिणुत्रो,ऽश्मरथ गोलुन्दं तथा कुण्डली। अनडुदयज्ञवल्कौ च पर्णवल्क पराशरः। जतुकर्ण: शकराच: पूतिमाषश्च पिण्डल,। सूयानो बृहदग्निश्च कुटीभञ्जमदग्नि च। लोहितादिश्च कर्णादिर्गर्गादौ परिकीर्त्तिता। गर्गस्याऽनन्तरापत्यम् इति वाक्य णे ययोर्लोप इति अकारलोपे त्रि स्त्रिया षित्वादीप् गार्गी वानायनपचे गार्ग्या-

## ४२३। ओदौतोऽज्वत्तक्रद्य-क्यड्याः।

ओत् औत ५।, अच्वत्।१।, तक्रद्य क्य-ड्या. १॥।

ओदौद्भ्यां परस्तसंज्ञः क्रत्संज्ञकश्च यः क्यड्यौ च अज्वत् स्यात्। बाभ्रव्यः। नाव्यायनः गार्ग्यायण दाक्षायणी। पैतृष्वस्रीयः। मातृष्वस्रीयः। रैवतिक। आश्वपालिक। यादव. आङ्गिरस.।

---

यणो एव सर्वत्रोहनीयम्। इह पुलस्तिशब्दपाठात व्वे .पुलस्त्य. पुलस्त्यशब्दस्य तु व्वे पौलस्त्या इति। यद्यपि वैदभृच्छन्दात् षिष्णो क्रते पश्चात स्वार्थे ष्णो वैदभृत्य इति सिद्धाति तथापि व्वे लुकि वैदभृत इति सिद्धार्थ' पाठ तत्र तु वैदभृत्या इति राजशब्दोऽसे गगादि' तेन राजस्यापत्य राज्य से तु सौराजि एतेनान्येषा मेऽपि सौगार्ग्य इत्यादि। माधव्यो विप्र अन्यत्र माधव. शकलान्तात्लोहितादे. ष्णस्य स्त्रिया नायन्नित्य तेन लौहित्यायनीत्यादि। कपेरन्तरापत्य काप्य स्त्रिया काप्यायनी एव बोध्य. बौध्यायनी वातण्ड्य वातण्ड्यायनी। अनाङ्गिरसे तु कापेय बौधि वातण्ड शिवादित्वात् ष्ण. अनाङ्गिरसेऽपि गर्गादित्वाच्च वातण्ड्य स्त्रिया वातण्ड्यायनी वातण्डीति कश्चित ॥ ४२२ ॥

अच् इव अज्वत अच्तुल्या। तश्च क्रच तौ तक्रतौ च तौ यौ चेति तक्रद्यौ तक्रद्यौ च क्यश्च ड्यश्च ते। बभ्रोरपत्य बाभ्रव्य इत्यत्र ष्णो क्रते न्वोर्लोपीताविति उकारस्यौकारे अनेन यकारस्याच्तुल्यत्वे ओकारस्यावादेश। एव नावा तर्य्य नाव्यम् अत ढघेकादिति णे क्रते अनेन यकारस्याच्तुल्यत्वे औकारस्य आव्। एव लूयते य स लव्यः तव्यानीययाः इति यप्रत्यये उकारस्य गुणे यकारस्य अच् तुल्यत्वात् ओकारस्य अव्। एवञ्च भाव्यमित्यत्र व्यणि क्रते वृद्धौ यकारस्याच्तुल्यत्वे औकारस्य आव् ओकारस्य अव् ये। एवञ्च गामिच्छति गव्यति नावमिच्छति नाव्यति इत्युभयत्र क्यौम्याट्यश्चेति क्ये क्रते यस्याच्तुल्यत्वादवावौ। एवञ्च गौरिवाचरति गव्यते नौरिवाचरति नाव्यते इत्युभयत्र धान्ड्यक्नीति ड्ये तस्याच् तुल्यत्वादवावौ। नचात्र अया यौरित्यनेन पचे वकारलोपोऽस्त्विति वाच्य न लोप क्यड्ये इत्यनेन क्यड्यर्योर्नकारलोपादन्यस्य विरामविहितकार्य्यस्य निषेधेन दान्त-त्वाभावात् अतएव वाचमिच्छति वाच्यति इत्याद न कौडादि। ननु त्यय इत्युक्तौ

प्रत्ययकारेणैवेष्टसिद्धौ वक्तद्वयकरणात् इति गौरव कथम् इति चेन्न। तङन्तस्वे इत्यस्य प्रपूर्वस्य प्रोयते। केवलस्य घ्या भूर्योऽसि औयत इत्यादौ यकोऽपि अन्वत्वापत्ते। गर्गादिस्तु गर्ग वत्स आकृति सङ्कृति अज व्याघ्रपद वेदभृत् वीणायाम पुलस्ति विलस्ति रेभ अग्निवेश शङ्ख शट अवट धूम वर्म्मिन् धनञ्जय टच विश्वावसु जवमान लोहित संशित बभ्रु मण्डु मङ्क्षु मङ्कु मन्तु बोध शम्भु नितु गुग्गुलु जिगीषु मन्यु तन्तु इन्द्र मनायी सनावी मनु कत्यक रुच तनुच तरुच तण्ड वतण्ड कपितक कुरुकत सकल देवहू काण्व गोकाच अगस्ति कुण्डली अनड्वाह यज्ञवल्क पर्णवल्क जात विवीहित वृष गणनावह गण शण्डिल मुद्गल मुषल पराशर जतूकर्ण मन्थित अश्मरथ शर्कराक्ष पुतिमास स्थूरा अवरका पिङ्गल कृष्ण गोलुन्द उलूक तितिक्ष भिषज् विष्णज भण्डिल दन्त किकत एकलू पिप्पलु वृहदग्नि जमदग्नि सुलोभिन् कुटीषु पाण्डु इत्यादि। ८७। नडादिमाह। नडस्यापत्यं नाडायन. ऋषिरपि एतदुभयप्रत्ययान्तेऽपि नडादि स्यादित्यत आह गार्गायण. दाक्षायणीति गर्गस्यापत्य गार्ग्य गार्ग्यस्यापत्य गार्ग्यायण अत्र ण्यद्यचौ चेत्यत आकारवर्जनात् ण्यस्य लोपो न स्यात्। एव दक्षस्यापत्य दाक्षि. दाक्षे रप्यपत्यं दाक्षायणो अत यणोर्लोप इति इकारलोप षित्वादीप्। नडादिस्तु। नड अश्व अश्मन् शङ्ख विद पुट रोहिण खर्ज्जूर खरुप भडिल भडित भण्डिल भण्डित प्रकृति वामदच अनुग्रीवा काश काण कौशल गोलाच अर्कश्वन् वलसद चक्र कुल श्रविष्ठा धविविन् गोमिन् श्याम धूम धूस वाग्मिन् विश्वानर कूट जल वड ग्रीष्म अर्ह वृच विशम्प विशाल गिरि चपल चुप दासक वैल्य वाप्य अनुडुह्य अर्जुन शूद्रक सुमनस् ओजस् इस आतप किर खिर खदिर चरमुञ्ज इतिक इविस उदक नमक सप्तन् राजन्यतिक प्राण नव सायक दास मित्र द्वीप पिञ्जर पिङ्गल किङ्कर कातर काखल काश्य काव्य अज अमुष्य अमित्र लिप्त चित्र कुमार लोह मूर्द्ध स्तम्भ शिंशपा अग्र श्रण शकट टक शलभ मिमत ऋच् जल इन्ध जलन्धर युगन्धर हंसक दण्डिन् हस्तिन् पञ्चाल चमसन सुकृत्य स्थिरक ब्राह्मण चरक वदर अश्मल खरुप कामुक ब्रह्मदण्ड उडुम्बर शोण आलोह मण्डप इत्यादि। कुञ्जादिस्त्रिकादिश्च नडादावन्तर्गणौ ॥ ११६ ॥ पितृष्वस्रादिमाह। पितृष्वसुरपत्यं पैतृष्वस्रीय एव मातृष्वस्रीय' स्त्रिया पैतृष्वस्रीया षित्वाभावादाविव। पितृष्वस्रादिस्तु। पितृष्वसा मातृष्वसा भ्राता चतुष्टयमिति। रैवत्यादिमाह। रैवत्या अपत्यं रैवतिक. एवम् आश्वपालिकः। रैवत्यादिस्तु। रैवती अश्वपाल द्वारपाल मणिपाल

वृक वृष्णिक वृकग्राह कर्णग्राह कुक्कुटाच ॥ ९ ॥ शेषमाहुः। यदोरपत्यं यादव अत्र न्वौर्लौपौताविति उकारस्य औकारेऽव् अङ्गिरसोऽपत्य आङ्गिरस एव रघोः राघवः उपगोः औपगव पशोः पाशव. इत्यादि। न्वौर्लौपौतावित्यनेन प्राप्त मणीप निषेधयति ॥ २३ ॥

श्रीरा टी—ओच औच तत्तस्मात् अजिव अज्वत् तश्च क्रश्च तौ तक्रतौ तक्रतोर्य. तक्रद्दय तक्रद्दयश्च कश्च श्च ते। वाभ्रव्य. इति वभ्रोरन्तरापत्य ण. न्वौर्लौपौताविति उवर्णस्यौकार यस्याज्वद्भावात् यलायवायाव इत्यवादेश कौशिक एवाभिधानम् अन्यत्र वाभ्रव तनुस्थाने तन्तुरिति पठत्यपर। कती मुनिविशेष. तस्यानन्तरापत्य कात्य स्त्रिया कात्यायनी। कण्वादे प्रयोजनमग्रे वक्ष्यति। गर्गादेराकृतिगणत्वात् रामरथशब्दं कण्वादौ ज्ञातव्य रामरथस्यापत्य रामरथ्य व्ये तु रामरथाः स्त्रिया रामरथ्यायनी रामरथी रामरथ्यस्यापत्य युवा रामरथ्यायन रामरथस्य छात्रा रामरथा सङ्घाङ्कघोषलक्षणानि रामरथानि रामरथशब्दादगोत्रेऽप्युपचारात्। कुर्वादेरणिङ्गौराजश्वशुरात्त्वनिन्मनोऽस्तु सश्च। कुर्वादेर्गोत्रेऽगोत्रे च णप्रोषित् स्यात् ख इत्यर्थ गौराजश्वशुरेभ्यस्तु अनित् इत्शून्यो य इत्यर्थ। मनोऽस्तु यथोगौ सश्च न इत्। कुरोरपत्य कौरव्य कौरव्यौ कौरव्या इत्यादि स्त्रिया कौरव्यायणी कौरव्या, केचित् कौरव्यायणीति नित्यमाहुः। एव लाक्षण. लाक्षायण्यौ लाक्षायण्याः स्त्रिया लाक्षण्या इत्यादि। कुर्वादिर्यथा। कुरु करि गर्ग गर्गेकाकूट शकल शलाका सत्यङ्कारम्। शाक शुभ्रोमतिमङ्कुष तथा लक्षणवडभीकारम्। एवकार कैशोरि रथकारकश्च पट्टिका। पिण्डीमूलेन्द्रजालौ राकेशकम्बुकविधारक। एकजित् स्यात् न सन्यायश्च पिटमत् पथिकारिणौ। छन्ना भर्त्ता शूर्पनार्यो दामोष्णिषि विनस्तथा। भर्तु. श्यावरथ. श्यावपुत्र. सेनान्तदा मता। कारव क्षत्रिये सम्राट् केशिन्या केशिनो भवेत्। न्येभ्रातुर्वर्म तस्यैव वेन केनचिदीरित। यमादित्यावदितिश्चैवा पश्वाद्यादिपतिर्दिति। पश्वश्वकुलराष्ट्रार्यमणवास्तु धन वसु। विद्याशतनवश्चैव प्राणधान्य सभाजगत्। रथकारशब्दोऽत्र जातिवचन। शिल्पिवचनस्तु कारुत्वेन एव प्राप्ते। शके भवतीति शक भूरिह पाठवलाच्छकारागम.। हारिषेण वैष्वक्सैन्य. वाह्वादित्वात् हारिषेणि वैष्वक्सेनि एव ताम्रवाप्य. ताम्रवापिरित्यादि। सम्राजोऽपत्य साम्राज्य क्षत्रिय अन्यत्र बाह्वादेराकृतिगणत्वात् साम्राजि केशिन्या अपत्य कैशिन्य णे केशिनादेश. अन्यथा पुवद्भावे कैश्य स्यात्। भ्रातुरपत्यं भ्रातृव्यः णस्य वम् प्रिटष्यसादित्वात् भ्रातीय, कस्यचिन्मते वेणशब्दस्य

कुर्वादित्वात्, वैख्य तथा च वैख्यं पृथु हैहयमर्जुनश्च इति। वैणाच्छान्दसीति पाणिनिसूत्राच्छान्दसमिदम्। यमस्यापत्यं याम्य आदित्यस्यापत्यम् आदित्य ण्ये यलोप अदितेरपत्यम् आदित्य प्राजापत्य एव वैश्वपत्य दितेरपत्य दैत्य: पश्वा-द्यादिपतेस्तु पाशुपत जागत्पतम् इति कुर्वादि। गोरपत्य गव्य राज्ञोऽपत्यं राजन्य चत्रियेऽभिधानम्, अन्यत्र राजन मनवर्जेत्यादिना नियमेन न नलोप इनण्य इति नियमान्न उङ्लोप श्वशुरस्यापत्य श्वशुर्य्य संज्ञाया बाह्वादित्वात् श्वाशुरि मनोरपत्यं मनुष्य ये सन् न इत्। नाडायन इति नडस्यान्तरापत्यम् इति वाक्यम्। नडादि-र्यथा। नड भक्खित रौहिण शङ्खपुट पद काण चर गिरि चक्र कुटम्। विट काश वर्न कुल धूम जन्म किर चित्र सुर खडलोह नरम्। भडिली भडली भडित प्रक्रन्श्वपत्नी ममक खदिरी मिमत। चरक शकट सुलभी वदर स्थिरक खरप. सुमनोऽजजना। शायक दासक किङ्कर दुर्ग कातर काखल पिङ्गल धूमम्। मण्डिल कौशल्य सुपक्क विशाख सातप चुपमश्वविशष्पम्। मूज खरूप खञ्जाल वामो दर्भो धरित्रिण। अश्मा गोली च गोलाच जलन्धर युगन्धरा। कुमार शिंशपा काव्यो वौचार्हाविति सैतिको आनडूह्यार्जुनो दण्डीश्यामो वाम्मो च सप्तम। इन्द्रा-मुष्यो निगु काश्यो राजव्यातीकपिञ्जरा। द्वीप प्राणो दास मित्रो मुञ्जाप दण शूद्रका। अनुग्रीव श्रविष्ठा च विश्वानरश्च हसक। मण्डपा कश्मलस्तम्ब खर्जूर चमसश्च ऋक्। ग्रीष्मो हस्तो वैश्रवाप्यौ सुक्रत श्रोणकामुकौ। ब्राह्मणोडुम्बरा नोह द्रोणजीवन्त पर्वता। सम्भोऽश्वलोप्रदण्ड स्यात् शलङ्कुस्तु ह्यकौशिके। वाशिष्ठे तु वर्णविप्रे क्रणाजातस्तु पूरुषे। दर्भ आग्रायणो भर्गस्त्रैगर्त्ते शुनकस्तथा। वत्से ऋषावग्निशर्मा स्याच्छरद्वांस्तु भार्गवे। भारद्वाजे तु आत्रेयो भरद्वाज शपस्तथा। आत्रेयेऽथ आयणो च क्रौष्टोकस्तुक् सदा मत। णगन्ता णगन्ताश्च गोत्रार्थो. णगन्ताश्च हरितादय.। शिंशपाया अपत्यमित्यर्थे। आद्यचो णित्ते शिंशपादाश्रयो दीर्घसव-र्देविकानाम्। शिंशपादीना णित्ते परे आद्यच स्थाने विप्रसङ्गे आत् स्यात् शांशपा-यन: आनडुह्य इति गर्गादि णगन्त: अर्जुनस्यान्तरापत्यम् आर्जुनायन बाह्वादित्वा-दार्जुनि। एवं सात्तायन सात्ति पञ्चानामपत्य पाञ्चायन बाह्वादित्वात् पाञ्चि.। वैख्य इति वेणो नाम राजर्षिस्तस्यापत्य इञेऽकोशलाजादेरिति ण्यङ् वैण्यस्तस्या-पत्यं युवा वैण्यायन: अतएव ण्यट्र चत्रियार्षेभ्य इति न लुक्। द्रौणा-यणोऽश्वत्थामा इति तु पुत्रे पौत्रत्वोपचारात्। शलङ्कोरन्तरापत्य शालङ्कायण: आयने चलो लोप:। इदम कौशिके कौशिके तु बाह्वादि शानायनो वाशिष्ठ:

अन्यत्र वानि: कार्ष्णायनी विप्र अन्यत्र कार्ष्णि: जातस्यान्तरापत्यं जातायन पुमान् पुरुष इति किं जाताया अन्तरापत्यं जातेयि. प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम्। दार्भायण आग्रायण अन्यत्र दार्भि भार्गायण त्रैगर्त्ते अन्यत्र भार्गि. शौनकायनी वात्स्य अन्यत्र शौनक' विदादित्वात् ट्न आग्निशर्मायण ऋषि अन्यत्र बाह्वादित्वात् आग्निशर्मि शारद्वतायनी भार्गव अन्यत्र शारद्वत विदादित्वात् ट्न आत्रेयायणी भरद्वाज अन्यत्रात्रेयि भारद्वाजायन शापायनशात्रेय अन्यत्र भारद्वाज ऋषिण' शापि अत. णि क्रौष्टीरपत्यं क्रौष्टायन उञी लुक् णायने इदमकौशिक इति कश्चित्। गोत्रविहितणान्ताऽगोत्रविहितणान्ताश्च नडादौ पठ्यन्ते तस्मादेव नियमात् यूनि प्रत्यय'। मूले गार्ग्यायण' इति गर्गस्यान्तरापत्यं गार्ग्यं तस्यापत्यं युवा इत्यर्थे णायन' आति न णस्य लोप एव वात्स्यायन इत्यादि। मूले दाचायण इति दक्षस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्यं युवा दाचायण' एव प्लाचायण इत्यादि स्त्रिया गर्गस्यापत्यं यूनी गार्गी गार्ग्यायणी दाचीति स्त्रिया युवत्वनिषेधात् दाचायणी तु दक्षस्यापत्यं दाचायण स्त्रिया षित्वादीप्। गोत्रार्थ इति किं सोमो देवता अस्य सौम्यस्तस्यापत्यं सौमि। सुतङ्गमस्य निवास सौतङ्गमि-स्तस्यापत्यं सौतङ्गम. शेष ण एव ट्नान्ता हरितादय' हरितस्यान्तरापत्यं हारित विदाद्यन्तर्गणत्वात् गोत्रे ट्न तस्यापत्यं युवा हारितायन परस्त्रिया अपत्यं पार-शरस्तस्यापत्यं युवा पाराशरायण इत्यादि। बाल्यादे. णायनस्य लुक्। बाल्यादे. परस्य णायनस्य यूनि विहितस्य लुक् स्यात्। बालस्यान्तरापत्यं बालि तस्यापत्यं युवा बालि। एवमुदीचोऽपत्यम् औदच्चिस्तस्यापत्यं युवा औदच्चिरित्यादि। बाल्यादि-र्यथा। बालिरौदच्चि भौलिङ्गि सात्यकामि च सात्यकि.। औदङ्क्यौद मयौद शुङ्गि शालङ्कयस्तथा। गौपासङ्गौदमयी च देवस्थान्यौद्गायनी। श्वाफल्की दच्चिती-वाह चितिश्चैवौज्जिहायनि। पैङ्गलायनि वाल्कायनि पैङ्गायनि वारुयवाणि। णान्तानामेषां प्राचां णेश्चार्वैङ्गादेरित्यनेन लुकि सिद्धे प्राच्यार्थं पृथगुपादानम्। प्राचां णेश्चाह वैङ्गादे. वैङ्गाद्ये। प्राचां गोत्रे य णिसदन्तात् यूनि विहितस्य णायनस्य लुक् स्यात् न तु वैङ्गादे। पन्नागारस्यापत्यं पान्नागारिस्तस्यापत्यं युवा पान्नागारि। वैङ्गादेस्तु विङ्गस्यान्तरापत्यं वैङ्गि: तस्यापत्यं युवा वैङ्गायन। धारणस्यान्तरापत्यं धारणि तस्यापत्यं युवा धारणायन इत्यादि। वैङ्गि धारणि बाल्मीकि देवप्राणा-र्हतिस्तथा। तौम्रस्या सुविदेवौहि पौष्विवैरकिवैकनि। कारेणपादि वैकर्णी कालिङ्गा हसकी तथा। चापेटक्यासिबान्धी पौष्करसादिश्च नैयमि:। देवमत्यन्दि

इञ्‌प्रती तथा दैवयज्ञिसंत'। न भरतगोत्राच। प्राच्यात् भरतगोत्राच्च यूनि विहि-तस्य लुक् स्यात्। अर्जुनस्यान्तरापत्यम् आर्जुनिस्तस्यापत्य युवा आर्जुनायन. पूर्वस्य बाधकोऽयम्। पैतृष्वसीय इत्यादि पितृष्वसुरपत्यमिति वाक्यं छीय. षित्वाद् ङिः स्त्रियां पैतृष्वसीया पैतृष्वसीया भार्य्या इत्यादि पितृष्वसा तथा मातृष्वसा भ्रातु-रनित् भवेत्। कुत्साया वायषिश्चैव सौवीरगोत्रसम्भव। भ्रातृशब्दात् छीयो षित् तेन भ्रात्रीयभार्य्य. इति सौवीरगोत्रसम्भवो चायनि. कुत्साया पितृष्वस्रादौ पठ्यते तस्मादपि अषिच्छीयः। यमुन्दस्यापत्य यामुन्दायनिः तस्यापत्य युवा नित्य मामुन्दा यनीयो जाल्म. रेवत्यादित्वात् यामुन्दायनिक. एव सौयामायनीय' सौयामायनिकः वार्ष्यायनीय' वार्ष्यायनिक.। तथाच यमुन्दश्च सुयामा च वार्ष्यस्तेभ्य किञ्. स्मृता.। सौवीरेषु च कुत्सायात् द्वौ योगौ शब्दवित् स्मरेत्। इति महावृत्ति द्वौ छीय-षिकौ। षित्वाभावे पूर्ववत् प्रयोजनम्। रैवतिक. इति रेवत्या अपत्यम् इति वाक्य यचोरित्यादिना ईकारलोप ङिश्च स्त्रियाम्। रैवतिकौ आश्वपालिक इति अश्व पालयतीति अश्वपाल. षण् तस्यापत्यमिति वाक्यम्। रेवत्याश्वमणिद्वारपूर्व-पालोऽथ कुत्सने। गोत्रस्त्रियश्च बाहुल्याद् वृद्धा. सौवीरगोत्रजा। कर्णभ्रातृवकयाङ्गौ कुकुटास्यस्तथैव च। वृकवञ्चौ सवर्णा च परे शिष्टप्रयोगत। अश्वमणिद्वारेभ्य. पालो रेवत्यादौ पठ्यते जयादित्वत्तु अश्वपाली मणिपाली। द्वारपालीति स्त्रीलिङ्ग-मङ्गीकरोति न्यासे तु द्वारपालादीनामदन्तनिर्देश। अथानन्तरं गोत्रविहितत्याला-स्त्रिलिङ्गा: कुत्साया पठ्यन्ते गार्ग्या अपत्य युवा गार्गिक ग्लुचुकायनेरपत्य युवा ग्लौचुकायनिको जाल्म मिमतादित्वात् गार्ग्य. ग्लौचुकायनश्च जाल्म। गोत्र इति किं कारिकेयो जाल्मः स्त्रिय' इति किम् औपगवि. कुत्सायामिति कि गार्गेयो मानवक.। कुत्सन इत्येव सौवीरगोत्रे ये वृद्धास्तेऽपि बाहुल्याद्रेवत्यादौ पठ्यन्ते भाग-वित्तस्यान्तरापत्य भागवित्तिस्तस्यान्तरापत्यं युवा भागवित्तिको जाल्म बाहुल्यात् पक्षे यथा प्राप्तं भागवित्तायनो जाल्म.। तृणविन्दोरन्तरापत्य तार्णविन्दव तस्यापत्यं युवा तार्णविन्दविकः। आकशावस्यान्तरापत्यम् अवन्त्यादिराकृतिगणत्वात् आक-शायेयः तस्यापत्य युवा आकशायेयिकः अन्ये तु अवन्त्यादिपठितत्वात् आकशायन-शब्दस्यैव आकाशायनेयिको जाल्म' इति वदन्ति तन्न तथाचाहुः भागपूर्वपदो वित्ति-र्द्वितीयस्तार्णविन्दव। तृतीयस्त्वाकशायेयो गोत्रात् ठग्बहुल तत इति परे। ठक् षिक। उद्दिष्टद्वयमिह स्त्रीनिवृत्त्यर्थं सौवीरगोत्रज इति किम् औपगविर्जाल्म. कुत्सायामिति किं भागवित्तायनो मानवकः। शिवाद्युदाहरति यादव इति यदुर्नाम

**४२४। मन्वर्जान् वर्म्मोक्षस्येनोऽनोऽध्वात्मनोऽपत्यणोऽविकारणाभावकर्म्मय ईने न नलोपः।**

मन्वर्जान् वर्म्मोक्षस्येन' ६।, अन ६।, अध्वात्मन. ६।, अपत्यणे ७।, अविकारणाभावकर्मये ७।, ईने ७।, न ।१।, नलोप १।।

**मन्वर्जस्यानो वर्म्मण उक्ष्णः स्यात् परस्येनस्यापत्यार्थ-णो अनो विकारार्थवर्जे णे भावकर्म्मार्थवर्जे ये च, अध्वात्मनोरीने, नलोपो न स्यात्। याज्वनः भाद्रवर्म्मणः औक्ष्णः चाक्रिणः। शैवः वाग्मिष्ठः।**

---

कश्चित् तस्यान्तरापत्यम् इत्यर्थे णः' आङ्गिरस इति अङ्गिरसोऽपत्यम् इति वाक्य मुनौ तु शिवादित्वात् एवम् औपगव' माधव' मारीच इत्यादि॥ ४२३॥

मन' वर्जयतीति मन्वर्ज ढात् यण् मन्वर्जश्चासौ अन् चेति मन्वर्जान्। स' सयोग स्यादिन् स्येन् मन्वर्जान् च वर्मन् उक्षन् च स्येन् च मन्वर्जान्वर्म्मोक्षस्येन् तस्य। अध्वन् च आत्मन् च अध्वात्मन् तस्य। अपत्ये णा' अपत्यणा. तस्मिन्। न विकारोऽविकार अविकारे णा' अविकारण भावश्च कर्म्म च भावकर्म्मणी न भावकर्म्मणी अभावकर्म्मणी अभावकर्म्मणोर्यं अभावकर्म्मय। अविकारणाश्च अभावकर्म्मयश्चेति अविकारणाभावकर्म्मय तस्मिन् विकारार्थवर्जणेषु सर्वेषामनन्ताना नलोपनिषेधे अपत्यणे मनन्तस्य नलोपार्थमाह मन्वर्जानिति। अपत्यणे परे मन्वर्जस्यैव अनन्तस्य नलोपो न स्यात्। मनन्तस्य तु नलोप' स्यादेव। अपत्यार्थादन्यत्र मनन्तस्यापि नलोपो न स्यात्। मनन्तवर्जनात् वर्म्मणोऽपि नलोपे सिद्धे तस्य नलोपनिषेधार्थं पुनर्वर्म्मणो ग्रहणम्। उक्ष्णस्तु इह ग्रहण' नियमार्थमेव तेन उक्ष्णोऽपत्यार्थणे एव नलोपो न स्यात् अन्यार्थणे तु नलोप' स्यादेवेति। यथा उक्ष्णोऽपत्य औक्ष्णम्। अन्यत्र उक्ष्ण' इदम् औक्ष' चर्म्म। यज्वनोऽपत्य याज्वन. शेषत्वात् णे कृते अनेन नलोपनिषेध.। मनन्तस्य तु सौपाम: भाद्रपाम.। हित नाम्नस्तु नलोपो वा वक्तव्य'। हैतनाम्न' हैतनाम: भद्रवर्म्मणोऽपत्य' भाद्रवर्म्मण' उक्ष्णोऽपत्यम् औक्ष्ण' इत्यत्र हन् यत् ष्ट्त राज्ञामिति उङ्लोप'। चक्रिणोऽपत्य' चाक्रिण. एव' प्राङ्गिन: दाण्डिन [illegible] विकारार्थवर्जे णे यथा ब्रह्मणो

आत: ब्रह्म वेत्ति इत्यर्थे वा ढघेकादिति षो ब्राह्मण'। एवं साम इद सामनम् अत्र मनन्तस्यापि वर्जनं नास्ति। युन इदं यौवनं माघवनं चर्म्मण इदं चार्म्मणम्। युन: सङ्कोचे चर्म्मण' कोषे वाच्ये ब्रह्मण इदमित्यर्थे न वा निर्दिष्टमनित्यमिति न्यायात् नलोपनिषेधो न स्यात्। यौव सङ्कोच। चार्म्म कोष.। ब्रह्मणोऽय ब्राह्मी मन्त्र। विकारार्थे षो तु हैम्नो विकार हैम अश्मनो विकार आश्म'। अन्यत्र हैमनम् आश्मनम्। भावकर्मार्थवर्जे षो मूर्द्धनि भवो मूर्द्धन्य सामनि साधु सामान्य ब्रह्मणि साधु: ब्रह्मण्य:। भावकर्मणे तु राज्ञो भाव कर्म वा राज्यम् एव सौदाम्यम् अध्यात्मनोरीने यथा अध्वनि साधु अध्वनीन' एवम् आत्मनीन. एवम् अध्वन्य अत्र तु अनन्तत्वादभावकर्म्मणे सामान्यान्नलोपनिषेध। शिवस्यापत्य शैव एवं वाशिष्ठ'। शिवादिस्तु। शिव तक्षन् गङ्गा विपाशा कुञ्जा कोकिला प्रोष्ठ वतण्ड पिष्ट मयूर कर्ण खर्जूरक भूरि सन्धि मुनि कुठार अनभिम्लान ककुत्स्थ सुपिष्ट ऋष्टिषेण यस्कभूमि इला सपत्नी जरत्कारु पैष्टिक चण्ड कुम्भ कहोड। ककुभ बोध पीवर तृण कर्ण चीरहृद जलहृद परिषिक गोभिल जटिलक बधिरक सुप्तरिक वृष्णिक खञ्जारक खञ्जाल रेख लेख वर्त्तुल पिपाक इक्ष्वाकु नडाक ऊर्ण-नाभ उत्केशा रोहितिका आर्य्यश्वेता लघ वशिष्ठ त्वच अक्षस्थूल किनन्दन विरूपाक्ष इत्यादि ॥ ६२ ॥ यस्कादिर्विदादिश्च शिवाद्यन्तर्गणौ ॥ ४२४ ॥

श्रीरा टी—मनं वर्जयतीति मन्वर्ज स चासौ अन् चेति मन्वर्जान् स च वर्म्मा च उक्षा च स्येन् च ( स्यादिन् स्येन् ) तत् मन्वर्जान् वर्मोक्षस्येन् तस्य अध्वा च आत्मा च तयस्य न विकारोऽविकारस्तस्मिन् णा अविकारण। भावश्च कर्म च ते भावकर्मणी न भाव कर्मणी अभावकर्मणी तयोर्य अभावकर्मण पश्चात् अवि-कारणश्च अभावकर्मणश्च तत्तस्मिन्। याज्वन इति यज्वनोऽपत्यम् इत्यर्थे ण' न्वोर्लोपौतो तेऽक्ये इति प्राप्तलोपोऽनेन निषिध्यते मन्वर्ज इति किं भाद्रसाम सौसाम' अपत्यण इति किं चर्म्मणो परिवृतो रथ: चार्म्मणो रथ' मन्वर्जानित्युक्ते वर्म्मणो वर्जने प्राप्ते वर्म्मग्रहणादाह भाद्रवर्म्मण: इति भद्रवर्म्मणोऽपत्यम् इति वाक्य एव शार्ववर्मण. इत्यादि औक्ष इत्यादि। यद्यपि मन्वर्जेत्यनेन नलोप प्रतिषेधा-द्युक्षोऽपि प्रतिषेध: सिध्यति तथाप्युक्ष. पृथग्ग्रहण एवं ज्ञापयति अपत्यणाति-रिक्ते णे नलोपनिषेधो न भवति तेन औक्षा पदमित्यत्रानो विकारणे निषेधो न स्यात् चाक्रिण इति चक्रिणोऽपत्यम् इति वाक्य न्वेनो न नलोप.। अस्य सूत्रस्य योगविभाग. कर्त्तव्य. तेन क्वचिदन्यत्रापि तथाहि। ब्रह्मणो जातापवत्सरे।

ब्रह्मणोऽपत्यणे नलोपो न स्यात् जातौ । ब्रह्मण: अपत्यं ब्राह्मणो जाति: अपत्यण इति किं ब्राह्मी नामौषधिजाति: जातौ किं ब्रह्मणोऽपत्यं ब्राह्म इति । पथि गथि गाथि कैशि विदथिनो वा तु हितनाम्न' । एषामपत्यणे नलोपो न स्यात् हितनाम्नस्तु वा । पाथिनोऽपत्य पाथिन' गाथिन' कैशिन वैदथिन' । हित-नाम्नोऽपत्य हैतनाम । इनोऽकलाप्यादेरनपत्ये । इनो नस्य लोप: स्यात् न तु कलाप्यादे: अनपत्यणे परे स्त्रग्विण इद स्राग्विण: मैधाविन' अपत्ये तु मेधाव इत्यादि । कलाप्यादेस्तु कलापिन इदं कालापम् कलापी पीठसर्पि षु कुथुमी तैतिली तथा । जाजली लाङ्गली स्यात् स ब्रह्मचारिशिखण्डिनौ । कलाप्यादौ शिलाली च नवशब्दा: प्रकीर्त्तिता । कर्मचर्मणोरताच्छील्यकोषयो । ताच्छील्य-भिन्ने कर्मण कोषभिन्ने चर्मणो नलोपो न स्यात् । कार्मण: चार्मण' अताच्छील्य-कोषयोरिति किं कार्मं कर्मशील चार्मं कोष' । दण्डिहस्तिन. णायने जिह्मा-शिवासिनोऽस्तु णेयायन्यो । दण्डिनो हस्तिनश्च णायने नलोपो न स्यात् जिह्मा-शिवासिनोस्तु क्रमात् णेयायन्यो दण्डिनोऽपत्यं दाण्डिनायन: एवं हास्तिनायन: जैह्माशिनेय वासिनायनि' । अथर्वण' णिके । अथर्वणा कृतो ग्रन्थ: अथर्वा-णमधीते वेत्ति वा आथर्वणिक' । शैवा इत्यादि । शिवस्यापत्यमिति वाक्यम् । शिव तक्ष गङ्गा ककुभो मयूरो वलण्ड भूमी मुनि सन्धि यस्का. । पृथा विपाशा तृणकर्ण कुम्भा मण्डूक वौधान भिमान चण्डा' । इक्ष्वाक खञ्जावक रेखकर्णा' खञ्जाल कोलच सुपिष्ट पीला । खदूरको मूमिखता कपिष्टा. पिञ्जारको हृणाक कौकिलिला । पटको वर्त्तन शोफो विरूपाक्ष कखन्वन. । मञ्जीरको जरत्कारु-कहोडा लेख पीवरा. । अयस्थुणो वधिरक ऋत्कैया प्रोष्ठवर्त्तुलो । क्रुञ्चा जटि-लको गोभिलकोत्कुर्य्यौ मनन्दन' । खजूरको नभिम्लान' ककुत्स्थ' पौष्टिक-स्तथा । ऋषिषेण कुठाराख्य श्वेत लोहितिका अपि । ऊर्णनामश्च पिठक: सपत्नी प्रोष्ठिकस्तथा । तक्षशाखा जलङ्कद कुरुस्यन्दक इत्थय । अजन्ता मानुषी सञ्ज्ञा नदीसञ्ज्ञा मता इह । भारद्वाजे तु शुङ्ग' स्यादात्रेये कृगलो मत. । वाम्यत् विकर्णोऽथ चौरङ्कद: परिषकोऽपि च । दशरथोऽथ कुलीनश्च कन्याया' णो भवे-त्तथा । विवेश्यास्त्रिवणो विश्रवसस्तु वरणोऽपि च । विश्रवणो मनोर्षा सन् मण-स्तनमाणव. । इहादन्तानां णाड: णिवाधनार्थं इत्रजिकारान्ताना स्त्रीत्वान्तानां णेयवाधनार्थं. तक्षन् शब्दस्य कारुवाचकत्वात् णिवाधनार्थं. तक्ष्णोऽपत्यं ताक्ष्ण: मनुष्यजाम् इति अनण्त्वात् नलोपो न स्यात् कुर्वादित्वात् ताक्षण्य. । गङ्गाया

अपत्यं गार्ग्यः। अश्वादित्वात् गार्ग्यकः तिकादित्वात् गार्ग्यायणिः। पीलाया अपत्यं पैलः अश्वादेराकृतिगणत्वात् पैलेयः परे तु क्वचित् अपवादविषये उत्सर्गोऽपि निविशत इति न्यायात् इत्याहुः एवं शाल्वाया अप्यूहनीयम् जरत्कारुशब्द उदक-सन्वादिपाठात्। ऋषिविशेषशब्दस्यानन्तत्वात् णिबाधनार्थः। कुरुवंशोत्पन्ना ऋषिवाचकाः अन्धकवंशोत्पन्ना हृष्णिवंशोत्पन्नाश्च सर्वे शिवादौ पठ्यन्ते। कुरौ नाकुल साहदेव ऋषि"। मूले वाशिष्ठ इति वशिष्ठस्यापत्यम् इति वाक्यम् एवं वैश्वामित्र.। अन्धकस्य श्वाफल्क तौरस। हृष्णे वासुदेव. आनिरुद्ध इत्यादि। ननु सर्वेषां व्याकरणानां माहेशमूलकत्वेनाधुनिककुर्वन्धकहृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्यं शिवस्य सर्वज्ञत्वात् तत्र तेषां सङ्कलनं यद्वा ऋषेरना-दित्वात् कुर्वन्धकहृष्णिवंशा एवानादयः। अतएव तेभ्यस्त्वविधानमित्यदोषः। अवृद्धानां मानुषीसंज्ञानां तावत्, चिन्तिताया अपत्यं चैन्तितः शैचितः गौतमः। अवृद्धानां नदीसंज्ञकानां तावत्, यमुनाया अपत्यं यामुनः इरावत्या अपत्यम् ऐरा-वतः नार्म्मदः इत्यादि। अवृद्धा इति किं वासवदत्तेयः चान्द्रभागेयः शुङ्गस्यापत्यं शौङ्गो भारद्वाजः अन्यत्र शौङ्गिः। छगलस्यापत्यं छागलः आत्रेयः अन्यत्र छागला-यनिः विकर्णस्यापत्यं वैकर्णो वात्स्यः अन्यत्र वैकर्णिः कन्याया अपत्यं कानीनः कर्णः व्यासश्च। विवेण्या अपत्यं वैवेणः। विश्रवसोऽपत्यं वैश्रवणो रावणः वैश्रवणश्च मनोरपत्यं इत्यर्थे ष्णः तस्मिन्नणो सन् वा न इत् मानुषः पक्षे मानवः इति। विदादेर्गोत्रेऽनृषेस्त्वानन्तर्य्ये ट्ण्। विदस्यान्तरापत्यं वैदः और्वः स्त्रियां षित्वादीप् वैदी इत्यादि। विदादिर्यथा। विद उर्वो भरद्वाजः किलात कुशिको हरित्। [illegible] काश्यपापस्तम्बौ हर्यश्वौ भरौ। कुचवारशरद्वन्तौ रथन्तर-गविष्ठिरौ। ऋषिषेणश्च किन्दर्भो मठरोऽथ विविष्टपि। पुनर्भूर्दुहितापुत्र प्रति-बोधननान्दरौ। हर्य्यश्च प्रियको धेनुर्बध्योगशुनकावपि। ऋतभागश्च किन्दासो व्ययस्काकोकरावपि। महाकुल. पृदाकुश्च निषादोऽथ परस्त्रिया। परशुष्टे स्वाङ्गीपवक. शिशुभामकविन्दवः। अश्वावतारश्यामाकसुपर्णा समुदीरिता। अत्र ये शब्दा अनृषिवाचकास्तेभ्यो गोत्रवाचकेभ्योऽन्तरापत्य एव ट्ण्। अतएव पौत्र. पौनर्भव. दौहित्र इत्यादि। ननु कथं, वा कुशिकास्यान्तरापत्यं कौशिको विश्वा-मित्रः कथं वा व्यवहितापत्ये इन्द्रहर्नाम सप्तमः काश्यपानां ष्वं लुगिति चेत् सत्यं क्वचिदपवादविषयेऽप्युत्सर्गो निविशत इति न्यायात् ऋषित्वेन भवितव्यम् अथवा वसेदमित्यर्थे ष्णेन। परस्त्रिया अपत्यं पारशवः ट्ण् परशवादेश.। अत्र परस्त्री-

## ४२५ । संख्यासंभद्रान्मातुर्ङुर्णे ।

सङ्ख्या स-भद्रात् ५।, मातु. ६।, ङुर् ।१।, णे ७।।

द्वैमातुरः ।

शब्देन भिन्नजातीया स्त्री वाच्या अतएव पारशवी विदुर तथाच पारशव पुमान् परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकार । अर्थान्तरे तु पारस्त्रै-णेय बाह्वादेराकृतिगणत्वात् विदस्यान्तरापत्य वैदिरित्यादौ णि न तु ऋषिणा । यद्यपि शिवादित्वात् णे कृते वैद इत्यादि सिद्धे विदादे पृथक् टृविधान मवद्धाध-नार्थम् । उत्सादे । उत्सादेष्ट्र स्यात् पृथक्योगादपत्यसामान्ये । उत्सस्यान्तरापत्यम् औत्स' जानपद इत्यादि उत्सादिर्यथा—उत्सो जनपदविनदौ धन्वा विकाच महा-नट तरुण' धेनु । भरत महानस पृथिवी देव' पक्तिर्जगती कुरुपञ्चालम् । उद-प्राणौ महाप्राण' ककुभस्तनुनो महान् । इन्द्रावसान विकारविष्टपुणिगनष्टम' । उशीनर' सुवर्णश्च भल्लकीयो रथन्तर' । बृहन्माध्यन्दिनश्चाथ सत्वतो नुण् भवेदिह । उदस्थानन्त् देशे से वयस्कोऽ शे वृषभत' । शेषोऽवृत्ते समाख्यात शेष' अयं प्रयोगत । इह कुरुशब्दस्य पाठात् कुरोरपत्यम् इत्यर्थे कौरव' इति जयादित्य' । सत्वतशब्दो वत्वन्तस्तस्य टृ' नुण् सत्वतोऽपत्य सात्वन्त पाठबलात् उदस्थाने भव औदस्थानो देश । अदेशे तु उदस्थान' कश्चित् तस्यापत्यम् औदस्थानि । वृषद-शब्दोऽ'शे वाच्ये टृ' वार्षद अनशे त वार्षद णा । ननु णटृयो को विशेष' इति चेत सत्य णान्तवार्षदस्य सङ्के वार्षदक' । टृान्तस्य तु वार्षद इति विशेष । अवृत्त इति वृत्त छन्द तस्मिन शेष अवृत्त इति किं शैषो विष्टविति ऋतुनचवादिति ण तस्माद्विकारे मयट शैषमयं टृान्ताद्विकारे शैषमिति विशेष ॥ ४२४ ॥

सङ्ख्यावाचकेभ्य समो भद्राच्च परस्य मातृशब्दस्य ङुर् स्यात णे ङित्यादन्त्यस्य स्थाने । ङुरो रेफस्य विसर्गाभाव' स्पष्टार्थ द्वयोर्मात्रोरपत्यं द्वैमातुर' । अत्र तद्धि-तार्थे विषये द्विगौ शेषत्वात् णे कृते एकपदीभावात द्विरिकारस्य वृद्धि । एवं तिसृणा मातृणामपत्य त्रैमातुर', षणां मातृणामपत्य' षाण्मातुर' समातुरपत्य' सामातुर' एवं भाद्रमातुर' ॥ ४२५ ॥

श्रीरा-टी—सङ्ख्या च सम् च भद्रश्च तत्तस्मात् सङ्ख्यावाचकात् समो भद्राच्च मातृशब्दस्य ङुर् स्यात् णे । ङित्वादन्त्यस्य सौवत्वान्न वि: द्वैमातुर इति द्वयोर्मात्रो-रपत्यमिति वाक्य' शेषात् णः एवं षाण्मातुर' ॥ ४२५ ॥

## ४२६। नन् पुंस्त्रियोः।

नन् ।१।, पुंस्त्रियोः ६॥।

पौंस्नः स्त्रैणः।

## ४२७। कुञ्जादेर्णायन्योऽस्त्रीत्वेऽपत्ये।

कुञ्जादे ५।, णायन्य १।, अस्त्रीत्वे ७।, अपत्ये ७।।

कुञ्जादेरपत्यार्थे णायन्यः स्यात् न तु स्त्रियां न च त्वे।
कौञ्जायन्यः ब्राध्नायन्यः। स्त्रीत्वे तु। कौञ्जायनी कुञ्जायनाः।

---

अनयोर्नन् स्यात् णे नित्त्वादन्ते। नकारोऽदन्तः। पुंसोऽपत्यं पौंस्नः तत्र णे परे पुम्स्शब्दस्य ननि कृते नकारस्य प्रकृत्यवयवत्वेन दान्तत्वाभावात् सकारस्य लोपो न स्यात्। यर्योर्लोप इति नकारस्य अकारलोपः। स्त्रिया अपत्यं स्त्रैणः एवम् इदमाद्यर्थे णे कृतेऽपि नन् स्यादेव। तेन पुंस इदं पौंस्नम् कर्म। स्त्रिया इदं स्त्रीणां समूहो वा स्त्रैणम्॥ ४२६॥

श्रीरा-टी—पुमांश्च स्त्री च ते तयोः॥ ४२६॥

स्त्री च त्वश्च स्त्रीत्वं न स्त्रीत्वम् अस्त्रीत्वं तस्मिन्। कुञ्जादिर्नडाद्यन्तर्गणः। कुञ्जस्यापत्यं कौञ्जायन्यः णित्त्वाद् वृद्धिः। ब्रध्नस्यापत्यं ब्राध्नायन्यः स्त्रीत्वे तु कुञ्जस्य स्त्र्यपत्यं कौञ्जायनी कुञ्जस्यापत्यानि कौञ्जायना इत्युभयत्र नडादित्वात् णायन एव। केचित्तु कुञ्जादेः प्रथमापत्ये णायन्यः णायनोऽपि न स्यात् अदन्तत्वात् णिरेव तेन कुञ्जस्य प्रथमापत्यं कौञ्जिरिति प्राहुः। कुञ्जादिस्तु। कुञ्ज ब्रध्न शङ्ख भस्मन् लोमन् गण शट शाक शुण्डा शुभा विपाश् स्कन्द स्कम्भ इत्यादि ।१३। तिकादिर्नडाद्यन्तर्गणत्वात् अपत्यार्थे णायनः तदन्तस्य प्रयोगाभावाद्यवद्वारीतिवत् णायनान्तात् स्वार्थे णिः। यथा तिकस्यापत्यं तैकायनिः। तिकादिस्तु। तिक कितव संज्ञा बाल शिखा आढ्या कौशल्या सैन्धव सुञ्ज रूप्य ग्राम्य नीड कुरु देवरथ तक्षिल औरस लाङ्कट कोकच चरियार्थ कौरव्य गोकर्ण भौरिकि भौलिकि तैकयत चैकयत वैकयत सैकयत ध्वाजयत चन्द्रमस् उरस् अमित शुभ गङ्गा वारुण्या बन्ध आवटी वद्यका खल्यका खोमका सुयामन उदन्य यज्ञवल्क गवेठ काकण्टर काक लङ्का चर्मिण इत्यादि।४७। एव त्यदादिर्नडाद्यन्तर्गणत्वात् णायनः तदन्तस्य प्रयोगाभावात्

स्यार्थे ष्णि.। यथा तस्यापत्यं तादायनि एवं यादायनि.। कैमायनि एवञ्च त्यदादि' ष्णिवादयन्तर्गणत्वात् ष्ण। यथा त्यस्यापत्य त्याद याद. कैम ॥ ४२७ ॥

श्रीरा टी—स्त्री च त्व च स्त्रीत्वे न स्त्रीत्वम् अस्त्रीत्वं तस्मिन्। अपत्यग्रहण पूर्वेण सामान्यविधानात् अत्र नडादान्तर्गणे आयन्येन आयनो बाध्यते तेनानन्तरापत्ये कौञ्जि. कौञ्जायन्य इति कुञ्जस्यान्तरापत्यमिति वाक्यम् एव ब्राध्नायन्य। कुञ्जादि-र्यथा। कुञ्जी ब्रध्नो बुधो लोम भस्म शङ्ख. शटो गण.। शौक शुभ्रा विपाशा च शुण्डा स्कम्भ' प्रकीर्त्तित। तिकादेर्नायनिर्वृषादेस्तु यम् च। तिकादेरपत्ये नायनि स्यात् वृषादेस्तु नायनेर्यम् ष न इञ्। तिकस्यापत्य तैकायनि कितवस्यापत्य कैतवायनि। तिकादिर्यथा। तिककितवौ वस वौतिब नौब भौरिकि भौलिकि वस्कारञ्च चौपयत कुरुसञ्ज्ञा यञ्च गड्डा खाडट शूद्रय सुनम्। खल्यका खोमका कण्य ग्राम्यश्वाजायता उर। शाठ्या वाखशिखा वैड्यत' सैकयतस्तथा। चैकयत खग्रामोऽथ कौरव्य. क्षत्रिये मत। मौकचञ्चन्द्रमाचे जयती रथान्तदा मता। इत्य. पाल्ला दैवरथोऽमिवा दन्म प्रकीर्त्तितम्। क्षत्रियार्थे कौरव्य षव्ययते तेन जनपदाख्यान्तस्य न तु कुर्वादिस्यान्तस्य, स तु ब्राह्मणवचनत्वात् ष्णेर्लुगेव जनपद-स्यान्तु कुरोरपत्यं युवा कौरव्यायणि: क्षत्रिय.। रथान्तात्तावत् गौरथस्यापत्य गौरथायणि: कार्मार्य्यायणि: कुर्वादित्वात् कार्मार्य्य.। कौशलो शब्दो जनपदवचन। ननु कथ कौशल्यायनि वल्लभामिति भट्टि'। उच्यते नृजातेरिति ईपि कौशल्या-यनी तस्यापत्य युवा इत्यर्थे आवादित्वात् ष्णेयस्तस्य लुक विधाय स्त्रीत्वस्य लुकि कौशल्यायनिरिति परे वस्तुतस्तु तिकादेराकृतिगणत्वात् नायनिरिति यथा च कौशल्यकार्मार्य्याभ्याञ्चेति पाणिनिसूत्रम्। वृद्धादनपत्याद वा पुत्रान्ताद वा किलादि-स्तुकश्च अनपत्यान्ताद वृद्धसञ्ज्ञकात् नायनिर्वा स्यात् पुत्रान्तात् वा किलादिभ्यश्च तेषा तुकन् ष न इञ्। आम्रगुप्तस्यापत्यम् आम्रगुप्तायनि नापितायनि एवं त्यादायनि तवापत्य त्वादायनि. युवयोर्युष्माक वा अपत्य यौष्मदायनि कथ भारतायनि वाशब्दस्य व्यवस्थावाचित्वात् पक्षे आम्रगुप्ति नापिति नापित्य त्याद-न्तस्यापत्य युवा त्यादायनि वृद्धादिति कि दैवदत्ति याज्ञदत्ति औपगव। अनपत्या-दिति किम् औपगवि. पुत्रान्तात् गार्गी पुत्रकायणि गार्गी पुत्रायणीति पूर्वेणैव सिद्धे कविधानार्थ. पाठ आयनाभावपक्षे गार्गीरिति पुत्रीरिति रूपत्रय वाकिलादि-स्तावत् वाकिलकायनि वाकिलायनि. वाकिलि। वाकिलादिर्यथा वाकिलश्चर्मि-गावेठौ काकलङ्का तथैव च। कार्कश्यवर्मिणावत षड् बुधै. परिकीर्त्तिता:। परे

तु कन् विकल्पयन्ति तन्मते वाकिनादेर्वैकल्पम् । अहृद्धादायनिर्वा । वाशब्दो बहुलार्थ. हृद्धसंज्ञकभिन्नादायनिर्वा स्यात् अपत्ये । ग्लुचुकस्यापत्यं ग्लुचुकायनिः पचे ग्लौचुकिः । आह्चिचुम्बकायनिः आह्चिचुम्बकिः बाहुल्यात् क्वचिन्न भवति तेन दचस्यापत्यं दाचिः ग्नाचिरित्यादि । यूनि लुक् नायने णस्य । नायने परस्य यूनि विहितस्य णस्य लुक् स्यात् । तिकस्यापत्यं तैकायनिः तस्यापत्यं युवा तैकायनिरित्यादि । कुलाददादिनो येन णेयका दादेस्त्वीन । दादिभिन्नात् कुलात् य इन णेयक एते स्यु दपूर्वादीन एव । कुलस्यापत्यं कुल्य कुलीन कौलेयकः बहुकुल्यः बहुकुलीन बाहुकुलेरकः । बहुत्यस्यादत्वात् दादेस्तु आढ्यकुलीन श्रोत्रियकुलीन । दुर्महद्‌भ्यां णेयकनीनौ वा । आभ्यां परात् कुलात् णेयकनीनौ क्रमाद्वा स्याताम् । दौकुलेयकः । अवग्रादित्वात् दौकुलेयः पचे दपूर्वत्वात् दुष्कुलीन महाकुलीनः उत्सादित्वात् माहाकुलः पचे महाकुलीनः । चत्रादियो जातौ । चत्रशब्दाज्जातावपत्ये इय स्यात् चत्रियः जातिः । जातावितिं किं चात्रिः । सौवीरगोत्रात् फाण्टाहृतिमिमतात् णणायनौ । सौवीरगोत्रात् फाण्टाहृतिमिमताच्च णणायनौ स्यातां फाण्टाहृतेरपत्यं फाण्टाहृतः । सौवीरगोत्रत्वात् यून्यस्य विषयः फाण्टाहृतायनि एव मिमतस्यापत्यं मैमतः मैमतायनिः । परे तु अल्पाच्छब्दस्य व्युत्क्रमनिर्देशात् यथासंख्यमिच्छन्ति तन्मते फाण्टाहृतः मैमतायनिः इत्येव सौवीरगोत्रादिति किं फाण्टाहृतायनः । मैमतायनः । देवपृथिवीभ्यां स्नणौ वा । आभ्यां क्रमात् स्नणौ वा स्यातामपत्ये । देवस्यापत्यं देवः पृथिव्या अपत्यं पार्थिवः स्त्रियां देव्या पार्थिवा उत्सादित्वात् दैवः पार्थिवः दैवी पार्थिवी । ~~मन्नान्तादौ~~ लोमान्तात्तु व्ये । मन् इत्यन्तात् स्यात् लोमन्नन्तात्तु व्ये । अश्वत्थामा नाम कश्चित् तस्यापत्यम् अश्वत्थाम उडुलोम्नोऽपत्यानि बहूनि उडुलोमाः । व्ये किम् औडुलोमि औडुलोमौ । रुढाद्राज्ञि च ट्न णस्तुद्राड् मगध कलिङ्ग शूरमसात् । अपत्ये राज्ञि च देशतुल्याख्यचत्रियात् ट्न स्यात् द्राङ् मगधादेस्तु ण पञ्चालानामपत्यं राजा वा इत्यर्थे पाञ्चालः वैदेहः । द्राजादेस्तु आङ्गः वाङ्गः सौह्मः मागधः कालिङ्गः शौरमसः । रुढादिति किं पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः । हृद्धे कोशलाजादाद्यान्धारिशाल्वेयात् स्यङ् । गान्धारिशाल्वेयभिन्नात् हृद्धादिकारात् कोशलादजादाच्चापत्ये राजनि च स्यङ् स्यात् ट्नणयोरपवादः आम्बष्ठस्यापत्यं राजा वा आम्बष्ठ्यः सौवीरस्यापत्यं राजा सौवीर्यः । कुन्तेर्जनपदचत्रियस्यापत्यं राजा वा कौन्त्यः अवन्तेरावन्त्यः कोशलस्य कौशल्यः आजात्यः स्त्रियामजादत्वादाप् आजात्या ।

## ४२८। गर्गयस्कविदादि-भृग्वत्रि-कुत्साङ्गिरो वशिष्ठ गोतम-रूढ़ाल्लुक् ष्वेऽस्त्रियाम्।

गर्ग—रूढात् ५।, लुक् ।१।, ष्वे ७, अस्त्रिया ७।

देशतुल्याख्यः क्षत्रियो रूढ़ः। एभ्यः परेषामुक्तानां त्यानां ष्वे विहितानां लुक् स्यात् न तु स्त्रियाम्।

गर्गाः वत्साः यस्काः लह्याः विदाः उर्वाः भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः अङ्गाः वङ्गाः कलिङ्गाः। स्त्रियान्तु भार्गव्यः।

---

कौन्त्यावन्त्ययोश्च कुन्ती अवन्ती कुरुकुन्त्यवन्तिभ्योऽपत्यस्य लुकि नृजातेरिति ईपि ङित्वात् पतिपुत्रादौ यङ् ई आम्बष्ठीपति आम्बष्ठीपुत्र इत्यादि। गान्धारिशाल्वेयास्तु गान्धार, शाल्वेय, पूर्वेण ट्न। कुर्वादिभ्यो ण्य पाण्डोर्डिच्च। कुरोर्निपूर्वशब्देभ्यो जनपदेभ्यो ण्य, स्यात् डिच्च पाण्डी। कुरोर्जनपदस्यापत्य राजा वा कौरव्य' कथ माघे कुकुरकौवरस्त्रिय तथा सरत्नु कौरवा इति उच्यते जनपदाविवक्षाया विषयो देश इत्यर्थे णे वा तस्येदमित्यर्थे वा। कथमक्षत्रियकौरव्या, परश इत्युपचारात्। न्यादे, निधनस्यापत्य राजा नैधन्य नैपुण्य नैषध्य पाण्डोर्जनपदस्य क्षत्रियस्यापत्य राजा वा पाण्ड्र डिति टिलोप। रूढ इति कि महाभारते पाण्डोरपत्य पाण्डव। न हि तस्य पाण्डुर्देश उडुम्बरादे ष्णि। रूढाद्राज्ञि चेति ट्नस्य बाधक, उडुम्बरस्य जनपदस्य क्षत्रियस्यापत्य राजा वा। औडुम्बरि तैलखलि। उडुम्बरिस्तिलखली मद्रकारी युगन्धर। भूलिङ्ग शरदण्डश्च कालकूटोऽश्वकस्तथा। प्रत्यग्रहे नव प्रोक्ता परे शिष्टप्रयोगत। केकय प्रलय मित्र यूना णिच्चे यादेरिय.। एषा यादेर्भागस्य णिच्चे इयादेश, स्यात्। केकयस्यापत्य कैकेय, प्रलयादागत प्रालेय हिम मित्रयोर्भाव, मैत्रेयिका गोत्रचरणात् णक. ॥ ४२७ ॥

गर्गश्च यस्कश्च विदश्च गर्गयस्कविदा ते आदयो येषा ते गर्गयस्कविदादय। आदिशब्दस्य प्रत्येकेन सम्बन्धात्। गर्गादियस्कादिविदादय इत्यर्थ। गर्गयस्कविदादयश्च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिरस् च वशिष्ठश्च गोतमश्च रूढश्चेति तस्मात्। अत्र अपत्ये इत्यनुवर्त्तते इत्यत आह उक्तानां त्यानामिति। अपत्यार्थ प्रत्ययाना-

मित्यर्थः। लुक्करणात् लुलोपे लुलक्षणमिति न्यायात् वृद्ध्यादिर्न स्यात्। गर्गस्यापत्यानि गर्गा एव वत्सा. आभ्या णस्य लुक्। यस्कस्यापत्यानि यस्का एव लह्याः विदस्यापत्यानि विदाः एवम् उर्वा भृगोरपत्यानि भृगव एभ्यः णस्य लुक्। अत्रेरपत्यानि अत्रय अत्र ढेयस्य लुक्। कुत्सस्यापत्यानि कुत्साः अङ्गिरसोऽपत्यानि अङ्गिरस वशिष्ठस्यापत्यानि वशिष्ठा. गोतमस्यापत्यानि गोतमा एभ्योऽपि णस्य लुक्। ब्बे किं गार्ग्य गार्ग्यौ एवं सर्वत्र। एकवचने द्विवचने च प्रत्ययस्थिति। देशतुल्याख्य इति। देशेन तुल्या आख्या नाम यस्य क्षत्रियस्य स देशतुल्याख्य क्षत्रियो रूढ इत्यर्थ। यथा वङ्गो देशविशेष वङ्गं पालयतीति ढघेकादिति अनित् णे वङ्गो राजा। वङ्गस्यापत्यानि वङ्गा एवम् अङ्गा कलिङ्गाः मत्स्या पञ्चाला. विदेहा मगधा इत्यादय एभ्योऽपि णस्य लुक्। एषामपि एकत्वद्वित्वयो वाङ्गः वाङ्गौ इत्यादयो बोध्या। देशतुल्याख्य इत्युपलक्षणम् कदाचित् प्रसिद्धक्षत्रियोऽपि रूढो वा वक्तव्य। तथा च गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतमिति। आचक्ष्व मत्वा वशिना रघूणा मन. परस्त्रीविमुखप्रवृत्ति इति च रघु। पायादपायात् सतत भवन्तं नाथो रघूणामथवा यदूनामित्युद्भट। स्त्रियान्तु भर्गी स्त्र्यपत्यानि भार्गव्यः अत्र णस्य न लोप। अपत्यार्थप्रत्ययानामिति किं भृगोरिमे भार्गवा मन्त्रा इति अत्र इदमर्थे कृतस्य णस्य लोपो न स्यात् एव प्रिया गर्गा यस्य स प्रियगर्ग अत्र समुदायस्य एकत्वेऽपि गार्ग्यशब्दस्य बहुत्वे प्रयुक्तत्वात् णास्य लोप स्यादेव। एवं प्रियो गार्ग्यौ येषा ते प्रियगार्ग्या अत्र समुदायस्य

[illegible]ऽपि गार्ग्यशब्दस्य एकत्वे प्रयुक्तत्वात् णास्य लोपो न स्यात्। एव प्रिययस्काः [illegible]स्का इत्यादयो बोध्याः। यस्कादिस्तु। यस्क लभ्य अय स्थूल तृण कर्णभ नन्दन वहिर्योग कर्णाटक पिण्डी जङ्घावक सूक्त वचस् अग्नर जङ्घारथ उत्कास कटक मन्तुक विष्णुपद उपरि मेखला क्रोष्टूकास्त क्रोष्टूपाद शीर्षमाथ शीर्षमाय पदक कर्षक विशिक्षवि अजवस्ति भडिल भण्डिल भडित खरप पुष्करसद् इति। ३३। विदादिस्तु। विद पुत्र उर्व कश्यप कुशिक भरद्वाज किलात किलदर्भ विश्वानर ऋष्टिषेण ऋतभाग हर्यश्व प्रियक अयस्तम्भ कुचराव शरद्वत् शुक्ल धेनु इति। १९। यस्कादिर्विदादिश्च द्वावेव शिवाद्यन्तर्गणौ। ततश्च द्वाभ्यामेकगणेऽत्रापि इष्टसिद्धौ गणद्वयकरणं प्राचामनुरोधात्॥ ४२८॥

श्रीरा टी—गर्गश्च यस्कश्च विदश्च ते आदयो येषा ते गर्गयस्कविदादय ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च गोतमश्च रूढश्च तत्तस्मात्। रूढशब्दस्य

व्युत्पत्तिमाह देशतुल्याख्य इत्यादि तथाच गर्गादि ष्यं यस्कादि ष्णा ष्णायनि ष्णि ष्णेया विदादि ट्र ञिचि ष्णेय भृगुकुत्साङ्गिरो वशिष्ठगौतम ष्ण रूढ षाट्र ष्णङ् खर्षि इत्येषां ब्वे लुगित्यर्थः। क्रमेणोदाहरति गर्गा इत्यादि। कद्वयोस्तु गार्ग्यः गार्ग्यौ यास्कः यास्कौ वैदः वैदौ भार्गवः भार्गवौ आत्रेयः आत्रेयौ कौत्सः कौत्सौ आङ्गिरसः आङ्गिरसौ वाशिष्ठः वाशिष्ठौ गौतमः गौतमौ आङ्गः आङ्गौ इत्यादि। एव ब्वे लुगिति किं गर्गाणां धनं गर्गधनम्। अङ्गधनमित्यादि ब्वे विहितानां त्यानामिति किं गार्ग्यश्च वात्स्यश्च आग्निवेश्यश्च ते गार्ग्यवात्स्याग्निवेश्याः एवं गार्ग्यौ च वात्स्यौ च आग्निवेश्यौ च ते गार्ग्यवात्स्याग्निवेश्या इत्यादौ लुग् न स्यात्। पारैकदेशिनस्तु एकवचनान्तानामपि द्वन्द्वसमासे वाक्ये समासे एकार्थाभावात् सहभावविवक्षाया बहुत्वे लुगित्याहुः। तेन गर्गवत्साग्निवेश्या इति उदाजह्रुः। प्रियवाङ्गा इत्युदाजह्रुरिति। गर्गविदादौ उक्तौ। यस्कादिर्यथा। यस्को लह्यवचोयस्तृणकलन्दतुर्णकर्णौ। भण्डितखरभाङ् तथा रूपा भाङ् सदा मत्तः। क्रोष्टु मायी वहिर्योग कण्टलीहारकर्षकौ। क्रोष्टुमाली विषपुट परिमेखलपादका, कर्णाटक क्रौष्टुपादस्तथा कटुकमन्थक। बकशफ्ता शीर्षमाय पिण्डीजङ्घस्तथैव च। जङ्घारथ, शीर्षमालल्लाराद्यासुरास्तथा। उपकाशोऽज वस्तिश्च विशि, क्षुदिरिमे वयः। यस्कादय षट् शिवादय भण्डितादय, पञ्च नडादयः अजवस्तादयस्त्रय अवग्रादय। शेषाणामदन्तत्वात्। यस्कादेराकृतिगणत्वात् पुष्करसच्छब्दोऽपि तेन पौष्करसादि, पौष्करसादौ ब्वे पुष्करसद। बह्वचो गोत्रस्य प्राच्यभरतेषु। कद्वच, शब्दात् प्राच्यभरतगोत्रविहितस्य त्यस्य लुक् स्यात् ब्वे। पन्नगारस्यान्तरापत्यं पान्नागारिः पान्नागारी ब्वे पान्नागारा। भरतगोत्रे यौधिष्ठिरि यौधिष्ठिरी युधिष्ठिरा। एवमार्जुनि आर्जुनी अर्जुना। बह्वच इति किं भैमि भैमी भैमय। अगस्त्यकुण्डिल्योरगस्तिकुण्डिलौ च। आभ्यां गोत्रत्यस्य ब्वे लुक् स्यात् लुकि सति अगस्तिकुण्डिल्योरगस्तिकुण्डिला वादेशौ क्रमात् स। अगस्त्यस्यान्तरापत्यम् ऋषिण आगस्त्य आगस्त्यौ ब्वे अगस्तय। कुण्डिन्या अपत्यं गर्गादित्वात् कौण्डिन्यः कौण्डिन्यौ कुण्डिना। तिककितवादेश्च ब्वे। गोत्रविहितस्य त्यस्य चे लुक् स्यात् ब्वे। तैकायनश्च कैतवायनश्च ते तिककितवाः। उपलभका कुब्जककुभा, उरीलङ्कटा, अग्निवेषकशेरका वङ्कुरभण्डीरथा पापकनरका वररया स्वरपरिशुङ्गा लङ्काशान्तमुखा कृष्णाजिन कृष्णसुन्दराः भष्टकपिष्ठिला इत्यादि। चे किं तैकायनय कैतवायनयश्च ब्वे किं

तैकायनिश्च कैतवायनीश्च तैकायनी कैतवायनी। उपकादिभ्यो वाचे च। उपकादिभ्यो द्वे विहितस्य गोत्रत्यस्य अचे चे च द्वे लुक् स्यात् वा। उपका औपकायना, लमका, लमकायना औपकायनाश्च लामकायनाश्च उपकलमकाः औपकायनलामकायनाः। उपकादिर्यथा। उपकलमकसुपिष्टमयूरं जटिलकवधिरकब्रह्मिकककर्षम्। पिष्टकपिष्ठिलभावी जह्वानुजकसलाखनकलसी कण्ठम्। कासकृतखी निदाघश्च मन्दक, कृष्णसुन्दर। कृष्णादिनावतारश्च अष्टकः कृष्णपिङ्गल। उन्दुकग्राहकस्थौ चाकटाबकक्रुसीतकौ। अनुलोमा प्रतिहत मतालो जपथस्तथा। उपकलमकौ नडादौ सुपिष्टादय श्विवादय। अनुलोमनशाहादि शेषाणामदन्तत्वात् ञिप्राप्ति। द्वे किं औपकायनश्च लामकायनी च औपकायनलामकायनाः गर्गविदादय. कृदयो ये। गर्गादेर्विदादेश्च ये वर्त्तमानस्य कृदयोर्विहितस्य गोत्रत्यस्य लुक् स्यात् वा। गार्गस्य गार्गयोर्वा धनम् गर्गधन गार्गधनम् एवं वैदस्य वैदयोर्वा धन विदधन वैदधनम्। रूढात् कम्बोजादेर्नित्यम्। कम्बोजादे रूढात् तद्राजापत्यत्यस्य लुक् नित्य स्यात्। कम्बोजजनपदस्यापत्य राजा वा कम्बोज कम्बोजौ कम्बोजा कम्बोज कैवलचोलभोजनिन्दखशाः शक इत्यादि। स्त्रियाम् कुरुकुन्त्यवन्तिभ्य। एभ्यो राजापत्योत्पन्नत्यस्य स्त्रिया लुक् स्यात। कुरोर्जनपदस्यापत्य स्त्री राज्ञी वा कुरु उत इत्यादिना ऊप् एव कुन्ती अवन्ती। ण्यडो लुकि नृजातेरित इति ईप्। अतश्चाप्राच्यभर्गयौधेयादे.। प्राग्गोत्रभर्गादियौधेयादिभिन्नाद्राजापत्योत्पन्नस्य अतस्त्यस्य स्त्रिया लुक् स्यात्। शूरसेनस्यापत्य स्त्री राज्ञी वा शूरसेनी इडविडोऽपत्य स्त्री राज्ञी वा इडविडी इत्यत्र टूस मद्रस्यापत्य स्त्री राज्ञी वा मद्री दरदोऽपत्य स्त्री राज्ञी वा दरच ण्यस्य वा लुक् लुकि जातेरत इति ईप् मद्रशूरसेनाभ्याम्। अत इति किं कौशल्या आजाया। अप्राच्यभर्गयौधेयादेरिति कि पाञ्चाली वैदेही मागधी आङ्गी वाङ्गी सौङ्गीत्यादि। भर्गादि. भार्गी कैकेयी। कथं प्राक् केकयीतो भरतस्तवोऽभूत् आद्यप्रकृतेर्व्वे नदादिपाठात् भागहृत्ति.। भर्गादिर्यथा भर्ग करूश कश्मीर: कौरव सुस्वकेकयौ। शाल्वोऽनुभवश्चैव भर्गादि परिकीर्त्तित। यौधेयादि यौधेयी शौभ्रेयीत्यादि। स्त्रियामिति चकारेणानुकर्षणान्न व्यमव। नगोपरणादे। गोपरणादेर्गोत्रत्यस्य लुङ् स्यात्। अव विदाद्यन्तर्गण। गौपरणी गौपरणा गौपरणस्य गौपरणयो कुल गौपरणकुलमित्यादि। उक्तोऽपत्याधिकार। ण्यो वेत्यादौ यमादिभ्यस्तु-पत्यवत्। ण्यायन्तान्ते. ण्य. स्यात् वेत्यादिष्वर्थेषु यमादिभ्यस्तु अपत्यवत् त्या स्यु। वेत्यादि-

गुणवचनेभ्यो ब्राह्मणादिभ्यः क्रियायाञ्च। ष्यन्तेभ्यो ब्राह्मणादिभ्यश्च भावे क्रियायाञ्च ष्यञ् स्यात् वा। मधुरस्य भाव क्रिया वा माधुर्य्यं जाड्य कार्श्यं कार्पण्यम्। यद्यपि दृढादीनां गुणवचनत्वादनेन सिद्ध्यति तथापि पूर्वत्र पाठ पृथ्वाद्यन्तर्गणत्वात् इमन्नर्थ। पुरुषोत्तमस्तु इमन्नर्थं कर्म्मणि ष्यञ् माभूदित्येतदर्थञ्च पाठ. इत्याह तन्मते जडकृशशब्दौ दृढादौ न पाठ्यौ। ब्राह्मणस्य भाव. क्रिया वा ब्राह्मण्यं मानव्य ब्राह्मणमानवचपलसद्भाव गडुलो रुद्रानिपुणविषायम्। मित्र तत्परदूत-विदग्ध परिषदिकपरमन्यविधर्म्मम्। मर्हितपुरोहितसारथितत्स्थ शिलिकौ धार्म्मिकसदृश सख्यम्। पिशुनो बालिशकुशलसमन्य विषमसमालसकविविष-मव्यम्। खण्डिकदण्डिकवाडवचौर वर्म्मिक शर्म्मिक सुकरसमग्रम्। सूचिकपूतिक-तरमदीन ग्रामिकरूपविशेषमुदासीनम्। आवाधयापवाधयविवाधयकापुरुषदुष्पुरु-षाश्च। उपवाधयविज्ञातौ प्रतिकूला: तीक्ष्णदायादा। सम्भाषी बहुभाषी सर्वेशौ शीर्षविघातिसमाजौ। पूर्वापरोत्तराधरपुन पुनरितिह धर्माश्च। एकभावविभावा-न्यभावकजलिका अपि। ज्येष्ठाभिरूपसर्वादिपरस्परमनीश्वर.। एकान्तकुशला रचा धूर्त्तो मध्यस्थ इत्यपि। अचेतज्ञानपूर्वञ्च प्रतिछेदविशन्ति च। पत्यन्ताश्च यथा कामविभावचतुरोचितम्। ब्राह्मणादिरिह प्रोक्त परे शिष्टप्रयोगत। ब्राह्मण-बालिशब्दयो: पाठ. ट्वाधनार्थं। विषायविशल्यो. तत्वबाधनार्थ. नैताभ्या तत्वमिति अन्येऽप्याहु। चौरधूर्त्तयोर्मनोज्ञादिसमावेशार्थं कुशल.हीनाञ्च खरादिगणसमा-वेशार्थं। आवाधयशब्दो जनपदवचनस्तस्मात् वृद्धे कौशल्यादिना ण्यङ् तथा उप-बाधयविबाधयापबाधयाश्च जनपदास्तेभ्य ट्र. ढात् कम्बोजादेर्लुक्नित्यमिति लुक् सतो गोत्रचरणविहित वुञबाधनार्थं एव मानववाडवयोरपि अनीश्वरादिप्रभृतीना नञादिति प्रतिषेधनार्थ.। पत्यन्तात्तावत् आधिपत्यं गाणपत्य प्राजापत्यम्। पत्यन्त-पुरोहितादिभ्य इति सूत्रयन्ति तन्नाद्रतमस्माभि. स्वरस्येहाप्रयोगात्। वा स्त्रियां रुद्रा-देरर्हतस्तु गुण् च। ष्यन्ताद्रुद्रादेर्भावक्रिययो ष्यञ् स्यादास च वा स्त्रीलिङ्ग अर्ह-तस्तु गुण् च। ब्राह्मणादित्वे सिद्धे लिङ्गव्यत्ययार्थं वचनम्। रुद्रस्य भाव: क्रिया वा रौद्री रौद्रं षिलादीपि ङीपि ष्यञस्य लोप.। रुद्रमित्रयथाकाम समग्रसचितन्तथा। चतुराणानुपूर्वञ्च रुद्रादि परिकीर्त्तित। अर्हतो भाव. क्रिया वा आर्हन्ती आर्हन्त्यं प्रशसायां टन्। राजसदन्ताच्च। ष्यन्ताद्राजशब्दात् तदन्ताच्च भावक्रिययो: ष्यञ् स्याद्वा ब्राह्मणादेरय प्रपञ्च.। राज्ञो भाव क्रिया वा राज्यम्। भावकर्म्मणे नस्य लोप. अधिराज्य प्रादिस.। दूतवणिग्भ्यां यश्च। ष्यन्ताभ्यामाभ्या भावक्रिययो. ष्यञ्

यद् वा स्यात्। दूतस्य भाव क्रिया वा दौत्यं दूत्य वाणिज्य वणिज्यं धन्ने दूतत्व वणिक्त्व प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। दूत्या भाव क्रिया वा दौत्य दूत्य दूतत्वमिति तथा चागतप्रियकथैव दौत्यमिति भारवि । अन्ये वणिक् शब्दस्य स्त्रीत्वमिच्छन्ति वाणिज्या वणिज्येति। दूतवणिग्भ्याञ्च वक्तव्यमिति न्यासकार । सखिस्तेनाभ्या नर्लोपश्च। योगविभागात् ष्णो नानुवर्त्तते ष्यन्ताभ्यामाभ्या भावक्रिययोर्य स्यात् स्तेनस्य नल्लोपश्च। सख्युर्भाव क्रिया वा सख्य स्तेनस्य भाव क्रिया वा स्तेय पक्षे सखित्व स्तेनत्व परे तु ब्राह्मणादित्वात् स्तैन्यमिति वदन्ति। घुपूर्व गन्तहायनान्तयुवादिभ्य ष्णा । ष्यन्तात् घुपूर्वगन्तात् हायनान्तात् युवादेश्च तयो ष्णा स्याद्वा। गुरोर्भावे गौरवमिति घुपूर्वगन्तत्वात् ष्णा एव पाटवमिति। पक्षे गुरुता गुरुत्वमिति पटुता पटुत्वं घुपूर्वेति किं शबुता शबुत्वं द्विहायनस्य भाव क्रिया वा द्वैहायन द्वैहायन युवादित्वात् मूले यौवनम् अविकारत्वे न नलोप । साम्यं वैरूप्य सौभाग्य सुभगादित्वात् द्वयोर्द्वयोर्वृद्धि ब्राह्मणादित्वात् सिद्ध वाणिज्यमिति राज्ञसदन्ताच्चेति ष्णा सौहृद्यमिति युवादित्वात्। युवाचपलवृषलस्वस्त्रीकुशलपिशुनयजमानसुहृदयानि। होता भ्राता दु स्त्रीकुस्त्रीकुण्डकवर्णकनिपुणाश्च। सुब्रह्मचारि सुभाटनद्धन् दुर्हृत् कुतूहला । चैवश्रयानृशसश्च दुर्हृदय कमण्डल । दुर्भात स्थविरौ श्रेयौ परिव्राजक इत्यपि । यदणा युवादौ स्युरष्टाविंशतिरीरिता । युव न्निति मनोज्ञादिसमावेशार्थं सुहृदयदुर्हृदयशब्दौ मित्रामित्रवाचकौ ब्राह्मणादिष्णासमावेशार्थौ। तेन सुहृदयस्य भाव क्रिया वा ष्णे कृते नित्य हृदादेश सुभगादित्वात् द्वयोर्वृद्धि सौहार्दं ष्ण्ये तु हृदयस्य हृल्लास इत्यादिना वा हृदादेश । सौहार्द सौहृदय्यम् एव दुर्हृदयस्य हृदादेशाभावपक्षे दौर्हृदयमिति वस्तुतस्तु हृदयपर्य्यायहृच्छब्दस्य सौहार्दं सुहृदयदुर्हृदयशब्दयोस्तु सौहृद सौहृदय्य दौर्हृद दौर्हृदयमिति। होतृस्थविरशब्दयो ट्ठसमावेशार्थं तेन सयाद्यर्थेषु ट्ठे कृते ष्ण: होत्र ष्णे कृते वृद्धादीय होत्रीयम् एव स्थाविरीयम्। कृतपुरुषाभ्याञ्चासे। ष्यन्ताभ्यामाभ्यां तयोरसे ष्णो वा स्यात्। क्षार्दं पौरुषम्। असे किं परमपुरुषत्वम्। श्रोत्रियस्येयस्य लोपश्च। श्रोत्रियस्य भाव क्रिया वा श्रौत्रं ष्णे इयस्य लोप.। होत्रादिप्राणिजातिवयोभ्य ट्ठ । ष्यन्तात् होत्रादे प्राणिजाते वयोवचनाच्च भावक्रिययो ट्ठ. स्याद्वा। होतुर्भाव क्रिया वा होत्रम्। होता भर्त्ता प्रशास्ता च उद्गातृगणकौ रथ । उन्नेता प्रतिहर्त्ता च अध्वर्यु. सुष्ठु दुष्ठु च। होतृ उद्गातृ उन्नेतृ अध्वर्यु इत्येषां पाठ होत्रादिभ्य. य इति बाधनार्थ । प्राणिजातेस्तावत् ।

गुनो भाव क्रिया वा शौवं रुरो रौरवं वयोवचनात्तावत् कौमारं स्थाविरम्। कपिज्ञातिभ्यां ष्णेय। ष्यन्ताभ्यां तयो ष्णेय स्याद्वा। कपेर्भाव क्रिया वा कापेय ज्ञातेय पक्षे कपिता कपित्व ज्ञातिता ज्ञातित्व कपिशब्दस्य यपूर्वेगन्त-त्वात् ष्णो बाध्यते। मनोज्ञादेर्षक। ष्यन्तान्मनोज्ञादेस्तयोर्षक स्याद्वा। मनो-ज्ञस्य भाव क्रिया वा मनोज्ञकम्। मनोज्ञकल्याणकुरूपपुत्रा युवा सहाय कुल-पुत्रवज्ञा। अमुष्यपुत्र परपुत्रधूर्त्तौ मेधाव्यवश्य बहुलश्च चौर। आढ्यकुलाभि-रूपेन्द्रकान्दसश्रोत्रिया अपि विश्वोदरस्तथा ग्राम्यपुत्रामुष्यकुलावपि। ग्रामात षण्ड कुमारो च परे च स्युः प्रयोगत। सहायचौरधूर्त्तानां ब्राह्मणादिष्वसमा-वेशाय तेन साहाय्य साहायकमिति अमुष्यपुत्रामुष्यकुलशब्दयोर्षकान्तकुलपुत्रयो-रिति ष्या न लुक् आमुष्य पुत्रिका आमुष्यकुलिका स्वभावात् स्त्रीत्वम् एव यौव-निका इति कश्चित्। बहुलशब्दस्य षे मनुसमावेशार्थ. तेन बाहुलक बाहुल्य बहिमा इत्यादि। युड् रूपोत्तमादसुप्रख्याच्च। य उङ् यस्य स युङ् उत्तमशब्द. स्वभावात् त्रिप्रभृतीनामन्त्यमाह उत्तमस्य समीपम् उपोत्तम रु उपोत्तम यस्य स रूपोत्तम युड् चासौ रूपोत्तमश्चेति स तस्मात् ष्यन्तात् भावक्रिययोर्षक स्यात् न तु सुप्रख्यात् रमणोयस्य भाव क्रिया वा रामणीयक रमणीयकम् युड् इति किं विमानता विमानत्वम्। रूपोत्तमादिति किं चत्रियत्वं चत्रियता। असुप्रख्या-दिति किं सौप्रख्य सुप्रख्यत्व सुप्रख्यता। चात् स्त्रियाम्। ष्यन्तात् कृतचसाद्भाव-क्रिययोर्षक स्यात् स च स्त्रियाम्। गोपालपशुपालाना भावः क्रिया वा गोपाल-पशुपालिका। शौर्य्योपाध्यायिका कौत्सकुशिकिका दैवासुरिका। गोत्रचरणाच्च श्लाघादौ। ष्यन्ताद्गोत्रवाचिनश्चरणवाचिनश्च भावक्रिययोर्षक स्यात् श्लाघादि-विषये। स च स्त्रियाम्। या आख्या अपत्यनिमित्ता सा गोत्रपदवाच्या अथवा ये पठ्यन्ते ते गोत्रपदवाच्या इति या आख्या वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा चरणपदवाच्या। गार्गिकया काठिकया च श्लाघते अधिक्षिपति तामवगतवान् प्राप्तवान् वा गार्गत्वेन श्लाघत आत्मनि कत्थन करोति अधिक्षिपति परान्निन्दति तामवगतवान् तच्छब्देन गोत्रचरणसम्बन्धिन्यौ भावक्रिये उच्येते ते ज्ञातवान् प्राप्त-वान् लब्धवान् इत्यर्थ। एवं काठत्वेन श्लाघते इत्यर्थ श्लाघादेरन्यत्र गार्गत्वम् काठत्वम्। ऋत्विग्भ्य ईय। ष्यन्तेभ्य ऋत्विग्विशेषवाचिभ्यो भावक्रिययोरीय स्यात्। मित्रावरुणीय. प्रस्तोत्रीय। मित्रावरुणप्रस्तोतृब्राह्मणाच्छसि पोतृ च। यावस्तुताद्भावौ च प्रतिप्रस्तोतृहोतृ च। छायाग्रेष्टा सुब्रह्मण्योऽच्छावागऽग्नीध्रमेव

च। अध्वर्युं प्रतिहर्त्ता च ब्रह्मोद्गाता च कीर्त्तित। एते पञ्चदशशब्दा ऋत्विग्विशेषवाचिन इति कात्यायन। ऋत्विगर्थाद् ब्रह्मणस्त्व। ऋत्विग्वाचिनो ब्रह्मशब्दाद्भावक्रिययोस्त्व स्यात् ब्रह्मणो भाव, क्रिया वा ब्रह्मणो भाव क्रिया वा ब्रह्मत्व नेति वक्तव्ये त्ववचनान्तबाधनार्थम्। ब्राह्मणार्थात् तु ब्रह्मत्वं ब्रह्मता। न नञो यादचतुरादे। नञ्पूर्वात् भृतात भावे क्रियायाञ्च उक्तास्त्या न स्यु, न चतुरादे। न शुक्ल अशुक्लस्तस्य भाव क्रिया वा अशुक्लत्वम् अशुक्लता अदृढत्वम् अदृढता अमधुरत्वम् अमधुरता अब्राह्मणत्वम् अब्राह्मणतेत्यादि यादिति कि नास्ति पटुर्यस्यापटुस्तस्य भाव अपाटवम्। अचतुरादेरिति किम् अचातुर्य्यम् अचतुरत्वम् अचतुरता न चतुरोऽचतुरस्तस्य भाव क्रिया वेति वाच्ये एवम् आसङ्गत्यम् आनरण्यम् आवल्यम् आरुच्यम् आबुध्यम् आवश्यम् आलस्यम्। धान्यवाचिनस्तन्नेवे णीन। ध्यन्तेभ्यो धान्यवाचिभ्यो णीन स्यात् तत्‌चेवे वाच्ये। मुद्गाना भवनं चेव मौद्गीनं कौलत्थीनं कौद्रवीणं धान्यीनमिति भागव्रति। शालिव्रीहिभ्या णेय.। ध्यन्ताभ्यामाभ्या चेवे वाच्ये णेय, स्यात् णीनस्यापवाद। शालीना भवन चेव शालेयं व्रैहेय चेव स्त्रियां शालेयी भू। यव यवक षष्टिकाभ्यो वा तु तिल भङ्गा माषाऽणुमाश्य। ध्यन्तेभ्य एभ्यस्तत्‌चेवे य स्यात् तिलादेस्तु वा। यवाना भवन चेव यव्यं यवक्य षष्टिक्यम्। यवकशब्दो कोरोधान्ये रूढ तिलादेस्तु तिल्यं भङ्ग्य माष्यम् आणव्यम् उम्य पक्षे तैलीनमित्यादि। भङ्गाशब्द कार्पासे वर्त्तते इति धातुप्रदीप। रक्षितस्तु भङ्गासमाख्यशस्येऽपीति विग्र इति। अश्वादेकाहगमे णीन। एकाहेन गम्यते एकाहगम, तस्मिन् वाच्ये अश्वशब्दात् णीन, स्यात्। अश्वस्य एकाहगम पन्था आश्वीन पन्था.। इदमर्थे। ध्यन्तादिदमर्थे वेच्यादिन्वात् ण स्यात् मूले विष्णोरिदमिति वाक्य भवादित्वात् ङ्गादीय: एव त्वदीय गार्गीय नादेय राष्ट्रीयमित्यादि। माघवनमिति मघोन इदमिति वाक्यं तेन उ अविकारणे न नलोप तुङ्पक्षे माघवतमिति शौवनमिति श्वन इदमिति वाक्यं द्वारादित्वात् वस्योम् पूर्ववन्न नलोप। यमादेस्तु याम्य प्राजापत्य पाशुपतम् आग्नेयम् कालेयम् औत्समित्यादि अत्र लिङ्गवचनमतन्त्रं तेन विष्णोरिय वैष्णवी विष्णोरिमौ वैष्णवावित्यादि। इदमिति सम्बन्धमात्रं विवक्षित तथाच शैव शिवसम्बन्धीत्यर्थ। रथरथान्तात् यो रथाङ्गे। ध्यन्तात् रथात् रथान्ताच्च इदमर्थे रथाङ्गे वाच्ये य, स्यात् णस्यापवाद। रथस्येदं रथ्यं चक्र परमरथ्य चक्र रथाङ्गम् इति कि रथस्येद स्थानमिति। वाहनवाहनादिपरिषदध्वर्य्युभ्य: ट्न,। वाहनवाचकात्

वाहनवाचिपूर्वशब्दात् परिषच्छब्दादश्वयशब्दाच इदमर्थे ट्र स्यात्। हस्तिन इद हास्ति आश्व आश्वम्। वाहनपूर्वात् हस्तिन चर्म्म हस्तिचर्म्म तस्येद हास्ति-चर्म्म आश्वशकटम्। पारिषद आश्वयवम्। जयादित्यस्तु वाहनादाञ्च एवार्थे वाहनपूर्वरथ्यशब्दाच त्यमुक्ता अश्वस्येद वहनीय आश्व यान अश्वरथस्येदम् आश्वरथ मित्याह तच्चाप्यादिविरुद्धमिति। हलसीराभ्या ष्ठिक्। हलस्येद हालिक सैरिकम्। अपत्यान्तकी शिष्यदण्डमानवयो। ष्यन्तादपत्यान्तादिदमर्थे ष्क स्यात् न तु शिष्ये दण्डमानवे च। ग्लुचुकायनेरिद ग्लौचुकायन औपगवकम्। अशिष्यदण्डमानवयोरिति किं दाचेरयमन्तेवासी दाच गौकच दण्डमानव दण्ड-प्रधानो मानव शाकपार्थिवादित्वाल्लोप। चरणाद्धर्म्माम्नाययो। ष्यन्ताच्चरण-वाचिन इदमर्थे धर्म्माम्नाययोर्वाच्ययोर्वुक स्यात्। कठस्याय धर्म्म आम्नायो वा काठक कालापक चरणा वेदनिमित्तेन पुरुषे वर्त्तमाना कठादयश्चरणवाचका आम्नाय पाठपरम्परा। नटौक्थिकबह्वृचच्छन्दोगयाज्ञिकाण्य। अन्तेभ्य एभ्य इद मर्थे धर्म्माम्नाययोर्वाच्ययोर्ण्य स्यात्। नटस्याय धर्म्म आम्नायो वा नाट्य औक्थिक्य बाह्वृच्य छान्दोग्य याज्ञिक्य। औक्थिक सामव्याख्यानाऽध्येता बह्वृच ऋग्वेदी छन्दोग सामवेदी याज्ञिको यज्ञविद्याध्येता। चाद्देवासुरादेरकौ वैर-विवाहयो। ष्यन्ताद्देवासुरादिभिन्नात् क्षतचसादिदमर्थे वैरविवाहयोर्वाच्ययोरक स्यात्। वैर विरोध काकस्य उलूकस्य तयोरिद वैर काकोलूकिका अश्वमहिषिका। अत्रियस्य भरद्वाजस्य तेषा विवाह अत्रिभरद्वाजिका कुत्सकुशिकिका गर्गयस्कोत्या-दिना ब्येऽपत्यस्य लुक् स्वभावादस्य स्त्रीत्वम्। देवासुरादेस्तु देवासुर रक्षोगन्धर्व यक्षोशीरमित्यादि देवासुरादेर्वैरम् एव निषेध इत्येके। अग्नीधो रण् गेहे नदञ्च ष्यन्तादग्नीध्शब्दादिदमर्थे रण् स्यात् गेहे वाच्ये तस्मिन् पूर्व दसञ्ज्ञ न स्यात्। अग्नीध इद गृहम् आग्नीध्रम् अग्निमिन्धे इत्यग्नीध् होता अन्तर्भावितञ्यन्तादिन्धधो क्विप्। समिध आधाने ष्य एनम् च। समिध् शब्दादाधाने वाच्ये इदमर्थे ष्य स्यात् ष्यस्य एनम् च, म इत्। समिध इदमाधान सामिधेन्यो मन्त्र सामि-धेनी ऋक् ईपि ष्यस्य लोप। रैवतिकादेरीय। ष्यन्ताद्रैवतिकादेरिदमर्थे ईय स्यात्। रैवतिकस्येद रैवतिकीय वैजवापीयम्। रैवतिको वैजवापि औरग्रीवौदमेघि च। चौमधृत्यौदवापी च स्वापिशि सप्त कीर्त्तिता। सर्वेभ्योऽप-त्यप्रत्ययान्तत्वात् ष्को बाध्यते। हास्तिपादकौपिञ्जलात् ष्ण। ष्यन्ताभ्यामाभ्यामिद मर्थे ष्ण स्यात्। हास्तिपादस्येद हास्तिपाद कौपिञ्जलस्येद कौपिञ्जलम्।

## ४३४ । ऋट्रो ये ।

ऋत् ।१।, र १।, ये ७। ।

पित्र्यम् ।

## ४३५ । हन्षन् धृतराज्ञामुङ्लोपः णे ।

हन् षन् धृतराज्ञा ६।।।, उङ्लोप १।, णे ७। ।

वार्त्रघ्न पौष्ण धार्त्तराज्ञम् । एषा किं सामनम् ।

---

अपत्यत्यान्ताभ्या णको बाध्यते । आथर्वणिकादथर्वणश्च । ध्यन्तादाथर्वणिकादिद-मर्थे ण स्यात् णे अथर्वणादेशश्च । अथर्वणा प्रोक्तम् आथवण तदधीते तद्वेत्ति वा आथर्वणिक पाठवलात् अध्येटवेदित्रोर्न लुक् आथर्वणिकस्याय धर्म्म आम्नायो वा आथर्वण धर्म्माम्नाययोरेवाभिधानात् आथर्वणिक गृहमित्यादौ न स्यात् । वोढु र्वहितश्च । ध्यन्ताद्वोढृशब्दादिदमर्थे ण स्यात् तस्मिन् वहितादेशश्च । वोढुरिद वाहित सपूर्वादपि सावाहितम् । णिण्यट्टात् सङ्घाङ्कघोषलक्षणे । ध्यन्तेभ्य णान्तण्यान्तट्टान्तेभ्य इदमर्थे सङ्घादिषु वाच्येषु ण स्यात् । दाक्षे सङ्घोऽङ्को घोषो लक्षण वा दाक्ष ग्राक्ष ण्यान्तात् गार्ग्य वात्स्य ट्टान्तात् वैद औत्स इत्यादि एभ्योऽपत्यत्यान्तेभ्यो णको बाध्यते गोवलीवर्दवदिहाङ्कलक्षणयोर्भेद । शाकला-त्सकश्च । ध्यन्ताच्छाकलशब्दादिदमर्थे सङ्घादिषु वाच्येषु णक स्यात् णस्यापवाद । शाकलेन प्रोक्तमधीते शाकल तस्य सङ्घोऽङ्को घोषो लक्षण वा शाकलक चका-रात् णश्च शाकल । नानन्तरादिषु । ध्यन्तादिदमर्थेऽनन्तरादिषु वाच्येषु इदमर्थे विहितास्त्या न स्यु । समुद्रस्येदम् अनन्तर दूर समीपमुपर्य्यधो वा इत्यादि ॥४३३॥

ऋकारो र स्यात्तद्धितये । पितुरिद पित्र्यम् अणित् ण्य । ये किं णित् कणि-पैतृकम् ॥ ४३४ ॥

श्रीरा-टी—ऋत् लुप्तषीक्त दम् । पित्र्यमिति पितुरिदमिति वाक्यम् अत्र ये रेफविधानात् य एव ॥ ४३४ ॥

हन् च षन् च धृतराजन् च ते तेषा उङो लोप । षन्निति मूर्द्धन्यषादि नकारोङ् दन्त्यनान्तोभाग. तस्य केवलस्य असम्भवात् उक्षन् पूषन् प्रभृतीना ग्रह-णम् । अधिकन्तु प्रविष्ट न तु तद्धानिरिति न्यायात् सदानोऽल्लोप इत्यनेनैवाल्लोपे

## ४३६ । युष्मदस्मद्त्वन्मदां युष्माकास्माक-तवकममकाः ष्णखीने ।

युष्मद्-मदा ६।।।, युष्माक ममका १।।।, ष्णखीने ७। ।

**यौष्माकं यौष्माकीणं, आस्माकम् आस्माकीनं, तावकं तावकीन, मामकं मामकीनम्। सूर्य्याय हित सौरीयम् आगस्तीयम् आत्मनीनम्। चोर एव चौर. त्रैलोक्य रामक:।**

---

उद्धे इद नियमार्थ तेन ष्णे परे एषामेव उड् लोप स्यान्नान्यस्य इत्यर्थ । इवन्न द वार्त्तघ्नम् अत्र ष्णे परे वृद्धौ अनेन अल्लोपे हनोर्घ्नीघ्न एव पूष्ण पौष्ण धृतराज्ञ ार्त्तराज्ञम् उभयत्र ष्णे वृद्धौ उड्लोप । उच्णस्तु अपत्यार्थे ष्णे औच्ण इति [व]मुदाहृतम् इदमर्थे ष्णे तु मनववर्ज्जेत्यनेन अपत्यार्थभिन्ने ष्णे नकारलोपादुड्-[ल]ोपाभावे औच चर्म । एषा कि साम्न इद सामनम् अत्र ष्णे पूर्वेणापि उड् लोपो [न] स्यात् ॥ ४३५ ॥

औरा-टी—हश्च पूषश्च धृतराजश्च ते तेषा उडो लोप उड् लोप । हनन्त [पू]नन्त धृतराजन् इत्येषा ष्णे परे उडो लोप स्यात्। वार्त्तघ्नम् इति इवघ्न इद-मित्यर्थे ष्ण अनेन उडो लोपे हनोर्घ्नीघ्न इति घ्न । पौष्णमिति पूष्ण इद ष्णे उडो लोपे णत्वञ्च एवमौच्णम्। धार्त्तराज्ञमिति धृतो राजा येन धृतराजा तस्येद ष्णे उडो लोपे चुत्व सवर्णविकारणे नलोपाभाव । सदानोऽल्लोप इत्यनेन उडो लोपे प्राप्ते नियमार्थ वचन तेन साम्न इद सामनमित्यादौ न स्यात् ॥ ४३५ ॥

युष्मद् अस्मद् त्वद् मद् एषा स्थाने क्रमात् युष्माक अस्माक तवक ममक एते आदेशा स्यु ष्णे खीने च परे। युष्माकमिदमित्यर्थे ष्णे खीने च विभक्तेर्लुकि युष्मद् स्थाने युष्माकादेशे वृद्धौ यौष्माक यौष्माकीणम् एवम् आस्माकम् आस्माकीनमिति एव तव इदम् इत्यर्थे ष्णे खीने च क्तेर्लुकि युष्मद एकत्वात् त्वदादेशे तस्य च तवका-देशे वृद्धौ तावक तावकीनम् एव मामक मामकीनमिति। सूर्य्याय हित सौरीयम् अत्र खीये वृद्धौ सूर्य्यागस्त्यस्येति यलोप । एवम् आगस्तीयम् आत्मने हितम् आत्म-नीनम् अत्र खीने अध्वात्मनोरीने इति नलोपनिषेध । स्वार्थमुदाहरति। चोर एव चौर. अत्र ष्ण वृद्धि. त्रिलोकी एव त्रैलोक्यम् अत्र ष्णे वृद्धौ यथोर्लोप. इत्यकारलोप.।

स्वार्थप्रत्ययान्तास्तल्लिङ्गा एव इति नियमेऽपि अस्य क्लीवत्वमभिधानात्। ग्राम एव ग्रामक अव कण्। कण्प्रत्ययस्य स्वार्थादतिरिक्तोऽप्यर्थः यथा अज्ञाने कुत्सिते चैव सञ्ज्ञायमनुकम्पने। तद्युक्तनीतावल्पे वाच्ये ह्रस्वे च क स्मृत इति प्राहु। यथा अश्वक कस्यायमश्व कुत्सितो वा इत्यर्थः। इत्यादौ कणोऽणित्त्वान्न वृद्धि। विप्रक कुत्सितो विप्र इत्यर्थ। सञ्ज्ञाया देवदत्तक यज्ञदत्तक अनुकम्पाया वत्सक दुर्बलक बुभुक्षितक पुत्रक अनुकम्पायुक्तनीतौ आर्जवित्त गृहच्छिद्र यत्नात् कुर्वीत गुप्तकम्। अल्पे तैलक ह्रस्वे वृक्षकम् ॥ ४३६ ॥

श्रीरा टी—युष्मच्च अस्मच्च त्वच्च मच्च ते तेषां युष्माकश्च अस्माकश्च तवकश्च ममकश्च ते। णश्च खीनश्च तत्तस्मिन्। एषामेते क्रमात् स्यु णखीनयो परयोः। यौष्माकमित्यादि युवयोर्युष्माकमित्यर्थे युष्मदो युष्माकादेश णखीनयो। यौष्माकीणमित्यत्र णत्वम् एवमास्माकमिति आस्माकीनमिति आवयोरस्माकं वा इदमिति वाक्यम्। तावकमित्यादि तवेदमिति वाक्यम्। णखीनयोरिति किं युष्मदीयम् अस्मदीय त्वदीय मदीय एते वत्सादीय। च्या ईयो हितेऽराजादेः। च्यन्ताद्धितेऽर्थे ईय स्यात् न तु राजादेः। मूले सूर्यीय हितमिति सूर्यस्याय धर्म्मः सौर्य्यः तस्मै हितमित्यर्थे ईये कृते सूर्यागस्त्ययोरिति यलोप। एवमागस्तीयमिति एवं सूर्याय हित सूरीयम् एवमागस्तीय नर्म्मीयमित्यादि। राजादेस्तु राज्ञे हितम्। राजा ब्राह्मण आचार्य्यो वृषलोऽन्ये प्रयोगत। यद्यपि च्यन्तस्य ण्यन्तभिन्नत्व तथापि ण्यविहितायाश्च्या ग्रहणात् पूर्वेण नैव ग्रहण इत्यादावाहनम्। च्या इत्यधिकार भ्रग प्राक। सर्वात्स्य। च्यन्तात् सर्वशब्दात् हितेऽर्थे ईयो नश्च स्यात्। सर्व्वेभ्यो हित सर्वीय सार्वं स्त्रिया सर्वीया सार्वी। प्राण्यङ्गतदन्तब्रह्मादेर्य। च्यन्तात् प्राण्यङ्गवाचकात् प्राण्यङ्गवाचकान्तात् ब्रह्मादेश्च हितेऽर्थे य स्यात् ईयस्यापवाद। दन्तेभ्यो हित दन्त्यम् ओष्ठ्य राजदन्त्य राजोष्ठ्य शीर्षण्या केश्या ब्रह्मणे हित ब्रह्मण्यम् अभावकर्म्मणे न नलोप। ब्रह्मातिस्ववर्णौ मायरथौ खलवृषे इति शिरसे हित शीर्षण्यम्। अव्जात्या ख्य। च्यन्ताभ्यामाभ्या हितेऽर्थे ख्य स्यात्। अवये हिता अविख्या शाला अजाय हिता अजख्या भूमि प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणमिति न्यायात् अजायै हिता अजख्या इत्यपि च। आत्म-भोगोत्तरदाश्वादीन। च्यन्तादात्मन्शब्दात् भोगोत्तरदाश्च हितेऽर्थे ईन स्यात्। मूले आत्मनीनमिति आत्मने हितमिति वाक्यम् अध्वात्मनोरीन इति न लोप। भोगशब्द शरीरवाची राज्ञो भोग राजभोग तस्मै हित राजभोगीन मातृभोगीन

छुभृगदिलाद्रथ । चरकमानवाभ्या खित् । चन्ताभ्यामाभ्या हितेऽर्थे ईनी खित् स्यात् । चरकाय हित चारकीण मानवीनम् । विश्वजनादेर्ये । चन्तात् विश्व जनादेर्हितेऽर्थे ईन स्यात् यसे सति । विश्वजनाय हित विश्वजनीन य इति किं विश्वे जना यस्य तस्मै हित विश्वजनीयम् । भाष्ये तु सामानाधिकरण्यभावेऽभिधान तन्मने विश्वस्य जनो विश्वजनस्तस्मै हित विश्वजनीय सर्वजनीयमिति प्रत्युदाहरण पूर्वव विश्वजनीनमिति । सर्वजनमहाजनाभ्या णिक । चन्ताभ्यामाभ्या हितेऽर्थे णिक स्यात् यसे सति । सर्वजनाय हित सार्वजनिक विश्वजनादिपाठाच्च सर्व-जनीन इति पूर्वेण महाजनिक । य इति कि सर्वेषा जन तस्मै हित सर्वजनीय महान् जनो यस्य तस्मै हित महाजनीयमिति । पुरुषात् णेयस्तद्वधतत्कृतयो । चन्तात् पुरुषशब्दात् हितेऽर्थे तद्वधे तत्कृते च वाच्ये णेय स्यात् । पुरुषाय हित पौरुषेयो वध पुरुषकारश्च । कसपरशुभ्या लुक् विकारार्थे । आभ्या हितार्थे लुक् स्यात् विकारार्थे ले परे । कसीयस्य विकार कास्य परशव्यस्य विकार. पारशवम् । परशोर्हितादौ यो वक्ष्यते । ईयो विकारादुपादानकारणे तादर्थ्ये । प्रकृतेरवस्थान्तर विकार तदर्थात उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ईय स्यात् । अङ्गारेभ्य एतानि काष्ठानि अङ्गारीयाणि काष्ठानि अङ्गारशब्दो विका-रार्थस्तस्योपदान काष्ठ तस्य तादर्थ्य गम्यते । एव प्राकारीया इष्टका इत्यादि । तादर्थ्य इति कि धान्याना यवा. विकारादिति किम् उदकाय कूप । छदिर्बलिभ्या णेय । चन्ताभ्यामाभ्या विकारार्थाभ्यामुपादानकारणे वाच्ये तादर्थ्ये गम्यमाने णेय स्यात् । छदिषे तृणानि छादिषेयाणि तृणानि बालेयास्तण्डुला । ऋषभो-पानह्रा ण्य । चन्ताभ्यामाभ्या विकारवाचकाभ्याम् उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ण्य स्यात् ऋषभाय वत्स आर्षभ्यो वत्स औपानह्य काष्ठम् । चर्मणि ट्रोऽनुपानह । चन्तादुपानच्छब्दभिन्नात् विकारार्थादुपादानकारणे चर्मणि वाच्ये तादर्थ्ये गम्यमाने ट्र स्यात् । वरत्रायै चर्म वारत्र चर्म व्याघ्र चर्म । अनुपानह इति किम् औपानह्य चर्म । ब्रह्माद्यादेरित्यत. सर्वत्र तदन्तविधिरिष्यत इति न्यासकारस्तेन परमब्रह्मण्य परमादित्या परमाजव्या परमात्मनीन परमविश्व-जनीय पारममहाजनिक पारमचरकीण परमाङ्गारीय काष्ठ परमवरत्रायै चर्म पारमवरत्र चर्मेत्याद । विकारार्थादुपादानकारणे येत्या एकास्ते हितार्थे भवन्तीत्यन्ये तेषा मतेऽङ्गाराय हितम् अङ्गारीय छादिषेयमित्यादि । हितादावु-गवादेर्योऽपूपादिहविर्वाचिभ्यस्तु वा । चन्तादुवर्णान्ताद्गवादेश्च हितादावर्थे य

स्यात् अपूपादेर्हविर्वाचिभ्यश्च वा। धेनवे हित धेनव्य बध्वै हित वधव्यं ग्रल-ऋग्चर्मविकारार्थ, तस्मात् ट्टं बाधित्वाऽनेन य ग्रलङ्गवे चर्म ग्रलङ्गव्यं चर्म। गवादिस्तावत् गवे हित गव्य हविष्यम्। गोहविर्युगमेधाविविस्त्रद्दसादक्रपस्तु चा। दशैकादशक मीक्तमम्बरं वहिरष्टका। अपूपादिस्तावत् अपूपाय हितम् अपूप्यम् अपूपीय पृथुक पृथुकीकम्। अपूप पृथुकौऽभ्यूषी धूमार्थोपिचुणा सह। स्थूना-कटकस्तिन्नानि प्रदीपो दीपतण्डुलौ। अन्नपादाऽथ सर्वेऽन्नविकारा इह कीर्त्तिता। सर्वेऽन्ने विकारवाचका अपूपादयः यथा पिष्टाय हित पिष्ट्य पिष्टीय शक्तुशब्दा दवर्णान्तत्वात् पूर्वेण नित्यम्। शक्तव्यम्। हविर्वाचिनस्तावत् आमिक्षायै हित आमिक्षीय पुरोडाशेभ्यस्तण्डुला, पुरोडाश्या पुरोडाशीया, तण्डुला। चरुशब्दा-दुवर्णान्तत्वात् हवि शब्दात् गवादित्वात् पूर्वेण नित्य चरव्य हविष्यमिति। उधसो नङ् च। चत्वादुधशब्दाद य स्यात् हितादौ तस्मिन् नङ् च अङ्गावितौ। उधसे हितम् उधन्यम्। शुन शुनशनौ च। चत्वात् श्वन्शब्दात् हितादौ य स्यात् तस्मिन् शुनशूनौ इत्येतौ स्याताम्। शुने हित शुन्य शून्यम्। नाम्नि कम्बलात्। चत्वात् कम्बलशब्दात् हितादौ य स्यात् नाम्नि गम्यमाने। कम्बलाय हितम् उपादानकारण वा कम्बल्य ऊर्णा पलशतम्। नामीति किं कम्बलीया ऊर्णा। अप्राण्यङ्गे नाभिर्नभश्च। चत्वान्नाभिशब्दात हितादौ य स्यात् अप्राण्यङ्गे तस्मिन्ना-भेर्नभादेश। रथैकदेशो नाभि नाभये हितम् उपादानकारण वा नभ्य काष्ठम्। अप्राण्यङ्ग इति किं नाभये हित नाभ्य तैल प्राण्यङ्गवाचित्वाद य पूर्वस्यैव। गवादित्व सदैव तदन्तविधिरिति जयादित्य। तेन परमगव्यं यवापूप्य यवापूपीय परमामिक्ष्य परमामिक्षीय परमौदन्यं परमशुन्य परमनभ्यम् इत्यादि। हितादि -रिह हित तादर्थ्ये उपादानकारणम् उपादानकारण चर्म इति। सन्तापादे -ष्णिक प्रभवति। चत्वात् सन्तापादेः प्रभवत्यर्थे ष्णिकः स्यात्। सन्तापाय प्रभवति सान्तापिकः। सन्तापमासप्रवेशशक्तुसङ्घातमौदन। उपवासप्रवासोपसर्ग सम्पादनन्तथा। मासौदनञ्च सन्नाह, सयोगश्च प्रकीर्त्तित। पारायणामापवास्तु कर्मा निष्पेय इत्यपि। निसर्गश्च विसर्गश्च धीरेकोनविंशति। योगादश्च। योगाय प्रभवति योग्य, यौगिकश्च। कर्म्मणो णुक। चत्वात् कर्मशब्दात् प्रभवत्यर्थे णुकः स्यात् य इत्। कर्म्मणे प्रभवति कार्मुक धनु। अतिथेर्ष्य तादर्थ्येऽणिश्च देवतान्त-पादार्घेभ्य। चत्वादतिथेर्ष्य स्यात् तादर्थ्ये देवतान्तादेस्तु णित्। अतिथये जलम् आतिथ्यम् अतिथ्यर्थमित्यर्थः। पितृदेवतायै इद पितृदैवत्यम् अग्निदैवत्यम्

पादाय इदं पाद्यम् अर्घाय इदम् अर्घ्यम्। प्रज्ञा'। प्रज्ञा इत्यधिक्रियते चातुरर्थिकात् प्राक्। ण प्रज्ञादे' स्वार्थे वा। प्रज्ञान्तात् प्रज्ञादे, स्वार्थे ण स्याद्वा। प्रजानातीति प्रज्ञ प्रज्ञ एव प्राज्ञ पचे प्रज्ञ' मूले चौर एवेति। प्रज्ञ चौर वणिक् विद्या देवता वसुवन्धव। उष्णिक् साधारणक्रुञ्च पिशाचासुरशत्रव'। सत्वदाश्रयणाऽग्नीध्रवयो वचोमलोहित। मरुत् प्रत्यच चचू षि विपति व्याहृतौ विदन्। चिर्कीर्षद योध जुह्वन्तचण्डाल विखरीऽपि च। अग्रहायण इत्येते विशच्च द्व्याधिका इह। साधारणशब्दोऽनत्यान्त स्त्रिया साधारणैव साधारणी। सत्वच्छब्दोऽसर्थो शत्‌ सत् तस्मात वत सत्वन् स एव सात्वत विददिति शवन्त' कृष्णमृगार्थः जुह्वदिति शवन्त कृष्णमृगार्थ जुह्वन्नेव जौह्वत कृष्णमृग.। आकृतिगणोऽयम्। छन्दोभ्य। प्रज्ञान्तेभ्य छन्दोवाचिभ्य स्वार्थे ण स्याद्वा। त्रिष्टुवेव त्रैष्टुभ जागत गायत्र स्वभावात् क्लीवत्व पचे त्रिष्टुवित्यादि। सन्देशवाग्युक्तात् कर्म्मण। प्रज्ञान्तात् सन्देशवाचा युक्तोऽर्थे वर्त्तमानात् कर्म्मशब्दात् स्वार्थे ण स्याद्वा। कर्म्मैव कार्म्मण' यद्वाचिक श्रुत्वा वशीकरणादिकर्म्मानुष्ठीयते तदेवोच्यते। कृष्णविसारिभ्या मृगमत्स्ययो। प्रज्ञान्ताभ्यामाभ्या क्रमादनयोर्वर्त्तमानाभ्या णो वा स्यात्। कृष्ण एव कार्ष्णो मृगः विसार्य्येव वैसारिणो मत्स्य इनोऽकलापादेरिति न नलोप पचे कृष्ण विसारी श्रोत्रौषधिभ्या शरीरजात्यो। प्रज्ञान्ताभ्यामाभ्याम् अनयो क्रमाद्वर्त्तमानाभ्या स्वार्थे णो वा स्यात्। श्रोत्रमेव श्रौत्र शरीर मणिवन्धवाचके तु न भवति ओषधिरेवौषधम् ओषधिभिरवकन्दादिजातौ तु ओषधि फलपाकान्ता जाति। विनयादे' ष्णिक' उपायस्य ह्रस्व। प्रज्ञान्ताद्विनयादे' स्वार्थे ष्णिक स्याद्वा उपायशब्दस्य ष्णिके ह्रस्व। विनय एव वैनयिक विनयव्यवहारोपचाराऽत्यन्ताऽनुगामिनः। सम्प्रदाय समुत्कर्ष विशेष विषयात्यया। समाहारसमूहौ चाकस्मात् समयसङ्गति' व्यासादेशौ च सम्प्रीता सत्तभिर्दश कीर्विदे। अकस्मादेव आकस्मिक टेर्लोप। व्यास एव वैयासिकः तेन निर्वृत्ता वैयासिकी संहिता इति आदिश्यतेऽसौ आदेश' आदेश एव आदेशिक। उपाय एव औपयिक ष्णिके ह्र'। अस्याकृतिगणत्वात् चातुरर्थिक इत्यादि। वाच सन्देशे। प्रज्ञान्तात् सन्देशे वर्त्तमानात् वाच्शब्दात् स्वार्थे ष्णिक, स्यात् ष्णिक विनैव शब्दवृत्त्यभावात् विकल्पप्रकरणे नित्योऽय विधि। वाचिक सन्देश। सन्देश इति किं वागस्य मधुरा। चतुर्वर्णादे ष्ण्य। प्रज्ञान्ता चतुर्वर्णादे स्वार्थे ष्ण्य' स्याद्वा चतुर्वर्णा एव चातुर्वर्ण्य' चतुर्वर्णसुखाऽनन्त चतुराश्रमषड्गुणा। त्रिलोकी सर्वदेवश्च सेना भेषजसन्निधि.। त्रिकालावसथौ चैव समीप-

मणिकोपमा। विषष्टिरितिह प्रोक्ता कोविदैर्दशसप्तति। मूले वैलोक्यमिति इतिह एव ऐतिह्यम्। यावादे क। अन्ताद् यावादे क स्वार्थ। याव एव यावक। यावमानसमुद्गाढज्ञाताऽज्ञाताच्चिर्भिन्नव। चन्द्रो रामगडुसन्निपुष्टदृताश्चतुर्दश। मूले रामक इति। आकृतिगणोऽयं तेन पीतक इति। वृहत्यणु पुवतनुभ्य आच्छादन निपुण क्रिमि सूत्रेषु। अन्तेभ्य एभ्य एष्वर्थेषु क्रमाद्वर्त्तमानेभ्य एभ्य स्वार्थे क स्वाद्दा। वृहत्येव वृहतिका आच्छादनविशेष अन्यव वृहती ओषधि अणुरेव अणुक निपुण अन्यव अणु सूक्ष्म। पुव एव पुवक क्रिमि अन्यव पुव। तनु एव तनुक सूवम् अन्यव तनुरेव। शीतोष्णाभ्यामृतौ। अन्ताभ्यामाभ्याम् ऋतौ वाच्ये क स्वाद्दा स्वार्थे। शीत एव शीतक उष्णक ऋतु अन्यव शीतो वायु उष्ण कम्बल। लूनविपाताभ्या पशौ। ष्यन्ताभ्यामाभ्या पशौ वर्त्तमानाभ्या स्वार्थे क स्वाद्दा। लून एव लूनक पशु विपातक पशु अन्यव लून विपात। कुमारखेलनेभ्य। कुमारै खेल्यते येन तद्दाचिभ्य स्वार्थे क स्वाद्दा। कन्दुरेव कन्दुक भ्रमक गिरिक शृङ्गक पचे कन्दुरित्यादि। स्नातशून्यलोहितेभ्यो वेदसमाप्तिरिक्तमणिषु। अन्तेभ्य एभ्य एष्वर्थेषु क्रमात् स्वार्थे क स्वाद्दा। वेद समाप्य स्नात स एव स्नातक अन्यव स्नात। शून्य एव शून्यक धनादिहीन इत्यर्थ। लोहित एव लोहितको मणि. अन्यव लोहित। प्रियादेर्जातौ। अन्ताज्जातौ प्रियादे स्वार्थे क स्वाद्दा। प्रिय एव प्रियक चिवक मृगजाति गुह्य एव गुह्यको देवयोनिजाति गोल एव गोलक कुब्राह्मणजाति। कुञ्ज एव कुञ्जक तरुजाति इत्यादय प्रयोगदर्शनात् ज्ञातव्या। काललोहिताभ्यामनित्यवर्णे। अन्ताभ्यामाभ्यामनित्यवर्णे वर्त्तमानाभ्या स्वार्थे क स्वाद्दा। काल एव कालको वैलचण्येन लोहित एव लोहितक पीडनेन तदनित्य यत् कदाचित् भवति कदाचिन्न भवति गुणवृत्तेरस्य द्रव्यवाचित्वे त्यो विधीयते न तु गुणवृत्तेरिति। अनित्य इति किं काला लोहिता गौ। यावत् द्रव्यभावित्वान्नित्यो वर्ण। वर्ण इति किम् असति वर्णग्रहणे नित्य इति द्रव्यस्यापि विशेषण स्यात् तर्हि लोहितिका समुद्रा पार्थिवा परमाणव इत्यव को न स्यात् तेषा नित्यत्वात् सति वर्णग्रहणे नित्येऽपि द्रव्येऽनित्ये वर्णे त्य सिद्ध्यति। रक्ताच। रक्तार्थे विहितात् स्वार्थे को वा स्यात्। कालेन रक्त काल काल एव कालक वा लोहितक काललोहिताभ्यामेव विधि यदा ऽनयोर्यावत् द्रव्यभाविता तदैवोदाहरणमनित्यतायान्तु पूर्वत्रैव। लोहिनीशब्दादपि के खे लोहिनिकेति भवति अन्यव लोहिनेति। अनात्यन्तिके क्तात्। अन्ताद-

मात्यन्तिकविशिष्टे वर्त्तमानात् क्तान्तात् स्वार्थे को वा स्यादनात्यन्तिकं भिन्न भिन्नकम् अनात्यन्तिक इति किं भिन्नम् अत्यन्तमेव भिन्नमित्यर्थः। सामिकृतम् अर्द्धभुक्तमेमिकृतमित्यत्र न भवति अनात्यन्तिकस्य साम्यादिभिरुक्तत्वात् स्वय साम्योक्तेनेतिवस । अर्द्धभुक्तमित्यत्र साम्यार्थे स इत्येके। अथवा विशेषण स. हसी वा। बहुभिन्नोपपन्नसुकरादेस्तरात्। प्रग्रन्तात् बह्वादिपूर्वतरात् स्वार्थे क. स्याद्वा। बहुतरकम् अभिन्नतरकम् उपपन्नतरक सुकरतरक तरादिति किं बहुतरमित्यादि। ईयसो । प्रग्रन्तादीयसुत्यान्तात् स्वार्थे क स्याद्वा। श्रेयानेव श्रेयस्कः। पूरणान्ताद्ग्रहणे तस्य लुङ्वा। गृह्यतेऽनेनेति ग्रहण रूपादि प्रग्रन्तात् पूरणत्यान्ताद्ग्रहणे वर्त्तमानात् स्वार्थे को वा स्यात्तस्य पूरणत्यस्य लुक् वा स्यात्। द्वितीयमेव द्वितीयक द्विक रूप द्वितीयेन रूपेण गृह्यते इत्यर्थ एव तृतीयक त्रिक चतुर्थक चतुष्कम्। उपधिचतुष्पाद्भ्या ष्णेय.। प्रग्रन्तादुपधेश्चतुष्पाद्वाचिनश्च स्वार्थे ष्णेय स्याद्वा। उपधीयत इत्युपधि. रथाङ्गम्। उपधिरेव औपधेयम्। शरण एव शारणेय धारणेय । अहमादिवर्णेभ्य कारो रात्त्वेफ । प्रग्रन्तादहमादेर्वर्णविशेषवाचकाच्च कार स्याद्वा स्वार्थे रवर्णात्तु एफश्च। अहमेव अहङ्कार एव एवङ्कार ओमेव ओङ्कार. सत्यमेव सत्यङ्कार तुरेव तुकार टुरेव टुकार इत्यादि। वर्णात्तु अतएव अकार, औकार. ककार हकार इत्यादि। र एव रेफ.। उत्सर्गापवादयो क्वचिदुत्सर्गोऽपि निविशते इति न्यायात् रकार इत्यपि तथाच रकारादीनि नामानि शृखती मम पार्वतीति। मृदस्तिक प्रशसायान्तु सस्नौ। प्रग्रन्तात् मृच्छब्दात्तिक. स्याद्वा स्वार्थे प्रशसायान्तु स स्नश्च। मृदेव मृत्तिका प्रशस्ता मृत् मृत्सा मृत्स्ना च। रूपनामभ्या धेयो भागात्तु यश्च। प्रग्रन्ताभ्यामाभ्या स्वार्थे धेय स्याद्वा भागशब्दात् तु धेयो यश्च । रूपधेय नामधेय भागधेय भाग्यम्। देवात्त । देव एव देवता स्वभावात् स्त्रीत्वम्। नवाद्य वईन तना नूश्च तेषु। प्रग्रन्तात् यवशब्दात् य व ईन तन एते स्यु स्वार्थे। तेषु नवशब्दस्य नूरादिश्यते। नवमेव नव्य नूत्न नवीनं नूतनम्। प्रान्न ईनतना.। प्रग्रन्तात् प्रशब्दात् न व ईन तन इत्येते स्यु स्वार्थे। प्र एव प्रण प्रत्न प्रीण प्रतनम्। तीयादविद्यार्थात् ष्णीक । प्रग्रन्ताद्विद्याव्यतिरिक्तार्थात् तीयान्तात् स्वार्थे ष्णिक. स्याद्वा। द्वितीयैव द्वैतीयीकी तार्त्तीयीकी अविद्यार्थादिति किं द्वितीया विद्या। अव्यव्यन्ता षड्चाशितङ्गुल कर्म्म पुरुषादोन । प्रग्रन्तेभ्य एभ्य. स्वार्थे ईन. स्यात् वा। अधिशब्द आयत्तपर्य्याय:। अध्येव अधीन. तथाच अस्मास्वधीन किमु निस्पृहाणामिति भारवि.। अधिशब्द. शौण्डादि. गुरुषु अधि

गुर्वधि गुर्वध्येव गुर्वधीनं एवं ब्राह्मणाधीनः। भाष्यकारमते तु केवलादधिशब्दात् यं तन्मतेऽधीन इति च। षड् अक्षीणि यस्मिन् षडक्ष न षडक्ष. अषडक्ष एव अषडक्षीण. द्वाभ्यामेव क्षतो मन्त्र । आशितास्तृप्ता गावो यस्मिन् वने तत् आशितङ्गु सूत्रनिर्देशादाशितस्य मन् आशितङ्ग्वेव आशितङ्गवीनम्। अल कर्म्मणि अलं कर्म्म तदेव अलकर्म्मीणम् अल पुरुषाय अलपुरुष स एव अलपुरुषीण भावप्रधानोऽत्र पुरुषशब्द अलंपुरुषभावाय इत्यर्थ गोष्ठाद्भूतपूर्वे खीन । अग्रन्ताद्भूतपूर्वे वर्त्तमानाद्गोष्ठशब्दात् स्वार्थे खीणौ वा स्यात्। भूतपूर्वं गोष्ठ गोष्ठीनं भूतपूर्व इति किं गोष्ठी वर्त्तते। वस्तुनि जात्यन्तादीय.। अग्रन्ताद्वस्तुनि द्रव्ये वर्त्तमानाज्जातिशब्दान्तात् स्वार्थे ईय स्यात् वा। ब्राह्मणी जातिरस्य ब्राह्मणजाति ब्राह्मणजातिरेव ब्राह्मणजातीय. तज्जातीय वस्तुनि किं ब्राह्मणजातिरदुष्टा। स्थानान्तात् तत्तुल्ये वा। अग्रन्तात् तत्तुल्ये वर्त्तमानात् स्थानान्तात स्वार्थे ईय स्यात् वा। पितृस्थानीय पितृस्थान राजस्थानीय राजस्थान तत्तुल्य इत्यर्थ। मानार्थवत्वन्तान्मात्रद्वयसटौ। अग्रन्तान्मानार्थे वत्वन्तात् स्वार्थे मात्रद्वयसटौ स्याता वा। कियदेव कियन्मात्रं कियद्द्वयस तावन्मात्र तावद्द्वयस स्त्रिया कियन्मात्री कियद्द्वयसीत्यादि पक्षे कियदिति। विशोजातौ ण्य। अग्रन्ताज्जातौ वर्त्तमानात् विशशब्दात् स्वार्थे ण्य स्यात् वा विडेव वैश्य विट्च जाताविति किं विश्वात्वम्। सुरचेमममर्त्यविठात् य। अग्रन्तेभ्य एभ्यो य स्यात् वा स्वार्थे। सूर एव सूर्य्य चेम्य मर्त्यं. यविठा पक्षे सूर इत्यादि। पूगादमुख्यपूर्वात्। पूगा सङ्घा नानाजातीया अनियतवृत्तयो धर्मकामप्रधानास्तद्वाचिन शब्दादमुख्यपूर्वात्त्र्य स्यात् अनिर्दिष्टार्थाप्या. स्वार्थे भवन्ति इति न्यायात्त्र्य स्वार्थे लौहध्वजशब्द. सङ्घवाचक. लौहध्वज्य शिबिशब्दात् शैब्य. समुख्यपूर्वात् तु देवदत्तो मुखोऽस्य देवदत्तको लोकः स एषा मुख्य इति क अत्र देवदत्तशब्दो मुख्यवाचकोऽस्य पूर्वावयव इति अस्मात् त्र्यो न स्यात्। वाहीकेष्वराजन्यादब्रह्मण्यादायुधजीविसङ्घात् ण्य। वाहीकेषु आयुधजीविना सङ्घवाचकात् राजन्यशब्दभिन्नात् ब्राह्मणजातिवर्ज्जात् ण्य. स्यात् नञ्द्वयेन ब्राह्मणराजन्ययोर्जातिस्वरूपे अवगन्तव्ये कौण्डीवृषशब्दात् कौण्डीवृष्य. चौद्रक्य. मानव्य' वाहीकेष्विति किं शवरपुलिन्द. अराजन्यादिति किं शालङ्कायन: आयुध जीविनामिति किं मन्द. सङ्घातादिति किं वक्रघीण.। वृकात् णे न्य.। आयुधजीविसङ्घवाचकात् वृकशब्दात् णन्य. स्यात् स्वार्थे। वार्केन्य। जातिशब्दान्माभूत् कामक्रोधौ मनुष्याणां खादितारौ वृकाविव। दामन्यादेरीय.।

## ४३७। केऽकः स्वो ह्रे तु वा।

कै ७।, अक ६।, स्व. १।, ह्रे ७।, तु ।१।, वा ।१।।

**कन्यका सुकन्यकः सुकन्याकः। शिवो देवता यस्यासौ शैवः शाक्तेयः।**

---

आयुधजीवसङ्घाद्दामन्यादेरीय स्यात्। दामनीय। दामनी सौनपादिश्च सावित्रीपुत्र औदधि.। काकन्दक्या वितस्ती च सार्वसेनिश्च वैदधि.। औदकिर्बैजवापिश्च शाकुन्तकिस्तथौपनि। मौञ्जायन समुद्दिष्टा दामन्यादौ त्वयोदश। क्रौष्टुक्यादेस्त्रिगर्त्तेषु। आयुधजीविसङ्घात् क्रौष्टुक्यादे. स्वार्थे ईय स्यात्। क्रौष्टुकीय। क्रौष्टुकिर्ब्रह्मगुप्तश्च काश्यापि दाण्डकी तथा। जालमानिर्जालकिश्च कौण्डोपरथ इत्यपि। पर्श्वर्यौधेयादिभ्यां षण्णावस्त्रियाञ्च आयुधजीविसङ्घात् पर्श्वादेः षण्, यौधेयादे ञ्र स्याद्वा स्वार्थे। पर्श्वूशब्द ऋश्शब्दवत् व्युत्पन्न। पार्श्वव व्वे पर्श्वूस्त्रिगर्त्ता स्त्रिया पर्श्वू। पर्श्वूरक्षो मरुत् सत्वत् वाह्लीकवसवोऽसुर.। दाशार्हश्च पिशाचश्च वय. कार्षापणोऽशनि। सत् यस्यास्ति वत्वन्त.। यौधेयादिः यौधेय व्वे यौधेया अजादेराकृतिगणत्वात् स्त्रिया यौधेया इत्यादि। यौधेयौशीनरावेयशौभ्रेय भरता अमी। यौत्तेयचारशेयौ च विगर्त्तोऽव नव स्मृता। आयुधजीविनिवृत्ते सङ्घ इति प्रवर्त्तते। व्रातवचनात्ष्यः। ये नानाजातीया अनियतवृत्तय उत्सवजीविनस्ते व्राता सङ्घास्तेभ्यो ष्य स्याद्वा स्वार्थे न तु स्त्रियाम्। व्रात्य. व्रेहत्य. कापोतपाक्य अस्त्रियामिति किं व्रातेति। अभिजिदादेरपत्यषणान्तात् षण्य। सङ्घादिति निवृत्तम् अभिजिदादेरपत्यषणान्तात् षण्य स्यात् स्वार्थे न तु स्त्रियाम्। अभिजितोऽपत्यम् आभिजित स एव आभिजित्य। अभिजिद्वैदभृच्छालावदूर्णातत् अनता सह। शिखावच्च शमीवच्च अश्वदष्टाव कीर्त्तिता। अपत्यग्रहण किम् अभिजिद्देवता अस्य अभिजित. स्थालीपाक इत्यादौ न स्यात्। अस्त्रियामिति किम् आभिजित्यः स्त्रिय.। अस्यापत्यार्थत्वात् अभिजित्यस्यापत्य युवा अभिजित्यायन इति। पूगण्यादेर्लुग् व्वे। पूगाण्य इत्यादि स्वार्थिकात्स्या व्वे लुक् स्यात् न तु स्त्रियाम्। लौहध्वजा। कपोतपाका. कौण्डीवृषा. वृका दामनय. क्रौष्टुकय पर्श्वे त्रिगर्त्ताः अभिजिता इत्यादि अस्त्रियामिति किं लौहध्वज्यः स्त्रिय. एव कौण्डीवृष्यः अजादित्वादाप् दामनीयाः स्त्रियः उक्ता. स्वार्था.॥ ४३६ ॥

अक स स्यात् कणि परे बहुव्रीहौ तु वा। कन्या एव कन्यका अत्र अणित कणि कृते अनेन ह्रस्वे स्वार्थप्रत्ययान्तास्तल्लिङ्गा एवेति स्त्रियामत आप्। एव मृणालिका सेनानिक यवसूक. वामोरुका इति। शोभना कन्या यस्य इति बहुव्रीहौ सुकन्यक सुकन्याक. अत्र वा ह्रस्व.। अक इति किं नौरेव नौका। अत्र वाशब्दस्य व्यवस्थावाचित्वात् समासे क्वचिद्वसे परेऽपि अक. स स्याद्वा इति बोध्यम्। तेन कालिदासकविता नव वय इति रथोद्धतायामुद्भट। वैदेहिबन्धोर्हृदय विदद्रे इति रघु। अश्लेषपितृत्रयमवह्निविशाखयुक्तमिति दीपिका। विबुधकृतिरभीष्टा नाडीनचत्रहीने इति च दीपिका। विरहिनिकृन्तन कुन्तमुखाकृतिकेतकिदन्तुरिताशे इति जयदेवश्च सङ्गच्छते। आदि पदस्य उदाहरणमाह शिवो देवता यस्यासौ शैव. अत्र ष्ण एव शाक्तेय अत्र ष्णेय. एव शाक्त वैष्णव. गाणपत्य इत्यादि। एव शाखा मुख अग्रजघन स्कन्ध तरस शरण चरण शृङ्ग मेघ विरस दृश्य साम्ये य। शाखा इव शाख्य. मुखमिव मुख्यम् इत्यादि एव कर्म्मणि अल कर्म्मीण कर्म्मसमर्थ अल पौरुषाय अलपौरुषीण.। अव्ययादधिशब्दादीने अधीन आयत्त प्राञ्चतीति प्राचीन इत्यादि। एव तदस्या क्रीडाया प्रहरण इत्यर्थेऽपि दण्ड प्रहरणमस्या दण्डा क्रीडा मुष्टि. प्रहरणमस्या मौष्टा क्रीडा इत्यादौ अणित ण। एव घञन्तात् सोऽस्यामित्यर्थेऽपि अणिति णे दण्डपातोऽस्यामिति दाण्डपाता फाल्गुनी। श्येनपातोऽस्यामिति श्यैनम्पाता मृगया तिलपातोऽस्यामिति तैलपाता स्वधा। उभयत्र अणित् णे मकारागमो निपात्य। न विद्यन्ते षडक्षाणि यत्र सोऽषडक्षीणो मन्त्र। अत्र ईन। अन्यान्यप्युदाहरामि। भिक्षादे. समूहे ण। भिक्षाणा समूहो भैक्षम्। भिक्षादिस्तु। भिक्षा अहन् गर्भिणी युवति सहस्र करीष अथर्वन् चेत्र अङ्गार पद्धति दक्षिण खण्डिक श्वन् युग वरत्रा हरिद्रा वडवा हलबन्ध भिक्षुक शुक उलूक इत्यादि। २२। वाडवादे समूहे अणित् ण्य। वाडवाना समूहो वाडव्यम्। वाडवादिस्तु। वाडव मानव ब्राह्मण पृष्ठ इत्यादि। ४। राजन्यादे. समूहे कण्। राजन्याना समूह राजन्यकम्। राजन्यादिस्तु। राजन्य राजन् शैलूष शालङ्कायन जालन्धरायण अर्जुनायन सम्प्रिय मानव त्रिगर्त्त भट विराट ऊर्णनाभ दैवपात औडुम्बर वैल्वन बाभव आब्रीत आर्थकामेय अम्बरीष पुत्र विल्वन वैकर्ण वत्स धेनु हस्तिन् लक्षण दाक्ष वसति इत्यादि। २७। दाक्षिवसत्योरिकारस्य च अकार। दाक्षीणा समूहो दाक्षक एव वसतीना वासतकम्। वृद्धात् समूहभावयो. कण्। वृद्धाना समूहो भावो

वा वार्द्धकम्। पाशादे समूहेऽणित् ण्य स्त्री। पाशानां समूहः पाश्या। पाशादिस्तु। पाश तृण धूम हलवात वन अङ्गार नड पिटक पीट पेट गल खल गण्ड गौरथ इत्यादि। १६। ब्राह्मणादेर्भावकर्म्मणी ण्य। ब्राह्मणस्य भावः कर्म्म वा ब्राह्मण्यम्। ब्राह्मणादिस्तु। ब्राह्मण मानव वाडव चौर धूर्त्त आवाधय विवाधय उपवाधय अपवाधय एकभाव विभाव विभाव अन्यभाव अचेतस्र सवादिन् सर्वेशिन् सभाषिन् वहुभाषिन् शीर्षघातिन् समस्थ विषमस्थ मध्यस्थ अनीश्वर कुशल चपल निपुण पिशुन वालिश अलस दुष्पुरुष कापुरुष गणपति अधिपति दायाद विशस्ति विशाय परमस्थ रविसद्धाय गडुल विज्ञात इत्यादि। ४१। मित्रादेर्भावकर्म्मणोः ण्य स्त्री वा। मित्रस्य भावः कर्म्म वा मैत्र्यम्। पित्रादीपि सूर्य्यागस्त्यस्य इति यलोपे मैत्री। मित्रादिस्तु। मित्र उचित चतुर अनुपूर्व यथाकाम समय रुद्र इत्यादि। वणिग्दूताभ्यां भावकर्म्मणोः ण्यौ यश्च। वणिजो भावः कर्म्म वा वाणिज्य वणिज्यम् एवं दौत्य दूत्यम्। सख्युर्य। सख्युर्भावः कर्म्म वा सख्यम्। स्तेनाद् यो न लोपश्च। स्तेनस्य भावः कर्म्म वा स्तेयम्। कपिज्ञातिभ्यां ण्येय। कपेर्भावः कर्म्म वा कापेयम् एवं ज्ञातेयम्। लघुपूर्वादुदन्ताद्भावे ण। लाघव गौरव मार्दव पाटव लघुपूर्वात् किं शलुलम्। युवादिहायनान्ताभ्यां भावे ण। यूनो भावः यौवनम्। युवादिस्तु। युवन् चपल कुशल निपुण पिशुन स्थविर सुहृद कुतूहल सुभाट दुर्भाट यजमान घाट कर्णक कुण्डक श्रवण कमण्डलु कुस्त्री दुस्त्री सुहृदय दुर्हृदय वृषण परिव्राजक सुब्रह्मचारिन् अनुशस चेतस्र इत्यादि। २६। द्वैहायन वैहायनमित्यादि। अचतुरस्य भावः अचातुर्य्यम् एवम् असङ्गतस्य असाङ्गत्यम् अलवणस्य अलावण्यम् एभ्यः ण्य। अपटोर्भावः अपाटवम् अत्र ण। एषु सुपद्मादित्वादन्त्यपदस्य वृद्धिः। दुर्गसिंहस्तु एषु पूर्वपदस्य वृद्धिं कृत्वा आचतुर्य्यम् आसङ्गत्यम् आलवण्यम् आपटव्यम् इत्याह। एवं कूपस्य कौपीनम् अकार्य्ये गुह्ये कौपीनमित्यमरात्। एवं शालायां शालीनोऽप्रगल्भः उभयत्र णीन। वत्सेभ्यो हितो वत्सीयः गोभ्यो हितं गव्यं वनमित्यादि। मन एव मानसम् अत्र ण्य तारा एव तारका अत्र कण्। इवशब्दात् तुल्यार्थेऽपि क। अश्व इवायम् अश्वकः एवं देवदत्तक इत्यादि। एवं वङ्गस्य राजा वाङ्गः अत्र ण एवं कौरव्य कौशल्य पाण्ड्य एभ्यः ण्य अत्र पाण्डोरुकारलोपो निपात्य। कस्त्रीनेयाश्चेति चकारोऽनुक्तसमुच्चयार्थोऽपि। तेन प्रयोगानुसारादन्येऽपि प्रत्यया स्युः। यथा प्रावृषि भवः प्रावृषेण्यः ण्य. वरेण्यः भ्रातुरपत्यं भ्रातृव्यः। कर्म्मणि शूरः कर्म्मठः। सजातीय-

सहायाभावे एकादाकिन्कौ। एक एव एकाकी एकक। मद सन्तौ प्रशंसायाम्। प्रशस्ता मत् मत्सा मत्का एवम् अवेदुग्धम् इत्यर्थे अविदृषम् अविसोढम् अविसम् अव षत्वाभावौ निपात्यः। एवम् अवेर्विसरीऽविपट। देवात् स्वार्थे त। देव एव देवता स्त्रीत्वमभिधानात्। वर्णात् स्वार्थे कारतौ। अकारोऽत् आकार आत् औकार औत् हसात्तु कार। ककार चकार' औङ्कार वषट्कार। रादेफ.। र एव रेफ निष्फले तिले तिलपेजः तिलपिञ्ज इत्यादि। अथ निपात्या वृक्षवाचिना फले वाच्ये इदमर्थे कृतस्य तद्धितस्य लुकि क्लीवत्वम्। आम्रस्येद फलम् आम्रम् एव नारिकेल तालमित्यादि। हरीतक्यादिस्तु फले वाच्ये इदमर्थे कृततद्धितलुकि तल्लिङ्गत्वम्। हरीतक्या इद फलं हरीतकी हरितक्यादिस्तु। हरीतक्यश्लिकी पथ्यामृद्वीकापिप्पलीकणा। चिञ्चा कोषातकी द्राक्षा कर्कटी कण्टकारिका। श्वेतपाकी च कर्कारु रेवा चेलादय स्मृता इति। रूपलय फले जम्बा जम्बू स्त्री जम्बु जाम्बवम्। मल्लिकादे' पुष्पे वाच्ये तद्धितलुकि तल्लिङ्गत्वम्। मल्लिकाया. पुष्प मल्लिका। मल्लिकादिस्तु। मल्लिका सुमती मुस्ता विदारी शालपर्ण्यपि। जाती हरिद्रा गम्भारी वृहती मल्लिकादय' इति। व्रीहीणामपि फले वाच्ये तद्धितलुकि तल्लिङ्गत्वम्। यथा यवस्य फलं यवः एव मुद्ग' तिल इत्यादि। एव शुक्लादिकषायादिशीतादीना गुणवाचिनामन्त्यर्थप्रत्ययस्य लुकि विलिङ्गत्वम्। यथा शुक्ल पट शुक्ला धेनु शुक्ल पुष्पम् एव मधुरो गुड. मधुरा सिता मधुर फलम्। एवञ्च शीतो वायु शीता नदी शीत जलमित्यादि ॥ ४३७ ॥

श्रीरा-टी—अक् प्रत्याहार' अक' के परे ख स्यात् हमे तु वा। कन्यकेति कन्या शब्दात् यवादित्वात् क अनेन ख. सुकन्याका इति शोभना कन्या यस्या इति वाक्य पक्षे सुकन्यका वा ख। णिकोऽस्मै सदा दीयते। प्रग्न्तादस्मै इत्यर्थे णिक' स्यात् य प्रग्न्तनिर्दिष्ट सदा दीयते चेद्भवति अग्रभोजन सदा दीयते अस्मै आग्रभोजनिक प्राथमकल्पिक इत्यादि। प्राणामासौदनमासौदनात् षिकः। प्रग्न्तेभ्य एभ्योऽस्मै सदा दीयतेऽर्थे षिक। प्राणाः सदा दीयतेऽस्मै प्राणिक. मासिक ओदनिक' स्त्रिया प्राणिकीत्यादि प्राणिकभार्य्य इत्यादौ षिकविधानात्। पुवद्भाव इत्येके भक्तात् णो वा। भक्त सदा दीयतेऽस्मै भाक्तः पक्षे पूर्वेण णिक' भाक्तिक। अस्य देवता। प्रग्न्तादस्येत्यर्थे वेत्यादित्वात् ण स्यात् यत् प्रग्न्तनिर्दिष्ट सा देवता चेद्भवति। मूले शिवो देवतास्येति शैव शाक्त इति शक्तिर्देवतास्य इति वाक्य देवताशब्देनेह देयस्य पुरोडाशादे. स्वामीष्यते यथा शैव हविरित्यादि कथं शैवो मन्त्र. शैव. स्तव इत्यादि

ऽत्यं शिव प्रकाशकत्वेन मन्त्रस्तुत्यादि शिवो देवतेत्युपचार इति। यमादिस्तु याम्यम् आदित्य प्राजापत्य पाशुपत आग्नेय आग्नेयो ब्राह्मण इत्युपमानात् कालेय दैव दैवम् औत्समित्यादि। कस्य णे काय। क प्रजापति को देवतास्य काय हवि'। शुक्रादिय.। प्रन्तात् शुक्रशब्दात् देवतास्येत्यर्थे इय स्यात् णस्यापवाद। शुक्रो देवतास्य शुक्रियम्। शतरुद्रादेरीयश्च पते प्रश्च। प्रन्ताच्छतरुद्रादेर्देवतास्येत्यर्थे इय ईयश्च स्यात् तयो पते प्रादेश। शतरुद्रो देवतास्य शतरुद्रिय शतरुद्रीयम्। अपोनपात् अपानपात् शब्दौ देवताविशेषवाचकौ अपोनपाद्देवतास्य अपोनप्त्रियम् अपोनप्त्रीयम् अपानप्त्रीयम्। शतरुद्रा अपोनपात् अपानपात् इति त्रयम्॥ ४३७॥ महेन्द्राद्वा तौ। प्रन्तान्महेन्द्रशब्दात्तौ इय ईयौ वा स्याता देवतास्येत्यर्थे महेन्द्रो देवतास्य महेन्द्रीय महेन्द्रियं पचे माहेन्द्रमिति। वायुपैङ्गाक्षीपुत्रादिभ्या येयौ। प्रन्ताद्वाय्वादेय पैङ्गाक्षीपुत्रादेरीय. स्यात् देवतास्येत्यर्थे। वायुर्देवतास्य वायव्य वायुर्ऋतुरुष पिता चतुष्क परिकीर्त्तितम्। पैङ्गाक्षी पुत्रो देवतास्य पैङ्गाक्षीपुत्रीय तृणविन्दवीय पैङ्गाक्षीपुत्रतृणविन्दू द्वौ। मरुत्वतादेश्च। प्रन्तात् मरुत्वतादेर्देवतास्येत्यर्थे येयौ स्याता मरुत्वान् देवतास्य मरुत्वत्य मरुत्वतीय शुनो वायु शीर आदित्य. शुनश्च शीरश्च ते देवते अस्य शुनाशीर्य्यं शुनाशीरीयम्। मरुत्वदृग्-ढमेध्यग्नीषोम द्यावा पृथिव्यपि। वस्तोपाति. शुनाशीर इह षट् परिकीर्त्तिता। सोमात् ण्य। अत्रार्थे ण्य. स्यात् सोमो देवतास्य सौम हवि.। अपत्योपलचकत्वात् सोमी ऋक् ण्यस्य लोप। महाराजप्रौष्टपदाभ्या णिक। प्रन्ताभ्यामाभ्या देवतास्येत्यर्थे णिक स्यात् महाराजो देवतास्य माहाराजिक प्रौष्ठपदिक.। कथ महाराजिक इति महती राजिर्यस्येति ह क कालेभ्यो भववत्। येभ्य कालवाचिभ्यो भवार्थे ये त्या विहितास्तेभ्य प्रन्तेभ्यस्तेभ्यो देवतास्येत्यर्थे स्यु। मासो देवतास्य मासिक सावत्सरिक वासन्त हैमन्त हैमन प्रावृषेण्यमिति छन्दोभ्यस्त्वादि प्रागर्थे प्रन्तेभ्यश्छन्दोवाचिभ्यश्छन्द आदि प्रागर्थे वेत्यादित्वात् ण स्यात्। पङ्क्तिरादिर्यस्य प्रागर्थस्य पाङ्क्त प्रगाथ आनुष्टुभ' प्रगाथ यत्र प्रगन्थनात् प्रगणत्वात् द्वे ऋचौ तिस्र क्रियेते समस्तप्रगाथ। तदादीति किम् अनुष्टुप् मध्याशास्य प्रगाथस्य प्रगाथ इति कि पङ्क्तिरादिरस्यानुवाकस्य छन्दोभ्य इति किम् उदन्यशब्द आदिरस्य प्रगाथस्य। योद्धृप्रयोजनेभ्यो युद्धस्य। प्रन्तात् युद्धवाचिन प्रयोजनवाचिनश्चास्येत्यर्थे वेत्यादित्वात् ण. स्यात् यत् योनिर्दिष्ट तत् युद्ध चेद्भवति। अर्जुनो योद्धास्य सग्रामस्य आर्जुन. सग्राम. पञ्चालो योद्धास्य सग्रामस्य पाञ्चाल:

संग्राम सुभद्रा प्रयोजनमस्य सौभद्र संग्राम। संग्राम इति किं सुभद्रा प्रयोजनमस्य दानस्य योड्प्रयोजनेभ्य इति किं सुभद्रापेक्षितास्य संग्रामस्य। कालेभ्य सोढे। अग्रन्तेभ्य कालवाचिभ्य सोढार्थे वर्त्तमानेभ्योऽस्येत्यर्थे भवादित्वात् यथाविहित त्या स्यु। सोढ जितमभ्यस्तमित्यर्थ। निशासहचरितमध्ययन निशा तत् सोढमस्य छात्रस्य नैशम्छात्र नैशिक. प्रादोष प्रादोषिक निशासम्यध्ययनमभ्यस्यतीत्यर्थ.। निवासे। अग्रन्तान्निवासेऽर्थे वर्त्तमानात् यथाविहित भवादित्या स्यु। निवसत्यस्मिन्निवास यत् अग्रन्तनिर्दिष्टं स निवासश्चेद्भवति। सुघ्नो निवासोऽस्य स्रौघ्न पुरुष। अभिजने। अभिजना पूर्वबान्धवास्ते सन्ति यत्र सोऽभिजन अर्शादित्वाद तथाच यत्र सम्प्रत्युष्यते स निवास यत्र बान्धवै पूर्वमुषित सोऽभिजन इत्यर्थ। अग्रन्तादभिजनार्थे वर्त्तमानात् भवादित्वादस्येत्यर्थे यथाविहित त्या स्यु। सुघ्नोऽभिजनोऽस्य स्रौघ्न पुरुष. माथुर राष्ट्रिय इत्यादि पृथग्ग्रहणमुत्तरार्थम्। सिन्धुतक्षशिलादिभ्या णाट्णौ। अग्रन्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्याम् अस्येत्यर्थे क्रमात् णाट्णौ स्याताम्। सिन्धुरभिजनोऽस्य सैन्धव। सिन्ध्वादि यथा। सिन्धुकश्मीरकिष्किन्ध्य शवकम्बोजवर्णव। गन्धार दरदौ शाल्वशब्दिका मधुमत्तथा। उरवा च वय प्रोक्ता शब्दा द्वादश कोविदै। सिन्धुवर्णमधुकश्मीरशाल्वाना पाठ कच्छादित्वान् न तत्स्थयोर्लुक्बाधनार्थ। शेषाणा त्वविषयादिति णकबाधनार्थ। तक्षशिलादिस्तावत् तक्षशिलाभिजनोऽस्य ताक्षशिल। इह तक्षशिलावत्सौ वत्सोद्धरणवटी। शवलग्रामणीकौत्सवरसङ्कुचिता अपि। कौनेहराणीणखिहकीठास्य काण्डवारणम्। कसन्धिकन्नौ च कौत्सश्च शब्दा षोडश कीर्त्तिता। कौत्स स्वरणग्रामणी काण्डवारणाना जनपदत्वात् णकबाधनार्थ. शेषाणा त्वविषयादिति णकबाधनार्थ। ईयो गिरिभ्य शस्त्रजीविनि। अग्रन्तेभ्योऽभिजनेऽर्थे वर्त्तमानेभ्यो गिरिवाचिभ्योऽस्येत्यर्थे शस्त्रजीविनि वाच्ये ईय. स्यात्। हृद्गोणी गिरिरभिजनोऽस्य हृद्गोणीय शस्त्रजीवि कुद्दालीय शास्त्रजीवी। शस्त्रजीविनीति किम् ऋच्चोदो गिरिरभिजनोऽस्य विप्रस्य आर्चोदो ब्राह्मण गिरिभ्य इति किं साङ्काश्योऽभिजनोऽस्य साङ्काश्यक शास्त्रजीवी। शाण्डिकादिभ्यं। अग्रन्तादभिजनेऽर्थे वर्त्तमानात् शाण्डिकादेरस्येत्यर्थे ण्य स्यात्। शाण्डिक्योऽभिजनोऽस्य शाण्डिक्य सार्वसैन्य। शाण्डिका सर्वसेनश्च सर्वकेशी वुचेहिं षट्। शङ्खाबाध शकवक कचवाच प्रकीर्त्तित। तुदीवर्म्मतीभ्या णेय। अग्रन्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्यामस्यार्थे णेय. स्यात्। तुदी अभिजनोऽस्य तौदेय;

वार्म्मतेय'। शालातुरात्तीय। शलातुरोऽभिजनोऽस्य शालातुरीयम्। सेव्ये। अन्तात् सेव्येऽर्थे वर्त्तमानादसेत्यर्थे भवादिवत् यथाविहित त्या स्यु। स्रुघ्न सेव्योऽस्य स्रौघ्न माथुर राष्ट्रिय इत्यादि। अकालदेशादचित्तात् णिक.। प्रान्तात् कालदेशभिन्नादचित्तवाचकात् सेव्येऽर्थे वर्त्तमानात् असेत्यर्थे णिक स्यात्॥ अपूप सेव्योऽस्य आपूपिक शाष्कुलिक पायसिक। अचित्तादिति किं देवदत्त: अकालदेशादिति किं ग्रैष्म स्रौघ्न। महाराजाञ्च। महाराज सेव्योऽस्य माहाराजिक स चित्तार्थोऽयमारम्भ। गोत्रक्षत्रियाख्येभ्यो णको वासुदेवार्जुनाभ्यामन्वित। प्रान्तेभ्य सेव्येऽर्थे वर्त्तमानेभ्योऽपत्यान्तेभ्य क्षत्रियाख्येभ्यश्च असेत्यर्थे णक स्यात। वासुदेवार्जुनाभ्यान्तु अक स्यात्। ग्लुचुकायनि सेव्योऽस्य ग्लौचुकायनक औपगवक। क्षत्रियाख्येभ्यस्तावत् नकुल सेव्योऽस्य नाकुलक साहदेवक शाल्वक आख्या ग्रहण प्रसिद्धक्षत्रियग्रहणार्थ तेन मूढक्षत्रिय सेव्योऽस्य मौढ। वासुदेवशब्दोऽत्र देववाची वासुदेव सेव्योऽस्य वासुदेवक एवमर्जुनक। क्वचिदनभिधानान्न भवति पाणिनीय पौरवीय। ञ्वे रूढाज्जनपदवत्। प्रान्तादभिजनेऽर्थे वर्त्तमानाद्दा विषयादेशतुल्याख्यक्षत्रियात् जनपदतद्वाचिभ्यामित्यादौ यस्मात् यो विहित तस्मात् स त्य स्यात् असेत्यर्थे। अङ्गा क्षत्रिया सेव्या अस्य आङ्गिक वाङ्गिक माद्रक वृजिक। ञ्व इति किं मद्रस्यापत्य माद्र वृजेरपत्य वार्ज्य वृद्धेत् कोशलेत्यादिना ण्यड्। माद्रौ सेव्यौ अस्य माद्रक वार्ज्यक। रूढादिति किं पञ्चाला विप्रा सेव्या अस्य पाञ्चाल। णिक. पण्ये किशरादेस्त्वणित् वा शलालुन। प्रान्तात् पण्येऽर्थे वर्त्तमानादसेत्यर्थे णिक स्यात् णिकन्तु किशरादे शलालुशब्दात्तु वा। मोदक पण्यमस्य मौदकिक आपूपिक. लावणिक। किशरादेस्तावत् किशर पण्यमस्या किशरिकी नलदिकीत्यादि। किशर नलद पर्णी हरिद्रौशीरगुग्गुलु। हारिद्रभगवौ चैव स्थगरा नदरी दश। किशरादयो दश शब्दा गन्धविशेषवाचका। शलालुपण्यमस्य शलालुक इकस्य क स्त्रिया शलालुकी पक्षे णिक शालालुकी। शिल्पे। णिक इत्यनुवर्त्तते प्रान्तात् शिल्पेऽर्थे वर्त्तमानात् असेत्यर्थे णिक स्यात् मृदङ्गवादन शिल्पमस्य मार्दङ्गिक। पाणविक शिल्प कौशल क्रियाभ्यासपूर्वकज्ञानविशेष इति न्यासकार। वस्तुतस्तु ज्ञानविशेषजन्याभिघातविशेष। ननु मृदङ्गवादन शिल्पमस्येत्यर्थोपादानात् मृदङ्गवादनशब्दात् त्यो भविष्यति कथं मृदङ्गशब्दादिति सत्य मञ्चा क्रोशन्तीति वत् मृदङ्गादिशब्दात्तत्तद्वादनेऽप्युपचारा वर्त्तन्त इति। मड्डुकझर्झराभ्या णो वा। प्रान्ताभ्यामाभ्या शिल्पेऽर्थे वर्त्तमानाभ्या असेत्यर्थे

की वा स्यात्। मड्डुकवादनं शिल्पमस्य माड्डुकः। झार्झरः पक्षे माड्डुकिकः झार्झरिकः। प्रहरणे। प्रान्तात् प्रहरणेऽर्थे वर्त्तमानादस्येत्यर्थे णिक स्यात् कण्डकगन्या णिकोऽनुवर्त्तते। असि प्रहरणमस्य आसिकः चाक्रिकः प्रासिकः धानुष्कः उसन्तादिकस्य कः। शक्तियष्टिभ्यां णीकः। प्रान्ताभ्यां प्रहरणार्थे वर्त्तमानाभ्यामाभ्याम् अस्येत्यर्थे णीकः स्यात् णिकस्य बाधकः। शक्तिः प्रहरणमस्य शाक्तीकः याष्टीकः। शीले। प्रान्ताच्छीले अर्थे वर्त्तमानादस्येत्यर्थे णिकः स्यात्। परुषवचनं शीलमस्य पारुषिकः अपूपभक्षणं शीलमस्य आपूपिकः अत्रापि उपचारात् परुषादिशब्दा वचनादौ वर्त्तन्ते। छत्रादेर्णः। प्रान्ताच्छीलार्थे वर्त्तमानाच्छत्रादेर्णः स्यात् अस्येत्यर्थे। छत्रं छादनमावरणं शीलमस्य छात्रः। छत्रं शिक्षा कृषिर्भिक्षा चुरा सत्यानृतानि च। पुरोदास्योदकस्थानकर्म्माणि विशिखा तथा। आवन्तात् स्थ। प्रान्तादावन्तात् स्वार्थोर्निष्पन्नाच्छीलार्थे वर्त्तमानादस्येत्यर्थे न स्यात्। सख्या शीलमस्य सास्थः स्त्रियां सास्था। तपश्चुराभ्यां णः। तपः शीलमस्याः तापसी चुरा शीलमस्याः चौरी। अध्ययने कर्म्मवृत्तम्। अध्ययनविषये कर्म्मवृत्तमस्येत्यर्थे प्रान्तात् णिकः स्यात्। एकरूपम् कर्म्मवृत्तम् अध्ययनेऽस्य ऐकरूपिकः तार्थे गरः। एकमन्यत् कर्म्मवृत्तमध्ययने अस्य ऐकान्यिकः अध्ययने नियुक्तस्य परीक्षाकाले पाठितस्खलितरूपमेकम् अन्यत् कर्म्मजातमित्यर्थः। अध्ययने ह्यन्यत्वमपपाठरूपमेव सम्भवति। बह्वचपूर्वादिकः। प्रान्ताद्बह्वच्पूर्वदात् कर्म्मवृत्ताध्ययनेऽस्येत्यर्थे इकः स्यात्। द्वादशरूपाणि कर्म्माणि वृत्तान्यध्ययनेऽस्य द्वादशरूपिकः त्रयोदशान्यिकः। अपपाठ एव वृत्ते त्य इष्यते इति न्यासकारः। अस्तिनास्तिभ्यां मतौ। प्रान्ताभ्यामाभ्यां मतौ वर्त्तमानाभ्याम् अस्येत्यर्थे णिकः स्यात्। विद्यमानः परलोकभावो यस्य स विद्यमानपरलोकः स्वर्गः परलोकोऽस्ति इति ज्ञानं यस्य स आस्तिकः। एवं परलोको नास्ति इति ज्ञानं यस्य स नास्तिकः सदसत्परलोकत्वे अस्तिनास्तिशब्दौ व्यौ। परे तु त्याद्यन्तप्रतिरूपकौ निपातौ वदन्ति अन्ये तु विधिबलात् त्याद्यन्तादेव त्य इत्याहुः। दिष्टात् प्रमाणिकदैवपरयोः। प्रान्तान्मतौ वर्त्तमानाद्दिष्टशब्दादस्यार्थे णिकः स्यात् अनयोरर्थयोः प्रमाणात्. प्रातिनी मतिरस्य स दैष्टिकः दैवपरे तु दैष्टिकः। तथाच माघः दैष्टिकता न निषीदति पौरुषे इति। परिमाणे। प्रान्तात् परिमाणे वर्त्तमानादस्येत्यर्थे अर्हादित्वात् यथाविहितं त्याः स्युः। प्रस्थः परिमाणमस्य प्रास्थिकः द्रौणिकः षष्टिर्जीवितं परिमाणमस्य षाष्टीकः वर्षशतं परिमाणमस्य वार्षशतिकः द्वैषष्टी

जीवित परिमाणमस्य इति वाक्ये णादलुग्विधानात् द्विसाप्ततिक इति जया-दित्य:। शत परिमाणमस्य शत्य शतिक' पञ्चक बहुक गणक' कतिक' यावत्क. यावतिक विंशतिक वंशिक अर्द्धिक' कार्षापणिक प्रतिक. शौर्प शौर्पिक अध्यर्द्धशूर्प अध्यर्द्धशोर्प साहस: अध्यर्द्धसहस्रम् अध्यर्द्धसाहस्रम् अध्यर्द्ध-खारिक विंशतिकीन अध्यर्द्धपण्य द्विशाण द्वैशाण विनिष्क द्विनैष्किक खारीक इत्यादि। सङ्ख्याया सूत्राध्ययनसङ्घेषु सञ्ज्ञायाम्। सूत्रादित्यर्थविशेषण प्रथन्तात् सङ्ख्यावाचिनोऽस्येत्यर्थे अर्हादिवत् त्या स्यु सञ्ज्ञायाम्। अष्टाध्याया परिमाणमस्य सूत्रस्य अष्टक पाणिनीय दशक वैयाघ्रपदीय त्रिक काशकृत्स्नम् अध्ययने तावत् पञ्च परिमाणमस्याधीतस्य पञ्चकोऽधीत सप्तक: अष्टक अधीतिरध्ययन स पाठ तस्य सङ्ख्या परिमाण पञ्चावृत्तय. पञ्चवारा पञ्चरूपाध्ययनस्य पञ्चक-मध्ययनम्। स्तोमे डविधिरिति चान्द्रा। पञ्चदशमन्त्रा परिमाणमस्य पञ्चदश-स्तोम एकविंश स्तोम प्राणिसमूहे सङ्घशब्दो रूढ. अतएव उक्त सूत्रमिति। पञ्च-दशाभ्या डत्वर्गे। प्रथन्ताभ्यामाभ्या वर्गाभिधेये तदस्य परिमाणमित्यर्थे डत्रा स्यात् कस्यापवाद। पञ्चपरिमाणमस्य वर्गस्य पञ्चत् वर्ग दशपरिमाणमस्य वर्गस्य दशत् वर्ग. पचे पञ्चक दशक वर्ग। शतिर्विंदशत शत्तु त्र्यादेर्दशतस्तथा। षडादेस्त्रिरेव स्यादेतेषु दशतो हि लुक्। इर्विंस्त्रि चतुर्विं पञ्चाष्टोऽशीषष्टसप्तषस्याद्दशदशत-स्त्वे ममेवदशदशत. शतम्। द्वौदश तौ परिमाणमस्य विंशति.। त्रयोदशन परि-माणमस्य त्रिंशत्। चतुर्दशत परिमाणमस्य चत्वारिंशत्। पञ्चदशत परिमाण-मस्य पञ्चाशत्। षड्दशत. परिमाणमस्य षष्टि:। सप्तदशत परिमाणमस्य सप्तति.। अष्टादशत परिमाणमस्य अशीति'। नवदशत. परिमाणमस्य नवति। दशदशत परिमाणमस्य शतम्। त्रिचत्वारिंशद्भ्यां डन् ब्राह्मणाख्ये ग्रन्थनामनि। प्रथन्ताभ्यामाभ्या तदस्य परिमाणमित्यर्थे डन् स्यात् ब्राह्मणाख्यग्रन्थनामनि। डनावितौ। त्रिंशदध्याया. परिमाणमेषा ब्राह्मणानां त्रिंशानि चत्वारिंशानि ब्राह्मणानि। पञ्चतस्तिर्डिश्च। प्रथन्तात् पञ्चञ्छदात् ति. स्यात् स च डित् डिति टिलोप। पञ्चत् परिमाणमस्य पङ्क्तिश्छन्द टिलोपे कडि जस्य तुचे कड। समयात् प्राप्ते। प्रथन्तात् समयशब्दात् प्राप्तेऽर्थे अर्हत्यादित्वात् णिक स्यात् अस्येत्यर्थे। समय प्राप्तोऽस्य सामयिक कार्य्यम्। कालात् य। प्रथन्तात् कालशब्दात् प्राप्तेऽर्थे वर्त्तमानादस्येत्यर्थे य स्यात्। काल प्राप्तोऽस्य काल्य शीतम्। ऋत्वादे. ण। प्रथन्ताहत्वादे. प्राप्तेऽर्थे वर्त्तमानादस्येत्यर्थे ण. स्यात्।

ऋतु' प्राप्तोऽस्य आर्त्तव पुष्प चेत्यादि। ऋतुश्चोपरतश्चैव प्राप्तितोऽपि दर्शी मता'। प्रयोजने। अग्रन्तात् प्रयोजनेऽर्थे वर्त्तमानात् लेरईत्यादित्वात् णिक स्यात् अस्येत्यर्थे। इन्द्रमह प्रयोजनमस्य ऐन्द्रमहिक' गार्ग्यमहिक। एका गाराच्चौरे। अग्रन्तादेकागारशब्दात् प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे णिक स्यात् चौरेऽभिधेये। एकागार प्रयोजनमस्य ऐकागारिकश्चौर। विशाखाषाढाभ्या णो मन्यदण्डयो। अग्रन्तात् विशाखाशब्दान्मन्थे वाच्ये आषाढाशब्दाद् दण्डे वाच्ये प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे ण स्यात। विशाखा प्रयोजनमस्य मन्यस्य वैशाखो मन्य' आषाढो दण्ड। चूडादेश्च। अग्रन्ताच्चूडादे प्रयोजनेऽर्थे वर्त्त-मानादस्येत्यर्थे ण' स्यात्। चूडा प्रयोजनमस्य चौड। श्रद्धा प्रयोजनमस्य श्राद्ध-मित्यादि आकृतिगणोऽयम्। अनुप्रवचनादेरीयो लुक् तु स्वस्तिवाचनादे। अग्रन्तात् प्रयोजनार्थे वर्त्तमानादस्येत्यर्थे ईय स्यात् स्वस्तिवाचनादेस्तु ईयस्य लुक्। अनु प्रवचन प्रयोजनमस्य अनुप्रवचनीयम्। अनुप्रवचन दीर्घजीवितीत्थापने अपि। उपस्थान तथा सम्प्रेषणाभरणमित्यपि। अनुवासनसयुक्तमनुवादनमीरितम्। स्वस्तिवाचनं प्रयोजनमस्य स्वस्तिवाचनम्। स्वस्तिवाचनपुण्याहवाचने शान्ति-वाचनम्। ऋद्धिवाचनमित्यादि बुधैरव प्रकीर्त्तितम्। सपूर्वदात् प्रवेशनादे। अग्रन्तात् सहपूर्वदात् प्रवेशनादे प्रयोजनेऽर्थे वर्त्तमानात् अस्येत्यर्थे ईय स्यात। गृहे प्रवेशन प्रयोजनमस्य गृहप्रवेशनीयम् अश्वप्रवेशनीय प्रपापूरणीय प्रासा दारोहणीयम्। प्रवेशन प्रपदन पूरणारोहणे अपि। समापन चेति पञ्च शब्दा इह समीरिता। धनादेर्य। अग्रन्ताद्धनादे प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे य स्यात्। धन प्रयोजनमस्य धन्य'। धनमायुर्यशः स्वर्गधर्म्मौ पञ्चाऽत्र कीर्त्तिता। कालात् प्रकृष्टे णिक। अग्रन्तात् प्रकृष्टेऽर्थे वर्त्तमानात् कालशब्दादस्येत्यर्थे णिक स्यात्। प्रकृष्ट' कालोऽस्य कालिकम् ऋणम् कालिक वैरम्। स्यादीयोऽस्मिंश्च परिखायास्तु णेय'। अग्रन्तादस्मिन् वार्थे ईय स्यात् परिखाशब्दात्तु णेय स्यात्। प्रौनिर्दिष्ट तत् स्यात् चेत् भवति। प्राकार स्यादासा प्राकारीया इष्टका प्राकार स्यादस्मिन् प्राकारीया इष्टका प्राकारः स्यादस्मिन् प्राकारीयो देश। प्रासादीय दारु प्रासादीया भूमि'- क्वचिदनभिधानान्न स्यात् प्राकारो देवदत्त. स्यात्। परिखा स्यादस्यास्मिन् वा पारिखेय स्यादिति सम्भावने स्त्री। उग-वादिभ्यो हितवत्। अग्रन्तादुवर्णान्तात् गवादेश्चास्याऽस्मिन् वा स्यादर्थे हितार्थे ये विहितास्ते स्यु'। धेनुरस्यास्मिन् वा स्यात् धैनव्य गव्यम् अपूप्यम् अपूपीय खण्ड'

कष्टमित्यादि। पौर्णमास्यामस्मिन् सञ्ज्ञायाम्। प्रग्रन्तात् पौर्णमास्या वर्त्तमानात् अस्मिन्नित्यर्थे वेत्यादित्वात् ण स्यात् सञ्ज्ञाया गम्यमानायाम्। पौषी पौर्णमासी अस्मिन् मासेऽर्द्धमासे सवत्सरे वा पौषी मासोऽर्द्धमासो वत्सरश्च। एत्रमभिधानान्नेह पौषी पौर्णमासी अस्मिन् दशरात्रे इति एव भूतकमासेऽपि न स्यात्। अश्वत्था-ग्रहायणीभ्या णिको वा तु चैत्री श्रावणी कार्त्तिकी फाल्गुनोभ्य। प्रग्रन्ताभ्यामाभ्या पौर्णमास्या वर्त्तमानाभ्यामस्मिन्नित्यर्थे णिक स्यात्। चैत्रादेस्तु वा। अश्वत्थशब्दो-ऽश्विनीपर्य्याय अविशेषे लुप् अश्वत्थात्तु सञ्ज्ञाया वा तु चित्रेत्यादिना लुप्। अश्वत्था पौर्णमासी अस्मिन् मासे आश्वत्थिको मास। आग्रहायणी पौर्णमासी अस्मिन्मासि आग्रहायणिको मास। आग्रहायणशब्दात् प्रज्ञादित्वात् स्वार्थे ण पौर्णमासी विशेषणादाग्रहायणीसञ्ज्ञाया नो ण। चैत्रादेस्तु चैत्री पौर्णमासी अस्मिन् मासे चैत्रिक चैत्र श्रावणिक' श्रावण कार्त्तिक फाल्गुनिक' फाल्गुनी मास। पदात् दृश्ये य'। प्रग्रन्तात् पदात् दृश्येऽर्थे वर्त्तमानादस्मिन्नित्यर्थे य स्यात्। पद दृश्यमस्मिन् पद्य पन्था' पद्य कर्दम पद पादचिह्न दृश्य दर्शनयोग्यमित्यर्थ। एतेन कर्दमस्यावस्था उच्यते नातिद्रवो नातिशुष्कामित्यर्थ। प्रहरणात् ण क्रीडायाम्। अस्मिन्निति वर्त्तते इदम्शब्दस्य क्रीडाविशेषणत्वात् लिङ्गव्यत्ययेनास्या मिति। प्रग्रन्तात् प्रहरणवाचिनोऽस्यामित्यर्थे ण स्यात् क्रीडाविषये। दण्डप्रहरण-मस्या क्रीडाया दाण्डा मौष्टी क्रीडा प्रहरणादिति किं मनी भूषणमस्या क्रियायाम्। क्रीडायामिति किं खड्ग प्रहरणमस्या सेनायाम्। भावघञन्तात् वृत्तौ स्त्रियाम्। प्रग्रन्ताद्भावविहितघञन्तात् अस्यामित्यर्थे ण स्यात् तदन्तश्च स्त्रियाम्। श्येनपातो-ऽस्या क्रियाया श्यैनम्पाता मृगया तैल पाता पितृक्रिया दाण्डपाता तिथि. मौषलपाता [illegible]। पूर्णमासात् णो वर्त्तते। प्रग्रन्तात् पूर्णमासशब्दादस्या वर्त्तते [illegible] र्णमासी वर्त्ततेऽस्या तिथौ पौर्णमासी तिथि पूर्णमाश्चन्द्र तस्येय इदमर्थे ण [illegible] व्युत्पत्त्यन्तरम्। अथ प्रकीर्णकम्। कालात् ब्रह्मचर्य्ये मस्येति णि [illegible] कालवाचिनो ब्रह्मचर्य्यमस्येति णिक स्यात्। मास व्याप्य ब्रह्मचर्य्यमस्य मासिको विप्र. आर्द्धमासिक सावत्सरिक। मासो ब्रह्मचर्य्यस्यास्य-मासिक इति प्रग्रन्तात् त्य इत्यपरे। एकदिशि। एकदिश्यर्थे भवादित्वात् यथा-विहित त्या स्यु। सुदाम्न एकदिक् सौदामनी विद्युत् हैमवती तैककुदी पैलु-मूली। तस्। एकदिश्यर्थे तस् स्यात् सुदाम्न एकदिक् सुदामत नोलुप्फेधाविति नस्य लुप् स्वरादिपाठादिति त्य एव हिमवत्त. पीलुमूलतः। उरसो यश्च। उर

शब्दादेकदिश्यर्थे तस् यौ स्याताम्। उरसा एकदिक् उरस्त. उरस्य'। नौ वयो विष तुला धर्मभ्यसाध्य तुल्य वध्य सम प्राप्ये। एभ्य क्रमादेष्वर्थेषु य स्यात्। नावा तार्य्यं नाव्य वयसा तुल्य वयस्य विषेण वध्य. विष्य तुलया सम तुल्य धर्मा'य प्राप्य धर्म्म्यम्। हलसीताभ्या कृष्टसङ्गतयोस्तदन्ताच्च। आभ्यामनयोरर्थयो क्रमात य. स्यात् तदन्ताच्च। हलेन कृष्ट हल्य सीतया सङ्गत सीत्य द्विहल्य द्विसीत्यम्। सतजनाभ्या साधनजन्ययो। सत्य जन्यम्। मूलात् समानाम्ययो। मूलशब्दात् समे आनाम्ये च य स्यात्। मूलेन सम मूल्य. पट. यावद्धन पटीत्पत्तौ लग्न तावदेव लभत इत्यर्थ। मूलेन आनाम्य अनभिभवनीय मूल्यम् उत्पाटनव्यतिरेकेणालभ्यपदादीत्यर्थ। स मुख्य एषामिति क। लि' क. स्यात् मुख्य एषामित्यर्थे। त्व मुख्य एषा त्वत्का' मत्का देवदत्तका इत्यादि। अन्नमस्मिन् प्रायेण नाम्नि ट्र नौ तु कुल्माषवटकाभ्याम्। प्रायेणान्नमस्मिन्नित्यर्थे क स्यात् नाम्नि गम्यमाने कुल्माषात् ट्र वटकादिनश्च। गुडापूपा प्रायेणान्नमस्या गुडापूपिका पौर्णमासी स्त्रिया काप्यदि एव तिलापूपिका कौल्माषी वटकिनीतिथि. स्वभावात् स्त्रीत्वम्। धातुपारायणे कुल्माषी दन्त्यवान्। श्रस्यात् परिजाते। शस्यशब्दो गुणवचनस्तस्मात् क स्यात् परिजातेऽर्थे। शस्येन गुणेन परिजात सम्पन्न. शस्यको मास' शस्यकी वत्सर शस्यक शालि' सर्वप्रकारेण गुणसम्पन्न' इत्यर्थ। अंशाद्धारिणि। अंशशब्दाद्धारिण्यर्थे क स्यात्। अंशको दायाद। अनो कमितर्यतेस्तु वार्थश्च। अनुशब्दात् कमितरि वाच्ये क स्यात्। अभेस्तु केर्णो वा। अनुकामयते अनुक अभिकामयते अभिक अभीक। तन्त्रादचिरापहृते। तन्त्रशब्दात् अचिरापहृतेऽर्थे क स्यात्। तन्त्रको नवकर्पट। शीघ्रशिथिलार्थाभ्यामुष्णशीताभ्या कारिणि। उष्णशीताभ्या शीघ्रशिथिलाभ्या कारिण्यर्थ क. स्यात्। उष्ण शीघ्र कारी उष्णको दक्ष शीत शिथिल कारी शीतकोऽलस। ब्राह्मणोष्णाभ्या देश यवागूविशेषयो। आभ्यामनयोरर्थयो. क्रमात् क स्यात्। ब्राह्मणको देशविशेष यत्र देशे आयुधजीविनो ब्राह्मणा वर्त्तन्ते स देशश्च उच्यते उष्णिका यवागू। अध्यारूढादधिश्च। अध्यारूढशब्दात् क स्यात् केऽधिरादेशश्च। अध्याङ् पूर्वरुहधोऽर्थे यदा क्तस्तदैव अधिको द्रोण. खार्यां यदा तु ढे क्त तदा ढस्योक्तत्वात् अधिका खारी द्रोणेन। पार्श्वादन्विच्छति णिकस्त्य. शूलदण्डाजिनाभ्याम्। पार्श्वशब्दादन्विच्छतीत्यर्थे क: स्यात् अय'शूलदण्डाजिनाभ्या णिक। पार्श्वमनजूपायलचणम्। तेनान्विच्छति अनुसरति पार्श्वक. शठ;। आय. शूलिक, तीक्ष्णकारी साहसिक

इत्यर्थ'। दण्डाजिनेनान्विच्छति दण्डाजिनक दाम्भिकस्तपस्वीत्यर्थ'। उत्कण्ठावत्-युद। उद' क स्यात् उत्कण्ठावतीत्यर्थे। उत्क प्रवासी। शृङ्खलादस्य करभस्य बन्धने। शृङ्खलशब्दादस्य करभस्य बन्धनमित्यर्थे क स्यात्। शृङ्खल बन्धनमस्य करभस्य शृङ्खलक. बन्धनमिति किं शृङ्खल वाममस्य करभस्य करभ इति किं शृङ्खल बन्धनमस्य गी। धनहिरण्यात् कामे। आभ्या कामे क स्यात्। धनस्य काम धनक गेहेऽपि निस्पृहस्यास्य मुमुर्चोर्धनक कुत। इति शिष्टप्रयोग। स्वाङ्गेभ्य प्रसिते णिकमूदरादायूने। स्वाङ्गवाचिभ्य प्रसितेऽर्थे क स्यात्। उदरात् णिक आयूने वाच्ये। केशेषु प्रसित केशकस्तत्पर इत्यर्थ दन्तक. नखक इत्यादि धनिर्देशात् स्वाङ्गसमुदायादपि नखकेशक इत्यादि उदरे प्रसित औदरिक आयून क्षुधया पीड्यमान स्वस्यैवोदरपूरणमपेक्षत इत्यर्थ। अन्यत उदरक। कालाद्रोगनाम्नि। कालवाचकाद्रोगनामनि वाच्ये क स्यात्। द्वितीयको ज्वर द्वितीयदिनोत्पन्नो ज्वर इत्युच्यते तृतीयकः चतुर्थक इत्यादि। कार्य्यकारणे अस्येति। ले कार्य्यमस्य कारणमस्येति चार्थे क स्यात् रोगनामनि वाच्ये। शीत कार्य्यमस्य ज्वरस्य शीतको ज्वर विषपुष्प कारणमस्य ज्वरस्य विषपुष्पको ज्वर। अल्पह्रस्वकुत्सिताज्ञातावक्षेपणेषु। रोगनाम्नीति नानुवर्त्तते। ले क स्यात् एष्वर्थेषु। अल्प तैल तैलक ह्रस्वो वृक्ष वृक्षक कुत्सितोऽश्व अश्वक इहाज्ञातशब्देन य स्वेन रूपेण ज्ञाते विशेषेणाज्ञात स गृह्यते अस्यायमश्वक अश्वक। अवक्षिप्यते व्यक्क्रियते येन तदवक्षेपण तस्मिन् वैयाकरणल केन त्व विकत्थसे व्याकरणत्व गर्वित। कृपायाम्। कृपाकारणेनाभ्युपपत्ति तस्यां गम्यमानायां ले क. स्यात्। पुत्रक. बुभुक्षितक ज्वरितक। तद्युक्तान्नीतौ। कृपायुक्तात् ले क. स्यात् नीतौ गम्यमानायाम्। हन्तते गुडका.। कृपायुक्तो दानेनाश्वासयति दान· कृपानीतिर्गम्यते पूर्वेण प्रत्यासत्तेरनुकम्प्यमानादेव त्य इह तु [illegible]हेतादपि यथा स्यादिति वचनम्। इनेयौ च जाते. नृनाम्न। मनु [illegible]जातिशब्दात् कृपाया नीतौ गम्यमानायां क इनेयौ च स्यु। व्याघ्रक[illegible]त् सोऽनुकम्पित. शिक्षितो वा व्याघ्रकः व्याघ्रिय' व्याघ्रिय. इत्यादि। [illegible]नान्तान्नीपश्चाजिनस्य। अजिनान्तान्नाम्नस्ते स्यु कृपायां नीतौ गम्यमानाया तेषु अजिनस्य लोपश्च। व्याघ्राजिननामा कश्चित् सोऽनुकम्पित' शिक्षितो वा व्याघ्रक व्याघ्रिण: व्याघ्रिय. एव कृष्णाजिनात् कृष्णिन. कृष्णिक. कृष्णिय. इत्यादि। इकस्य बह्वचोऽचि त्वादितीयाचतुर्थाची लोप्य: पूर्वदस्य पर्य्यायेण उक इनस्य न.। मनुष्यनाम्नो बह्वच:

क इन इय इकश्च एते स्यु कृपायां नीतौ च गम्यमानायाम् आदिद्वितीयाच आद्वि चतुर्थाच परोभागो लोप्यश्च। पूर्वदस्य पर्य्यायेण लोप्यं उगन्तात् परस्य इनस्य नादेशश्च। देवदत्तोऽनुकम्पित. शिक्षितो वा देवदत्तक अचि तु देविक. देविन. देविय पक्षे दत्तक दत्तिक दत्तिय शोभनकर्म्मानुकम्पित शिक्षितो वा शोभन-कर्म्मक अचि तु शोभिक' शोभिन शोभिय आदिद्वितीयाच परो लोप्य पूर्व-दस्य लोपे कर्म्मक कर्म्मिक कर्म्मिण कर्म्मिय इत्यादि। आदिचतुर्थात् तु बृह-स्पतिदत्तक बृहस्पतिक बृहस्पतिन बृहस्पतिय' पूर्वस्य पर्य्यायेण लोपे दत्तिक दत्तिन' दत्तिय इति मधुसूदनदत्तोऽनुकम्पितं शिक्षितो वा मधुसूदनदत्तक मधु-सूदिक मधुसूदिन मधुसूदिय इत्यादि। पूर्वदस्य लोप दत्तिकेत्यादि। बह्वच इति किं दत्तक अचि किं देवदत्तक उकास्तु वायुदत्तोऽनुकम्पित' शिक्षितो वा वायुदत्तक अचि द्वितीयाच परो लोप्य' न्वोर्लोपौ ताविति वायविक इनस्य नत्वे वायुन वायविय एवं भानुदत्तकं भानविक भानुन. भानविय. पितृदत्तकं पितृक पितृण पित्रिय। एवं भ्रातृदत्तक भ्रातृक: भ्रातृण' भ्रात्रिय इति पक्षे दत्तक इत्यादि। परैकदेशिनस्तु इयस्य यादेशं स्वीकुर्वन्ति तन्मते वायुय पितृय इति। तदुक्तम्। चतुर्थादनजादौ च लोप पूर्वपदस्य च। अप्रत्यये तथैवेष्ट उगन्तान्न इनस्य चेति। तन्मते अनजादौ के बृहस्पतिक। प्रत्ययाभावे-ऽपि देव पूर्वलोपे दत्त पक्षे देवदत्त इत्यादि। उपपूर्वात्तकौ च। मनुष्यनाम्न उपादेः परौ तकौ चकारात् इक इन इय एते स्यु कृपायां नीतौ च गम्यमानाया द्व्यच परभागो लोप्यश्च अचि। उपदत्तोऽनुकम्पित शिक्षितो वा उपत उपक उपिक उपिन उपिय। अचि किम् उपदत्तक'। परलोप्ये द्वितीयेच्च। बह्वचो मनुष्यनाम्न एषु परभागो लोप्य एच्च लोप्य अचि परे। कुबेरदत्तोऽनुकम्पित शिक्षितो वा कुबिक कुबिन कुबिय' एवम् उपेन्द्रदत्तोऽनुकम्पित' शिक्षितो वा उपिक उपिन उपिय' कहोडदत्तोऽनुकम्पित शिक्षितो वा कहिक. कहिन कहिय: अचि किं कुबेरदत्तक उपेन्द्रदत्तक कहोडदत्तक इत्यादि। एकाज्वद घश्च। बह्वचो नृनाम्न एकाच्छब्दात् परभागो लोप्य स्यादचि कृपायां नीतौ च गम्यमानायाम्। वागाशीर्दत्तोऽनुकम्पित: शिक्षितो वा वाचिक' वाचिन वाचिय। एवं षडङ्गुलिदत्तोऽनुकम्पित' शिक्षितो वा षडिक षडिन षडिय नञानिर्दिष्ट-त्वान्नित्यमिति भाष्यम् अचि किं वागाशीर्दत्तक' षडङ्गुलिदत्तक.। आदितृतीया दचोऽर्य्यमादेः। बह्वचो नृनाम्नोऽर्य्यमादेरादितृतीयाच. परभागो लोप्य. स्यात्

अचि परे क्रपायां गौती गम्यमानायाम्। अर्य्यमदत्तोऽनुकम्पित शिचितो वा आर्य्यमिक' आर्य्यमिण आर्य्यमिय। अचि किम् अर्य्यमदत्तक। अर्य्यमा शेवल-श्चैव विशालवरुणौ तथा। विशाखशरणश्चापि अर्य्यमादि प्रकीर्त्तित। अर्य्यमादेरिति किं शोभनकर्म्मानुकम्पित शिचितो वा शोभिक: इत्यादि। क. प्रतिरूपनाम्नो-र्विवे। प्रतिरूप प्रतिक्रतिस्तस्या सञ्ज्ञाया च इवार्थे सादृश्ये क स्यात्। अश्वक: गर्द्दभक चित्रक यथा तत्प्रक्रतिरुच्यते अथवा तत्सदृशस्यैव सञ्ज्ञायाम्। प्रतिरूप इति किं गौरिव गवय। लुर्मनुष्यविक्रेयजीविकार्थचित्रध्वजार्चासु। मनुष्यवाच्ये विक्रयवर्जजीविकार्थेषु कस्य लुप् स्यात्। चञ्चेव नर चञ्चा चञ्चावर्द्धिका जीविका-र्थेषु चित्रध्वजाऽर्चान्नित्याभिधानम्। राम. क्रष्णरामादिप्रतिक्रति गृहीत्वा भ्रमतीत्यर्थ ध्वजेगरुड इष. अर्चाया वासुदेव देवनादीना जीविकार्था प्रतिक्रतय उच्यन्ते। अविक्रेय इति किं वासुदेवकात् विक्रीणीते। अनर्चादिषु तु हस्तिकान् छायादर्शको दर्शयति। देवपथादेश। देवपथादे प्रतिरूपे कस्य लुप् स्यात्। देवपथस्य प्रतिक्रति. देवपथ। देवाजशङ्कुहंसेभ्य पथिन् कङ्कमुख तथा। मत्स्येन्द्रवास रज्जुश्च काकतुण्डश्च कश्यप। सिद्धपथो दश प्रोक्ता बुधैर्वा विपथेन च। वस्ते. ण्येय शिलायास्त्वणिहा। वस्तिशब्दादिवार्थे ण्येय स्यात् शिलाशब्दात्तु णेयोऽखिदा स्यात्। वस्तिरिव वास्तेय: शिलेव शिलेय अप्रतिरूपेऽपि वास्तेय इत्यपर। कुशाग्रादेरीय। कुशाग्रादिशब्देभ्यो इवार्थे ईय' स्यात् कुशाग्रमिव कुशाग्रीया बुद्धि सूक्ष्मत्वादतितीक्ष्णत्वाच्च। अध्वजरतीव अध्वजरतीयम् अध्वजरती समाने वर्त्तते तद्वदिष्टानिष्टत्वात्। काकतालीय काकतालशब्द. काकस्य गमन एव तालस्य पतनेन काकस्य मरणे वर्त्तते तद्वत् आकस्मिक सङ्गतम् एव घुणाक्षरीयम् अजापनीयम् अध्वगतीयं खलतिबल्लीयमित्यादि। काकतालादिशब्दाना अर्थविशेषे स गणपाठबलात् अथवा मयूरव्यंसकादित्वात्। शर्करादे. ण सपत्न्यास्त्वणित्। शर्करादेरिवार्थे ण स्यात् सपत्नीशब्दात्त्वणित् शर्करेव शार्कर। शर्करा-पुण्डरीकश्च शतपत्रम् कपालिका। गोलोमापि च नाराच सिकता नकुल तथा। क्रकाटिका च गोपुच्छ क्रपा चैव प्रयोगत। सपत्नीव सपत्नश्च प्रतिपद्य स उच्यते। अङ्गुल्यादे. ष्णिक एकशालायास्त्वणित्। अङ्गुल्यादेरिवार्थे ष्णिक स्यात् एकशालायास्तु ष्णिक इट्रहित'। अङ्गुलीव अङ्गुलिक। अङ्गुलि कुलिश वल्गु रुदश्वित् बभ्रुमण्डलम्। घोनीचरुर्म्मणिर्वक्र: कपिलो भरुजो हरि'। खलवर्णौ च विज्ञेयौ शकुलिश्चीरसा सह। एकशालेव एकशालिक: चकारात् ष्णिकश्च ऐकशालिक इत्यन्ये। कर्क-

लोहिताभ्या णीक'। आभ्यामिवार्थे णीक' स्यात् कर्क इव कार्कीक लौहितीक' स्वयमलोहित' स्फटिकादि' जवाद्याश्रयवशाल्लोहित इवाभासते य स एवोच्यते। शाखादेर्यो द्रोस्तु भव्ये च। शाखादेरिवार्थे य स्यात् द्रुशब्दात्तु भव्य चेद् य। शाखेव शाख्यम्। शाखामुखो रोजधानाग्र सेधा' स्कन्धश्च शृङ्ग वचनञ्च तव। ज्ञानेन सार्द्धं शरणेन चाऽपि शाखादिरुक्तो बहुभि प्रयोगात्। द्रुरिव द्रव्य स्वभावात् क्लीवलिङ्ग यथा द्रुम फलादिभिरर्थिन प्रीणाति तथायमपि स्वविभवै भवति आत्मगुणसम्पन्नोऽपि द्रव्यमुच्यते द्रव्य हि क्रिया विनयति द्रव्यमिति हिरण्यादिकमपि द्रव्य पुरुषार्थसाधकत्वात् णीककणीनेयाश्चेति त्वनिर्देशात अन्ये त्याश्च यथा। एकात् काकिनौ सजातीयासहाये। इवेति निवृत्त सजातीय-द्वितीयरहिते एकशब्दात क आकिन् एतौ स्याताम्। एकक एकाकी शतमेका-किनी यान्तीति चिन्त्य अष्टमाणो भागे लुक् वा षष्ठात्तु माने कश्च अष्टमो भाग आष्टम लुक् वा अष्टम। षष्ठो भाग षाष्ठ षष्ठ माने तु षष्ठक षाष्ठ षष्ठ। तन्न सहने हिमादेलु। हिमशब्दादेलु स्यात् तन्न सहत इत्यर्थे हिम न सहते हिमेलु। शीतोष्णतृप्रादालु। एभ्यो न सहते इत्यर्थे आलु स्यात्। शीत न सहते शीतालु उष्णालु तृष्णालु.। बलवातादूल। आभ्या न सहते इत्यर्थे ऊल स्यात्। बल न सहते बलूल वातूल। आभीक्ष्ण्ये सङ्ख्यादेरक पाद पाद्य। सङ्ख्यापूर्वात् पादशब्दादाभीक्ष्ण्येऽक स्यात् पादस्य पश्च। द्वौ द्वौ पादौ ददाति द्विपदिका ददाति तार्थेगसङ्ख्याऽक काप्यदि त्वे आभीक्ष्ण्ये द्योतिते सति न द्वि एव त्रिपदिका द्वे द्वे शते द्विशतिकां द्विमोदिका ददाति आभीक्ष्ण्य इति किं द्वौ पादौ ददाति ददात्यवारोपणार्थे। दानार्थकत्वे तु परसूत्रविषय। दण्डव्यप-सर्गयोश्च। अवीप्सार्थोऽयमारम्भ व्यपसर्गो दान द्वौ पादौ दण्डित द्विपदिका दण्डित द्वौ पादौ व्यपसृजति द्विपदिकाम् एव द्वितीयिका द्विमोदिकामित्यादि। द्वौ द्वौ मासौ ददाति द्वौ मासौ व्यवसृजति इत्यत्र न स्यादनभिधानात्। वेश्च नानाश्रसङ्कटा। वेरेते सु च इत् चित्त्वाद्य विना विनाश्च विसङ्कट नञ आनाच्। नञ् शब्दादानाच् स्यात् चित्त्वाद्य नाना। नेर्विडविरीषौ। नेरिमौ स्याताम्। निविड निविरीषम् किल कक पिटाश्चिस्त्रेषु। नेरित्यनुवर्त्तते नेरेते सु तस्य न्नियोगे निश्चिरादेशश्च। चिकिन: चिकक. चिपिट सार्थे के चिपिटक एते गुणशब्दा यथा कथञ्चिदुन्नेया अतएव सूत्रकारेणोपेक्षिता। क्लिन्नाल्लश्चक्षुषि ले चिल्पिच् त:। क्लिन्नशब्दात् चक्षुषि वाच्ये ल: स्यात् ले परे क्लिन्नशब्दस्य चित् पित्

चुत् एते आदेशाः स्युः। विड्ल पिल्ल चुल्ल तीर्लेन'। अवात् कटकुटारौ वैरूप्ये भट टीटनाटास्तु नासिकानमनादौ। अवशब्दात् वैरूप्ये कटकुटारौ स्याताम् नासिकानमनादौ तु भट टीट नाटा स्युः। अवकट अवकुटार अवभट अव टीट अवनाट नतनासिक इत्यर्थः। पचात्तिर्मूर्त्ते स्त्रियान्तु यून। पचशब्दात्ति' स्यात् मूर्त्तेऽर्थे युवन्शब्दात्तु स्त्रियाम्। पचति युवति। तिलात् पिञ्जपेजौ निष्फले। तिलशब्दान्निष्फलेऽर्थे एतौ स्तः। तिलपिञ्ज तिलपेज निष्फल इत्यर्थः। पितृमातृभ्यां डामहस्तत्पितरि तद्भ्रातरि तु व्यडुलौ। सौत्रत्वात् नङा। आभ्यां तयोः पितरि डामह स्यात् तयोर्भ्रातरि तु क्रमात् व्यडुलौ स्तः डित्। पितामह मातामह पितुर्भ्राता पितृव्य मातुर्भ्राता मातुल। अवेर्दुग्धे साढदुसमरीसाः। अविशब्दो मेषवाचकः तस्मात् दुग्धेऽर्थे एते स्युः। अविसोढम् अविदुसम् अविमरीस विधानसामर्थ्यान्नत्व इति जयादित्य। भर्त्तृहरिस्तु मूर्द्धन्य एव विदध्यात्। विस्तारे पटः। विस्तारेऽर्थे पट स्यात्। अवीना विस्तार अवि पट प्रातिपदिकादिति परे। अध्युपाभ्यां त्यकोऽद्र्यूर्द्ध्वासन्नभागयोः। आभ्यां क्रमादेतयोरर्थयोस्त्यकः स्यात्। अधित्यका अद्रेरूर्द्ध्वभाग उपत्यका अद्रेरासन्ना भूः स्वभावादनयोः स्त्रीत्वम्। कथ समुद्रोपत्यका हैमी पर्वताधित्यका पुरीति चेत् सत्य समुद्रोपत्यकेत्युपचारात्। ष्णिक उदरात्तदधीनालसे। उदरशब्दात् तदधीनालसे वाच्ये ष्णिक स्यात्। औदरिक। इन्द्रादियो लिङ्गादौ चेतात्तु परचेते चिकित्स्ये। इन्द्रशब्दादिय लिङ्गदृष्ट सृष्ट जुष्ट दत्तेषु। चेतशब्दात्तु परचेते चिकित्स्ये इत्यर्थः। इन्द्र आत्मा तस्य इदम् अनुमापक लिङ्गम् इन्द्रियम् आत्मा चक्षुरादिभिरनुमीयते न खलु कर्त्तृ करणमस्ति अथवा इन्द्रस्यात्मनो विषयोपभोगाय भवति तस्येदम्। परचेत जन्मान्तर शरीर तत्र चिकित्स्य इत्यर्थे चेतियो व्याधिः स इह जन्मन्यसाध्य इत्यर्थः' अथवा परचेतम् अन्यशरीर तत्र सङ्क्रमय्य चिकित्स्य चेतियम्। अथवा भस्मचेत तृणचेत वा परचेत तत्र चिकित्स्य विनाश्य तृण चेतियम् अथवा परदारा परचेत तत्रागमहेतुत्वात् तत्र चिकित्स्यो निग्राह्य पारदारिक चेतिय शालीनकौपीनसाप्तपदीनान्यधृष्टाकार्य्यसख्येषु। एतान्येतेषु अर्थेषु खीनान्तानि निपात्यन्ते। शालाप्रवेशमर्हति शालीना वधू अधृष्टेत्यर्थः। कूपप्रवेशमर्हति कौपीनमकार्य्यम्। सप्तभिः पादैः प्राप्य सख्य साप्तपदीन सख्यम्। यथा मुखीनसम्मुखीनौ दर्शने। दर्शनेऽर्थे एतौ निपात्येते दृश्यतेऽत्र दर्शन मुखस्य सदृश यथामुख यथासादृश्ये इति वसः दर्पणादिस्थप्रतिबिम्ब उच्यते

तस्मादीनी निपात्यते तथाच यथामुखीन' सीतायाः पुप्लुवे बहुलोभवन्निति भट्टि'। सम च तत् मुखञ्चेति सम्मुखीन: निपातनात् समकारस्याकारलोप अथवा सम्य-गर्थेन समशब्देन प्रादिस. हाभ्या दर्पण उच्यते। सर्वचर्म्मणो णीनेनौ कृते। अस्मात कृते णीनेनौ स.। सर्वेण चर्म्मणा कृत सार्वचर्म्मीण सूत्रनिर्देशात् षस षीसे तु सर्वस्य चर्म्मणा कृतमिति वाक्यम्। साक्षात् द्रष्टरि सञ्ज्ञाया इन्। साक्षा च्छब्दात् द्रष्टरि वाच्ये इन् स्यात् नाम्नि। साक्षी साक्षिणौ साक्षिण इति। अनु-पदादिनन्वेष्टरि। अनुपदशब्दादिन् अन्वेष्टरि वाच्ये। मृगस्यादनुपदी रामो जगाम गजविक्रम। सपूर्वपूर्वात्। सपूर्वदात् पूर्वशब्दात् इन् स्यात्। कृत पूर्वमनेन कृतपूर्वी कट भुक्तपूर्वी ओदन। इष्टादे। इष्टमनेन इष्टी यागे अधीती व्याकरणे निराकृती गृहीती कृतीश्रुतीत्यादि। इष्टसङ्कलिताऽधीत पूर्त्तव्याकुलिताऽटितम्। नियुक्तागदितायुक्त निगृहीतावकल्पितम्। निराकृत निपतित गदित परिरचितम्। आसेवितावकीर्णावधारितञ्च निसारितम्। श्रुतसर्चिता स्नातोऽपाकृतोपकृतानि च। परिगदित परिकलितम्। निकथित-मुपसादिताऽनुगुणितञ्च। अनुपचित परिगणित तथा पचितमुद्गृहीतञ्च। पूर्वात भुक्ते। केवलपूर्वशब्दात् भुक्तेऽर्थे इन् स्यात्। पूर्वमनेन आश्रित भुक्त' पील वा पूर्वी। श्राद्धादिकश्च। श्राद्धशब्दात् भुक्तेऽर्थे इक स्यात् चकारादिन् च। श्राद्ध वैदिककर्म्मविशेषस्तत्साधन द्रव्य श्राद्धम् उपचारात् तस्मिन्नहनि भुक्त येन स श्राद्धी दिवसान्तरे भुक्ते न श्राद्धीत्युच्यते। नवयज्ञादेर्णिकोऽत्र वर्त्तते। नवयज्ञादेरत्र वर्त्तनेऽर्थे णिक स्यात्। नवयज्ञो वर्त्ततेऽस्मिन् नावयज्ञिक पचे याज्ञिक इत्यादि-राकृतिगण। धेनो स्त्री दुग्धे ऋणदत्तायाम्। धेनुशब्दात् दुग्धरूपेण ऋणदत्ताया धेनौ वाच्याया ष्य: स्यात्। धेनुष्या गौ। अथ चातुरार्थिक। अस्मिन् देशे-ऽस्तीति नाम्नि। अस्मिन् देशे अस्तीति वेत्त्यादित्वात् ष्ण स्यात् सञ्ज्ञायाम्। उडु-म्बराऽस्मिन् देशेऽस्ति औडुम्बरो देश. एव बाल्वज पार्वत इत्यादि मत्वर्थीयापवादी-ऽय योग। निर्वृत्ते। नास्तीति वर्त्तते तेस्तेन निर्वृत्ते अर्थे वेत्त्यादित्वात् ष्ण नाम्नि। सहस्रेण निर्वृत्तो परिखा साहस्री परिखा कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। निवासादूरभवयो' ते परोऽनयोरर्थयोर्वेत्त्यादित्वात् ष्ण स्यात् सञ्ज्ञायाम्। निवसत्यस्मिन् निवास शिवीना निवासो देश शैवो देश एव ऋजुनावाना निवासो देश आर्जुनाव' आम्बष्ठ विदिशाया अदूरे भव वैदिश। क्षीरसुवास्त्वादेश्चतुर्षु। क्षवर्णादसुवास्त्वादेश्चतुर्षु अर्थेषु ट्ण स्यात् सञ्ज्ञायाम्। अवटङ. सन्ति अस्मिन् देशे

श्चावटव' कर्कतव' सन्त्यस्मिन् देशे काकतव । सुवास्त्वादिस्तु सुवास्तव' सन्त्यस्मिन् देशे सौवास्तवः ट्वणयो सङ्घाङ्कघोषलक्षणेषु भेद.। सुवास्तु. शौवलीवर्णः शिखण्डी खण्डुकर्कशौ। कण्डु. कठीकष्टकर्णौ विकर्णश्च भमीरथ । गर्त्त कर्कन्धु मत्यऽवि-र्गाह्वकपूरिणौ तथा। वीणावीणस्व कौडश्च तथा भौमरथी मत.। अर्वावर्णाति-रिक्ताना पाठो विपाशोत्तरकूपे चेति ट्वाधनार्थ। वीणावीणलरयो पाठात् वैणाना सङ्घ वैणीय आजकवीणीय इत्यादि। कौडस्यावत् कर्णच्छिद्रकेण निर्वृत्ता कार्णच्छिद्रका तेषा सङ्घ कार्णच्छिद्रकीय एव कार्कवाकवीय इत्यादि। बह्वजन्ताभ्या मतुवतुभ्या च। बह्वच परस्मान्मतोर्वतोश्च चतुर्थ्वर्थेषु ट्र स्यात्। सुरुचिमता निर्वृत्त सौरुचिमत इककटशब्दान् मीड्मभ्रपादतुरिति वतु नाम्न्य-स्त्यर्थ इतिर्घ इककटवान् तेन निर्वृत्त ऐककटवत. बह्वजन्ताभ्यामिति कि माला-वता निर्वृत्त मालावत तस्य सङ्घ मालावतीय । कूपे बह्वच । बह्वच् लि कूपे वाच्ये चतुर्थ्वर्थेषु ट्र स्यात्। दीर्घवरत्रेण निर्वृत्त दैर्घवरत्र कूप तस्य सङ्घ इत्यर्थे दैर्घवरत्र इत्यव ण इत्यादि। विपाशोत्तरे च। कूप इत्यनुवर्त्तते विपाशा नाम नदी तस्या उत्तरे य. कूप तस्मिन्नभिधेये ट्र स्यात्। अजन्तजर्थ आरम्भ । दत्तेन निर्वृत्त दात्त कूप गौप्त' तत्सङ्घ [illegible] । उत्तर इति विपाशाया दक्षिणत' कूपे दात्त. गौप्त' ण तस्य सङ्घ [illegible] ीय । सङ्कलादिभ्य। सङ्कलादिभ्यश्चतु-र्थ्वर्थेषु ट्र. स्यात्। सङ्कलेन निर्वृत्त [illegible] तस्य सङ्घ साङ्कल इत्यादि। सङ्कल कुष्कल कुम्भलोम गम्भीर सरूपम् । [illegible]निधानानीक वेमान सुभतोत्पुटमुद्गलम्। चतुपुलेवर गौविन्द निवासाद्यात्मगा[illegible]। अभिशक्तश्च सिकता भद्रपालसुमङ्गलौ। सुदत्तो वरुणो राजभृती बहुलमित्यपि। पुलोमश्च कपासश्च सद्यो मदज एव च। सुदत्तश्च सुनेत्रश्च पलाशोऽन्ये प्रयोगत । स्त्रीषु सौवीर शाल्वप्राच्सु। शौवीरदेशे शाल्वदेशे प्राग्देशे च स्त्रीलिङ्गे वाच्ये चतुर्थ्वर्थेषु ट्र स्यात्। दत्तामित्रेण निर्वृत्ता दात्तमित्री सौवीरनगरी विधूमाग्निना निर्वृत्ता वैधूमाग्नी शाल्वनगरी ककन्देन निर्वृत्ता काकन्दी प्राच्यनगरी। णकोऽरीहणादेः । अरीहणादेश्चतुर्थु अर्थेषु णक. स्यात्। अरीस्यात्। अरीहणेन निर्वृत्तम् आरीहणकम्। अरी-हणकाश कृत्वा भगलो कुन्दवीरणम्। विशाख. शिशपाविल्वौ विपाश. साञ्च-रायण । किरणद्रवणौ चापि श्वास चान्द्रायणावपि। रैवतोदञ्चनौ कुण्ड खदिरा वसतायनम्। क्रौष्टायनश्च बधिर चैगर्त्तायन खाण्डवा । शिरीषो जाम्ववत् खाडायना. शौसायनस्तथा। श्वेतायणश्च शण्डिल्यायन. सोमायनोऽपि च।

सुयज्ञश्च वराहश्च शर्करान्ये प्रयोगत । ऋष्यादे. कः। ऋष्यादेश्चतुर्षु अर्थेषु कः स्यात्। ऋष्येण निर्वृत्त ऋष्यक । ऋष्यन्यग्रोधखदिराः शर्करान्तर खण्डव । परिवेश स्थूलबाहुर्वरण अमधूसरौ। उत्तराश्मा वितानश्च विहीनश्चापि कर्दमम्। विधानञ्च बिलञ्च परे शिष्टप्रयोगत । सुतङ्गमादे णि । सुतङ्गमादेश्चतुर्ष अर्थेषु णि स्यात्। सुतङ्गमेन निर्वृत्त सौतङ्गमि. स्त्रिया सौतङ्गमी सुतङ्गमी महाचित्ती विप्रचित्ताऽर्जुनाऽजिरा। शुन श्वेत महापुत्रास्तथा शुक्रोऽव सम्मत । मुनिचित्ती विप्रचित्तौ गदिकोऽन्ये प्रयोगतः। सख्यादे णेय.। सख्यादेश्चतुर्षु अर्थेषु णेय स्यात्। सख्या निर्वृत्त सखेय । सखिशीकारचक्राणि चक्रवाकश्च शोफिन.। छगलोऽशोक वाग्दत्ता सखिदत्तकरस्तथा। सोमवल्लभपालश्च शमन सुरसोऽसरा । ण्य. सङ्काशादेर्बलादेस्त्वयित्। सङ्काशादेश्चतुर्षु अर्थेषु ण्य स्यात् बलादेस्तु य । सङ्काशेन निर्वृत्त साङ्काश्य । सङ्काश यूपकम्पोन कश्मीराशीन नासिका । सुगदीसगदीनाशो विवर्णोऽगस्तिरेव च। पुलिनं तीर्थकूटाश्म कोविदारस्तथैव च। अङ्गचूडारमञ्जारा. कलिर खडिरस्तथा। अगदी मगधः शूरसेन कर्म्मार इत्यपि । विकारोऽथ सुपन्थश्च सुपथोऽन्यैर्विधीयते। सुपथा निर्वृत्त सौपन्थ्या णे सुपथ सुपन्थादेश बलादिस्तावत् बलेन निर्वृत्त बल्यम्। बल पुलमूलश्चैव कुल दुल नल बलम्। सुरो नदश्च सम्प्रोक्तो नव चात्र प्रकीर्त्तिता । पक्षादेर्णायन । पक्षादेश्चतुर्षु अर्थेषु णायन स्यात् । पक्षेण निर्वृत्त पाक्षायण । पक्ष चैव तुषाराश्च कुम्भशीकर रोमका.। सुवर्णसरलौ चैव लोमको हंसकोऽण्डक । अलिक' सरकोहस्त विलश्च समनी मत । पथः पन्थो णायने स्यात् पक्षोत्तरदश स्मृता.। पथा निर्वृत्त पान्थायन.। कृशाश्वादश्छीय । कृशाश्वादेश्चतुर्षु अर्थेषु छीय. स्यात्। कृशाश्वेन निर्वृत्त कार्शाश्वीय । कृशाश्वोऽरिष्टशयनाऽरण्यवेश्माऽजिर सुखम्। विशाखो वामक कूटा लोमशो विनतस्तथा। ब्रह्मो ऽरपूरया भूमा मौदान्यविनतावपि। सूटश. वाय अश्वैव सगर. सुन्दरस्तथा। शर्कराप्यत्र सा प्रोक्ता द्वाविंशतिर्मनीषिभि । कुमुदादे' णिको गर्त्तादेस्त्वणिक्। कुमुदादेश्चतुर्षु अर्थेषु णिक स्यात् गर्त्तादेरिक । कुमुदेन निर्वृत्त कौमुदिकम्। कुमुद गोमठ कर्ष रथकारो मुनिस्थल । अश्वत्थ शाल्मली दास ग्रामश्चैव कुटब्रटम्। शर्करा च शिरीषोऽपि द्वादशैन स्मृता बुधै । गर्त्तादिस्तावत् गर्त्तेन निर्वृत्त. गर्त्तिक.। गर्त्त न्यग्रोध कुमुदाश्वत्थकूपविकङ्कता । पलाश शर्करा जीवं कङ्कटेकट वल्वजा.। परिवाप. शिरीषश्च सराञ्च. पञ्चभिर्दश ।

कर्णादेर्णायनिः। कर्णादेश्चतुर्षु अर्थेषु णायनिः स्यात्। कर्णेन निर्वृत्तः कार्णायनिः। कर्णो वशिष्ठ क्लिक कुम्भीजीवीऽश्ववान् अपस्तथा। अर्को वशिष्ठ कुलिश पाञ्चजन्यं तथैव च। द्रुपदश्च समाख्याता बादश्चैव मनीषिभिः। रोऽश्मादेः। अश्मादेश्चतुर्षु अर्थेषु र स्यात्। अश्मना निर्वृत्तं अश्मरं स्त्रियाम् अश्मरा रोगे तु अश्मरी नदादित्वादीप्। अश्मा यूथ ऊर्मी मीनो दर्भावृन्दगुडौ शिखी। खण्डकाण्डनखाश्चैकादशाऽश्मादौ समीरिताः। तृणादेः सः। तृणादेश्चतुर्षु अर्थेषु स स्यात्। तृणेन निर्वृत्ता तृणसा अभिधानात् स्त्रीत्वम्। तृण जलनभौ पर्ण स्वर्ण वर्ण बुल बलम्। वरणस्य वरणः सेऽवाष्टावाहुर्मनीषिणः। वरणादुक्तेव वराणसा तत्र भवा पूर्णा वाराणसीति। प्रेक्षादेरिन्। प्रेक्षादेश्चतुर्षु अर्थेषु इन् स्यात्। प्रेक्षया निर्वृत्त प्रेक्षी प्रेक्षिणौ प्रेक्षिणः। प्रेक्षा न्यग्रोध फलका बल्वका धुरकोकटा। क्षिपका ध्रुवका चैव सङ्कटप्रङ्कटौ मतौ। काशादेरिन। काशादेश्चतुर्षु अर्थेषु इन स्यात्। काशेन निर्वृत्त काशिन। काश वास गुहाऽश्वत्थ पीयूक्षा कर्करा तृणम्। कर्बुरकर्दमौ चैव पलाश विषकण्टका। नडो वनमपि प्रोक्ताश्चतुर्दश मनीषिभिः। मधुविसादिभ्या मतुवतू। आभ्या चतुर्षु अर्थेषु क्रमात् मतुवतू स्याताम्। मधुना निर्वृत्त मधुमान्। मधुरेण शमीस्थानुकर्कन्धुवर्म्मशक्तय। आङ्कतिक्रैटिवासन्दीक्षुरेकादश कीर्त्तिताः। विसेन निर्वृत्त विसवान्। विसपाण्डुासवाश्चैव कवीरश्चकटेष्टका। किशवाषाश्वेणञ्चैव हिमश्च वरण दश। यद्यपि चान्द्रेणैव नोच्यते मतुरस्त्यर्थे मोङ्मफपाढतुरित्याभ्या सिद्धे तथापि देशनाम्नि बाधनार्थ.। नद्यामस्त्यर्थे वदसुवास्त्वादेश। सुवास्त्वादिभिन्नात् चतुर्षु अर्थेषु नद्या मभिधेयायाम् अस्त्यर्थवत् मतुवतू स्याताम्। इक्षुणा निर्वृत्ता इक्षुमती नदी। एव शरावती उडुम्बरावती वीरणावती पुष्करावती। सुवास्त्वादेस्तु सौवास्तवी भागीरथी नदी सुवास्त्वादि प्रागुक्त। नडकुमुदमहिषवेतसेभ्यो डित्। एभ्यश्चतुर्षु अर्थेषु वतुश्च डित् स्यात् डिति टेर्लोप। नडा अस्मिन् देशे सन्ति नड्वान् कुमुद्वान् महिष्मान् वेतस्वान्। नडशादाड्वल। आभ्या चतुर्षु अर्थेषु वल स्यात्। नडा अस्मिन् देशे सन्ति नड्वल शाड्वल डिति टेर्लोप शष्पवाचिन शादशब्दादेव त्वो न तु कर्दमवाचिनोऽनभिधानात् इति भागवृत्ति। शिखाया वल.। शिखाशब्दात् चतुर्ष्वर्थेषु वल स्यात्। डिन्नानुवर्त्तते शिखा सन्त्यस्मित् देशे शिखावलं नगर मत्वर्थीयो वल सम्बन्धमात्रे इह तु देशे नाम्न्येव। उत्करादेरीयो नडादे. कश्च। उत्करादेश्चतुर्षु अर्थेषु ईय. स्यात् नडादेस्तु ईय. कन् च स्यात्। उत्करेण निर्वृत्तम् उत्करी-

# ४३८। त्वतौ भावे।

त्वतौ १॥, भावे ७।।

**साधुत्वं जडता, याचकत्वं ब्राह्मणीत्वम्।**

---

यम्। उत्कर सङ्कर' पर्ण पिप्पली मूलपिप्पली। अश्मार्कसङ्कलाश्वत्थकुलका-शतपा ऋतु। भस्त्राग्निकितवा शाला विशालीतृक्षीशशर्करा'। खण्डाजिना-ऽनेकतिका सुवर्णचिबुकावपि। पलाश' खदिर श्वाव नार्यीनेरौचकस्तथा। आर्द्रवचेन्द्र इत्याद्य जनकर्म निचाकर। नितान्त इच' कश्चित स्त्रियोर्णचिचुर्को मत। नडरेणु' कपीतेचु विल्ववेतस तच च। काष्ठवेवमपि ज्ञच कुचाया स्त्रीऽत्र सम्मत। नडादि कुचाद्यन्तर्गण ईय कमी न इत्। नडेन निर्वृत्त नडकीयम्। कुचकाया निर्वृत्त कुचकीय कनि स। जनपदे लुप्। देशे तन्नाम्नीति चतुर्ष्व-र्थेषु विहितस्य जनपदवाच्ये लुप् स्यात्। ग्रामसमुदायी जनपद पञ्चालाना जन-पद पञ्चाला: सन्त्यस्मिन् देशे पञ्चाला' कुरव, मत्स्या' अङ्गा: वङ्गा: सुह्मा' पुण्ड्रा इत्यादि। इह कस्मान्न भवति उडुम्बरा अस्मिन् देशे सन्ति औडुम्बरो जनपद. वैदिशो जनपद इति तन्नाम्नीति वर्त्तते न चेत् लुवन्त तन्नामाभिधेय भवति। वरणादेश्च। वरणादेश्चतुर्षु अर्थेषु उत्पन्नस्य लुप् स्यात्। अजनपदार्थोऽयमारम्भ। वरणाया अदूरभवो ग्राम वरणा एव शङ्कीशाल्मल इत्यादिराकृतिगणोऽयम्। शर्क-राया वा णश्च। शर्कराशब्दाच्चतुर्षु अर्थेषु उत्पन्नस्य लुप् स्यात् वा णश्च वा स्यात्। शर्करा अस्मिन् देशे सन्ति शर्करा पचे ण शार्कर उभयत्यक्तपचे अबाधितत्वात् शार्कराकम् ऋष्यादित्वात् शर्कराक कशादित्वात् शार्करीय कुमुमादित्वात् शार्क-रिक गर्भादित्वात् शर्करिय काशादित्वात् शार्करिणम् उत्करादित्वात् शार्करीय-मिति उक्तश्चातुरर्थिक इति प्रकीर्णकम् ॥ ४३७ ॥

स्याद्यन्तात् त्वतौ स्याता भावेऽर्थे। भावस्तु प्रवृत्तिनिमित्त येन धर्मेण अय गौरिति प्रतीति स्यात् स धर्मो गोशब्दस्य भाव इत्यर्थ साध्व्या भाव' साधुत्व जडाया भावो जडता उभयत्र पुवत् स्युक्तेति पुवद्भाव'। पाचिकाया भाव पाचकत्वम् अत्र नीताककोङ इत्यनेन निषेधेऽपि कोङादि. पुवदिति विशेषविधानात् पुवद्भाव। एव षष्ठ्या भाव षष्ठत्व मैथिल्या भावो मैथिलत्वम् इत्यादौ पुवद्भाव स्यादेव। ब्राह्मण्या भावो ब्राह्मणीत्व दत्ताया भावो दत्तात्वम् उभयत्र तत्रेत्वजात्याख्य इत्युक्तेर्न

## ४३९। लोकोऽघीत् सः ष-स्ति।

लि-इक' ५।, ष घीत् ५।, स ६।, ष १।, ति ७।

अघीत्लोकः सः षः स्यात् तद्धिते ते। यजुष्टम्। घीत्तु गीस्त्वम्।

---

पुवद्भाव। अत्र त्वान्तस्य क्लीवत्व तान्तस्य च स्त्रीत्वमभिधानात्। अत्र उक्तस्य त्वत इत्युभयस्य पूर्वोक्तस्य भावविहितष्यञादेश्च सामान्यविशेषत्वाभावात् वाध्यबाधक त्वाभावे जडस्य भावो जडत्व जडता। जाड्यम्। एव गुरोर्भाव. गौरव गुरुत्व गुरुता इत्यादि स्यादेव ॥ ४३८ ॥

श्री ग-टी—त्वश्च तश्च तौ भावेऽर्थे प्रत्ययात तौ स्त'। शब्दस्य प्रवृत्तिनिमित्त भाव. स चानेकप्रकार क्वचिदनेकेषु एकाकारबुद्धिजनक यथा गोत्वाश्वत्वादिजाति क्वचित् स्वरूपमात्र यथा चैत्रत्व नभस्त्व क्वचित् सम्बन्धित्व यथा शुक्लस्य पटस्य शुक्लत्व जडता क्वचित् द्रव्यसम्बन्धित्व यथा दण्डित्व विशिष्टत्व क्वचित् कर्म्मसम्बन्धित्व यथा पाचकत्व गन्तृत्वम्। साधुत्वमिति साधोर्भाव इति वाक्य येन कर्म्मणा साधुरयमिति बुद्धिर्जायते तत्कर्म्मसम्बन्धित्वमिह भाव.। जडतेत्यत्र जाड्यगुणसम्बन्धित्व जडाया भाव इति वाक्यम् एवं पाचिकाया भाव पाचकत्व तत्वे जात्याख्याभिन्नत्व पुवद्भाव.। ब्राह्मणीत्वमिति जातिः स्वाङ्गेयोश्च पुवद्भाव. एवं चन्द्रमुखीत्वमित्यादि ॥ ४३८ ॥

लेरिक् लोक् तस्मात् नास्ति घीं यत्र सोऽघः तस्मात्। दीर्घवर्जात् लोक परस्य सस्य ष' स्यात् तकारे परे, तकारस्तु प्रकरणबलात् तद्धित एव। यजुषो भाव, यजुष्टम् एव हविष्ट गिरो भाव गीत्वम् अत्र र्व्यनच्त्वयोति दीर्घे विरामे रेफस्य विसर्गे पुनर्विसर्गस्य सकारे षत्वप्राप्तौ दीर्घपरत्वान्निषेध। एव पूत्वम्। लोक. किं बभूस्तराम्। तद्धिते तकारे इति किं यजुस्तेन पठितम् ॥ ४३९ ॥

श्री-रा टी—लेरिक् लोक् तस्मात् न घं अघंस्तस्मात् तीति सीत्यन्त दम्' लेरिक. परस्य सस्य यः स्यात् तसञ्ज्ञतकारे परे न तु परस्य यजुष्टमिति यजुषो भाव इति वाक्य घीत् चूस्त लेः किं कुर्य्युस्तरा कुर्य्युस्तमाम् ॥ ४३९ ॥

## ४४० । चृत् साम्ये ।

चृत् ।१।, साम्ये ७। ।

**उपमानार्थे चृत् स्यात्। कृष्ण इव कृष्णवत्।**

## ४४१ । मतुरस्त्यर्थे ।

मतु १।, अस्ति अर्थे ७। ।

**श्रीरस्ति यस्यासौ श्रीमान्, विदुष्मान् दोष्मान्।**

---

समस्य भाव साम्य तस्मिन् स्याद्यन्तात् चृत् स्यात् उपमानेऽर्थे चकारोऽव्ययार्थ । कृष्ण इव कृष्णवत् शिवो भाति एव कृष्णमिव शिव मन्ये कृष्णवत् एव सर्वविभक्त्यन्तात् चृत् प्रत्यये कृते विभक्तेर्लुक्। द्रव्यसाम्ये यथा कुवेर इव धनी कुवेरवत् गुणसाम्ये चन्द्र इव शुक्ल चन्द्रवत् गुणहीन अन्धवत् क्रियासाम्ये तपस्विवत् ॥ ४४० ॥

श्री-रा टी—समस्य भाव. साम्यम् उपमानम्। कृष्णवदिति अभिधानात् उपमान क्रियाविशेषणीय तेन पुत्रेण तुल्य स्थूल पुत्रेण तुल्य पिङ्गल इत्यादि गुणतुल्ये न स्यात्। एव शिवमिव विष्णु पश्यति शिववद्विष्णु पश्यति ब्राह्मणेन तुल्य वर्त्तते ब्राह्मणवत् वर्त्तते ब्राह्मणवत् चत्रियाय ददाति व्याघ्रवन्मार्जारादिभिति देवदत्तवत यज्ञदत्तस्य धन माथुरवत् स्रुघ्ने प्राकारा षौघ्नो क्रियाग्रहण नानुषज्यते। परे तु दौर्षोत्पन्नेभ्य चृत् त्य कुर्वन्ति भाष्यविरोधात् तच्चन्द्रो न मन्यते किन्तु क्यन्तादेव तन्मतमवलम्ब्य ग्रन्थकृत् सूत्रमिति। अर्हे च। अर्हतीत्यर्हे पचाद्यन् तेरर्हेऽर्थे चृत् स्यात्। राजानमर्हति वृत्त राजवत् वृत्त मुनिवत् वृत्तम् अनभिधानात् ब्राह्मणमर्हति वृत्तम् इत्यत्र न स्यात् ॥ ४४० ॥

तदस्यास्तीत्यर्थे स्याद्यन्तान्मतु स्यात् तेन प्रथमान्तादित्यर्थ'। मतोरुकार' त्रिदचोऽत्वेरिति तुणर्थ' स्त्रियामीवर्थश्च। तेन श्रीमान् श्रीमती। विद्वान् अस्ति यस्य विदुष्मान् अत्र मतौ परे वसोर्वकारस्य उकारविधानसामर्थ्यादेव अकागेडत्वेन प्राप्तस्य वतु बाधित्वा मतु स्यात्। ततश्च मतौ परे वकारस्य उकारे नद तसावित्यनेन दान्तत्वनिषेधात् विरामाभावे सस्ष्वसिति दडोऽप्राप्तौ षत्वम्। एव दोरस्ति अस्य दोष्मान्। मत्वादीना स्थानमाह दुर्गसिंह। भूमनिन्दा प्रशसासु नित्ययोगेऽतिशायने। ससर्गेऽस्ति विवक्षाया मत्वादयो भवन्त्यमी इति। एष्वर्थेषु यदा-

## ४४२। सोङ्म-झपाद्वतुः।

स अ-उङ्-म् झपात् ५।, वतु १।।

**मकारोङोऽवर्णोङो मकारान्तादवर्णान्तात् झपान्ताच्च वतुः स्यादस्त्यर्थे। लक्ष्मीवान् यशस्वान् भास्वान् किंवान् ज्ञानवान् विद्यावान् विद्युत्वान्।**

---

ऽस्तीति विवक्षा क्रियते तदा मत्वादयो भवन्तीत्यर्थ। क्रमेणोदाहरणानि। भूम्नि बहुले गाव सन्त्यस्य गोमान्। निन्दायां पापी। प्रशंसायां रूपवान्। नित्ययोगे क्षीरिणो वृक्षा' अतिशायने उदरवती कन्या। संसर्गे दण्डी पान्थ। अत्र न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इति प्राञ्च। तेन शोभना बुद्धिरिति कर्म्मधारये सुबुद्धिमान् जन इति न स्यात्। शोभना बुद्धिर्यस्यासौ सुबुद्धिरिति बहुव्रीहिणैव तदर्थप्रतिपादनात्। ननु वर्जयेत् द्विदलं शूली कुष्ठी मांस क्षयी स्त्रियम्। द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी। अत्र कर्म्मधारयात् कथमिन्निति चेत् सत्यम्। तरुणोज्वरो यस्येति बहुव्रीहिणा ज्वरस्यास्तित्वमात्र प्रतिपाद्यते न तु ज्वरस्यातिशयार्थ प्रतिपादयितु शक्यते तेनात्रातिशयार्थो मत्वर्थीय स्यादेव। एव मत्वर्थीयात् सद्रूपो मत्वर्थीयो न स्यात्। यथा धनमस्यास्तीति धनवान् पुनर्धनवानस्यास्तीत्यर्थे झभान्तादपि वतुर्न स्यात्। असद्रूपत्व स्यादेव यथाज्ञानमस्त्यस्य ज्ञानी पुनर्ज्ञानिन. सन्त्यस्य इत्यर्थे ज्ञानिमान् राजा इति॥ ४४१॥

श्री-रा-टी—अस्ति अर्थो यस्य यस्मिन् वा अस्त्यर्थस्तस्मिन् अस्त्यर्थो विद्यमानसम्बन्ध' प्रग्रान्तादस्यास्मिन्नेत्यर्थे मतु स्यात् य. प्रग्रान्तनिर्दिष्ट सोऽस्ति चेद्भवति। श्रीमानिति उदित्त्वादत्वसोऽधीरिति घं. त्रिद च इति नुण् श्रीरस्यास्मिन्निति वाक्येऽपि श्रीमान् विदुष्मानिति वसोर्वस्योत्वात् नद तसौत्वस्यर्थ इति दान्तत्वनिषेधात् क्लिादिति ष। एव दोष्मानिति। यवादेश्च। यवादेरस्त्यर्थे मतु स्यात्। यवोऽस्यास्मिन् वास्ति यवमान् एव तिमिमान्। यव क्मिमि' क्रमि भूमिर्द्राक्षा क्रुञ्चा हरित् गरुत्। ऊर्म्मि चामि ककुद्रश्मिद्रुम द्रूम धुरन्धरा। कान्तोत्तु वसुसानूनि भानुसिद्ध्यशुविन्दवः। वस्तु चारु हनु प्रोक्ता शेष शिष्टप्रयोगत। इह यवद्राक्षा क्रुञ्चाभ्योऽवर्णान्तात् तिमि क्रमि भूमि ऊर्म्मि चामि रश्मि द्रुमेभ्यो मुडत्वात् हरित्

गरुत् ककुद्मी झपान्तत्वात् इतरेभ्योऽसञ्ज्ञात्वात् प्राप्तो वतुर्बाध्यते दिश्वान् गोधुग्वादित्यादि स्थानिवत्त्वान्न वतु ॥ ४४१ ॥

मश्च अश्च मौ, मौ उङौ ययोस्तौ मोङौ, मोङौ च मश्च अश्च झपश्चेति तस्मात्। लक्ष्मीरस्त्यस्य लक्ष्मीवान् एव यशस्वान् भास्वान् इत्युभयत्र दान्तत्वनिषेधात् सस्य न विसर्गः। एव विद्युत्वान् इत्यत्र तकारस्य न दः। अत्र कुमुद्वेतसानामल्लोपो वतौ नडस्य तु वतु वत्वयोरिति मनीपादित्वात् कुमुदानि सन्त्यस्य कुमुद्वान्। एवं महिष्मान् नड्वान् नड्वल। अत्र रज आदित्वादिलः एव वतौ राज्ञः प्रशंसायां न लोपाभावो निपात्य। शोभनो राजा अस्त्यस्य राजन्वान् देश अन्यत्र राजवानिति ॥ ४४२ ॥

श्री-रा-टी—म च अश्च म मसुङ् मोङ् च म च अश्च झपश्च तत्तस्मात् झपप्रत्याहार। लक्ष्मीवान् इति लक्ष्मीरस्ति अस्याम्मिन् वा इति वाक्यम्। पूर्ववत् र्घ, नुण् स्यान्तर्लुप् च। अवर्णोङमुदाहरति यशस्वान् भास्वान् इति मान्तमुदाहरति किं वान् इति अवर्णमुदाहरति ज्ञानवान् अज्ञावानिति झपान्तमुदाहरति विद्युत्वान् इति तान्तत्वान्न दम्। मतोरपवादः। सञ्ज्ञायाञ्च। सर्वस्मात् ले सञ्ज्ञायां विषयेऽस्त्यर्थे वतुः स्यात् अहिरस्त्यस्या अस्या वा अहीवती कपीवती अनीवती अग्निक्षीवान् ग्रामः। नाम्नस्त्वर्थे चोर्घ इति र्घः। चक्राष्ठिकक्षासनाना चक्राऽष्टीकक्ष्यसन्द्यो वतौ। एषामेते आदेशा स्यु सञ्ज्ञाया वतौ। चक्रमस्त्यस्याम्मिन् वा चक्रीवान् असञ्ज्ञाया चक्रवान् अस्थ्यस्त्यस्याम्मिन् वा अष्टीवान् अन्यत्रास्थिमान कक्षाऽस्त्यस्याम्मिन् वा कक्षीवान् ऋषिभेद. अन्यत्र कक्षावान्। आसनमस्त्यस्याम्मिन् वा असन्दीवान् ग्राम अन्यत्र आसनवान्। उदकस्योदन् नृर्युदध्यो। उदकशब्दस्य उदन्नादेश स्यात् अनयोरर्थयोर्वतौ। उदकमस्त्यस्याम्मिन् वा उदन्वान् ऋषिः समुद्रश्च उदकम् आधीयते यस्मिन् स उदधिर्घटादिरपि तेन उदन्वान् घट उदन्वन् मेघ उदकवान् घट इत्यत्र तु सम्बन्धमात्रविवक्षणात्। प्राण्यङ्गक्षुद्रजन्तुरोगादादन्ताद्वा। प्राण्यङ्गवाचकात् क्षुद्रजन्तुवाचकात् रोगवाचकाच्चाकारान्तात वतुर्वा स्यात् अस्त्यर्थे। चूडास्त्यस्याम्मिन् वा चूडावान् पक्षे चूडादित्वात् ल. चूडाल: कर्णिकाल शिखाशब्दात्तु इना लो बाध्यते शिखावान् शिखी यूकास्त्यस्याम्मिन् वा यूकावान् यूकाल। विवर्चिकावान् विवर्चिकाल मूर्च्छावान् मूर्च्छाल। एभ्य किं शिक्षावान् आदन्तादिति किं हस्तवान् सङ्कुलवान् ज्वरवान्। चूडादिपाठात् विकल्पे सिद्धे वा ग्रहण नियमार्थं तेन वलभावपक्षे ल एव ॥ ४४२ ॥

## ४४३। स्रङ्मेधास्मायात् विन् वा।

स्रज् मेधा—अस् मायात् ५।, विन् ।१।, वा ।१।।

**स्रग्वी मेधावी तेजस्वी मायावी। पक्षे स्रग्वान् इत्यादि।**

## ४४४। नैकाजादिन् वा।

नैकाजात् ५।, इन् ।१।, वा ।१।।

**अनेकाचोऽवर्णान्तादिन् वा स्यात् अस्त्यर्थे। ज्ञानी शिखी।**

---

स्रज च मेधा च अस् च माया चेति तस्मात्। एभ्यो विन् स्याद्वास्त्यर्थे। स्रक् अस्त्यस्य स्रग्वी अत दान्तत्वनिषेधाभावाद्विरामे चुडिति कुडादि॥ ४४३॥

गोरा-टी—स्रक् च मेधा च अस् च माया च तत्तस्मात्। एभ्योऽस्त्यर्थे विन् वा स्यात्। स्रग्वीति स्तनपूषेति घः नोलुप्फ़िधाविति न लुप्। एवं मेधावी मेधावान् तेजस्वीति असन्तत्वाद्विन् एव पयस्वीति ज्यौत्स्नादित्वात्तापस पक्षे तपस्वान्। एव मायावी मायावान्। वाशब्दस्य व्यवस्थावाचित्वात् आमयावी आमयावान् नाम्नास्त्यर्थेऽचीर्घ. इति आमयीति। ऊर्जोऽसश्च साहङ्कारे। ऊर्जशब्दात् विन् स्यात् तस्मिन्नसंश्च साहङ्कारे। ऊर्क् अस्त्यस्यास्मिन् वा ऊर्जस्वी साहङ्कार अन्यत्र ऊर्ज्वान्॥ ४४३॥

न एको नेकः नेकोऽच् यस्य स नेकाच् नैकाचासौ अश्चेति नैकाज तस्मात्। ज्ञानमस्त्यस्य ज्ञानी एव शिखी। एव माला अस्यास्तीति माली तत स्वार्थे कप्रत्यये मालिक एव दण्डिक इत्यादि। वाशब्दोऽत्र मत्वादीना विषयव्यवस्थापक । तेनेश विद्रवीमि। यवादिरस्त्यर्थे वतुर्न स्यान्मतुरेव। यथा यवमान इत्यादि। ते च यवो द्राक्षा ककुत्क्रुञ्चा गरुत् भूमि क्रिमि क्रमि। हरिदुर्मि दश-भ्यस्तु वतु नेच्छन्ति पण्डिता इति। चुद्रागोत्राभ्यामपीति कातन्त्रा.। द्रुमकर्णवधेभ्योऽपीति कौमारा। एव पूरणप्रत्ययान्तात् वयसि इन्नेव। पञ्चाना पूरण पञ्चमी दिवसो मासो वत्सरो वा सोऽस्यास्तीति पञ्चमी पुत्रः। वयस्तु मतपरमायु । परमायुस्तु प्राणधारणकालः। तेन पञ्चमवान् हव। तथा अस्वाङ्गात् प्राणिस्थद्वन्द्वात् निन्दितरोगाच्च। कटकवलयी हारकुण्डली कुष्ठी। अस्वाङ्गात् किं स्तनकेशवती। प्राणिस्थात् किं धवखदिरवान् देश.। द्वन्द्वात् किं हारवान्। निन्दितरोगात् किं

ज्वरवान्। सर्वपूर्वात्। सर्ववीजी सर्वकेशी। धर्मशीलवर्णान्तात्। विप्रस्य धर्मो विप्रधर्मः सोऽस्यास्तीति विप्रधर्मी पण्डितशीली ब्रह्मवर्णी तदन्तात् किं धर्मवान्। वर्णात् सञ्ज्ञायाम्। वर्णी ब्रह्मचारी। अन्यत्र वर्णवान्। हस्तदन्तकरान्नाम्नि। हस्ती दन्ती करी गजः। नाम्नि किं हस्तवान् योधः। व्रीह्यादेः। व्रीहिरस्यास्तीति व्रीही कर्षक एव शाली। रूढदेशे पुष्करादेः। पुष्करिणी। पुष्करादिस्तु। पुष्कर उत्पल नड विस तमाल कपित्थ कुमुद मृणाल कर्दम शालूक करीष हिरण्यादि। रूढदेशे किं पुष्करवान् हस्ती। मनन्तमान्ताभ्यां नाम्नि। दामिनी सोमिनी। नाम्नि किं दामवान् सोमवान् मकारोऽवादन्तः। एवं सुखी दुःखी अलीकी च करुणी कृपणी हली। कृपी कुक्षी प्रतीती च इत्यादेरिन् विधीयते। अथ निपात्याः। पार्णिधमनिभ्यामीनो वास्त्यर्थे। पार्ष्णीनः पार्णिमान् धमनीनः धमनिमान्। शाकसमूहो महाशाको वा शाकी पलालसमूहो महापलालो वा पलाली। तथाहि शाकी पलाली सरसी शाकाद्योघमहत्त्वयोरिति रत्नाकरः। कद्रूशाकी पलाशीभ्योऽस्त्यर्थे न तासां ह्रस्वश्च। कद्रुणः शाकिनः पलाशिनः। कद्रुर्नागमाता गोधा वा। लक्ष्मीशब्दादस्त्यर्थे वा डनः। लक्ष्मण डित्वात् टिलोपः। पक्षे लक्ष्मीवान्। मलादीमसो वा। मलीमसः। पक्षे फलादित्वादिने मलिनः। पक्षे मलवान् इति। आमयादाविन्। आमयावी॥ ४४४॥

श्रीरा-टी—नासेरकाच् यस्य नैकाच् नैकाचासावश्चेति नैकाजस्तस्मात् ज्ञानीति यद्योर्लोप इत्यकारलोपः। अभिधानादादन्तात् शिखादावपि शिखीति। शिखादिर्यथा। शिखा वीणा घृणा सञ्ज्ञा पताका वडवाष्टका। मनीषा मेखला दंष्ट्रा शाखा केका गदा यवा। वीणा माला फला माया परे शिष्टप्रयोगतः। पक्षे शिखावान् वीणावानित्यादि। नैकाजतोऽसुखादेरिकः। सुखादिवर्जितादनेकाचोऽकारान्तादिकः स्याद्वा। ज्ञानमस्त्यस्याज्ञिन् वा ज्ञानिकः दण्डिकः पक्षे ज्ञानी ज्ञानवान्। असुखादेरिति किम्। सुखी सुखवान्। सुखादिर्यथा। सुख दुःख हलानीक क्षक्रवान व्रतोद्यमाः। मानोत्साहालकोद्दाम मुकुल स्तवकं फलम्। परिणाहनयारोहाऽवरोह निचुला अपि। व्यायाम वर्मकर्माणि व्रत प्रतिप कर्म च। कचा प्रणयसोढाऽस्त्रोपयाम करुणापि। कृपणेन सह प्रोक्ता परे शिष्टप्रयोगतः। धर्मशीलवर्णान्तादिन्। धर्मान्तात् शीलान्तात् वर्णान्ताच्चास्त्यर्थे इन् स्यात्। द्विजधर्मी भिक्षुशीली विप्रवर्णी। अन्तादिति धर्मवान् शीलवान्। करदन्तहस्तादिभ्यः। एभ्यो गजे वाच्येऽस्त्यर्थे इन् स्यात्। करी दन्ती हस्ती

अन्यत्र करवान् दन्तवान् हस्तवान्। मालाया चेपे। मालाशब्दात् चेपे गम्यमानेऽस्त्यर्थे इन् स्यात्। माली अन्यत्र मालावान् शिखादिपाठात् माली च। पूरणान्तात् वयसि। पूरणत्यान्तात् वयसि गम्यमानेऽस्त्यर्थे इन् स्यात्। पञ्चमी मासो वर्षोऽस्य पञ्चमी उष्ट्र' दशमी वृड अन्यत्र पञ्चमवान्। वर्णात् ब्रह्मचारिणि। वर्णशब्दात् ब्रह्मचारिण्यर्थे इन् स्यात्। वर्णी ब्रह्मचारी अन्यत्र वर्णवान्। अर्थतदन्तादाकाङ्क्षिणि। अर्थशब्दात् अर्थशब्दान्ताचाकाङ्क्षिण्यर्थे इन् स्यात् अस्त्यर्थे। अर्थी याचक. धान्येनार्थ धान्यार्थ सोऽस्यास्ति धान्यार्थी यवार्थी अन्यत्रार्थवान्। मन्मान्ता-न्नाम्नि। मनन्तात् मान्ताच सञ्ज्ञायामिन् स्यात् अस्त्यर्थे। प्रथिमिनी दामिनी मान्ता-त्सोमिनी यामिनी स्वभावात् स्त्रीत्वम्। पुष्करादेर्देशे। पुष्करादिभ्यो देशे वाच्येऽस्त्यर्थ इन् स्यात्। पुष्कराणि तीर्थानि अस्मिन् देशे सन्ति पुष्करिणी पद्मिनी उत्पलिनी। पुष्करोत्पल शालूक शिरीष पद्मकर्दमाः। तमाल नलकार्म्बील तरङ्गकुसुमानि च। यवस कैरव चापि प्रोक्तान्यत्र चतुर्दश। स्वभावादस्यापि स्त्रीत्वम् अन्यत्र पुष्करवान्। प्राणिस्थादतोऽस्वाङ्गाचर्मे। प्राणिनि तिष्ठतोति प्राणिष्ठस्तस्मादकारान्तात् साङ्ग-वर्जितात् चर्मे इन् स्यात् अस्त्यर्थे। कटकवलयिनी शङ्खनूपुरिणी स्वाङ्गात्तु स्तनकेश-वती अत इत्येव चित्रकमलटिकावती च इति किं शङ्खवती नूपुरवती सिन्दूरवती। रोगगर्ह्याच। रोगवाचकात् निन्दावाचकाच प्राणिस्थाददन्तादस्त्यर्थे इन् स्यात्। कुष्ठी किलासी शूली गर्ह्यात् ककुदावर्त्ती हय प्राणिस्थादिति किं पुष्पफलवान् पुष्पवान्। अत इति किं मूर्च्छावान्। सर्वपूर्वाल्लेर्बाह्वरुपूर्वात्तु बल.। सर्वशब्द-पूर्वाल्लेरत इन् स्यात् अस्त्यर्थे बलात्तु बाह्वरुपूर्वात्। सवधनी वार्धुषिक. सर्वकेशी नट बाहुबली ऊरुबली सर्वबलीति पूर्वेण। नावादेरिकौ वा। नावादेरस्त्यर्थे इक स्याद्वा। नौरस्ति यस्यासौ नाविक। नौ कुमारी सभा माया यवखदा करणेन ह्रि। पक्षे नौमान् यवखदावान् मायाशब्दस्य शिखादित्वात् मायी मायावाश्च। व्रीह्येतौ। व्रीहिशब्दादस्त्यर्थे इन्निकौ स्याताम्। व्रीहिरस्ति यस्यासौ व्रीही व्रीहिक यर्योर्लोप इति इकारलोप पक्षे व्रीहिमान्। शिरस. शीर्षं च वतौ। शिर शब्दादस्त्यर्थे इन्निकौ स्याता तयो शीर्षादेशश्च वतौ च। शिरोऽस्यास्ति शीर्षी शीर्षिक पक्षे वतौ शीर्षवान्। स्वाङ्गात् ह्वौ। स्वाङ्गवाचकात् ह्वौ वर्त्तमानादस्त्यर्थे तौ स्याताम्। कर्णी कर्णिक पक्षे कर्णवान् फलादि-त्वात् कर्णिन। न शत्यर्थे। शत्रा अर्थे तौ न स्याताम्। दण्डोऽस्त्यस्मिन्नित्यर्थे दण्ड-वान् दण्डोऽस्त्यस्यासौ दण्डी दण्डिक. दण्डवाश्च। अकार्य्यादित्वत.। कार्य्यादि-

४४५ । शं-कं-भ्यां य-यु-त-तु-ति-व-भाः ।

श क भ्या ५॥, य—भा १॥ ।

शयः शयुः शन्तः शन्तुः शन्तिः शंवः शम्भः ।

४४६ । गो तृण मेधा दन्त काण्ड द्यु बल बलि पर्व चूड़ा फेन लोम पाम प्रज्ञा मधु केश रजः फलोर्णा शृङ्ग निद्राऽर्शो वातादेर्मिन् सेरो-रेग्मोलिभ तलेल श न ण रववलेनयारकाल्व-किन् वा ।

गो वातादे. ५., मिन्-किन् ।१।, वा ।१। ।

एभ्य एते क्रमात् स्युरस्त्यर्थे वा । गोमी ।

---

वर्जितात् क्षदन्तात् तौ न स्याताम् । पाचकवान् कारकवान् स्नेहवान् कुम्भकार-वान् ईश्वरवान् हिंस्रवान् । यक्तोऽनयण् वरौ वस्त्रा धान्यद्रव्यादय स्मृता । यथा धान्यवान् द्रव्यवान् पुण्यवान् माल्यवान् सत्यवान् भाग्यवान् अपत्यवान् इत्यादि प्रयोगानुसारेण ज्ञातव्या । कार्यादेस्तु कार्यी कार्यिक कार्यवान् । कार्यादिव गृहस्थान पीतभोगादयो मता । जातेरतण्डुलादे । जातिवाचकात् तण्डुलादि-वर्जितात्तौ न स्याताम् । व्याघ्रवान् गजवान् अश्ववान् इत्यादि । तण्डुलादेस्तु तण्डुली तण्डुलिक तण्डुलवान् । कपटी कपटिक कपटवान् इत्यादि । यदुक्तम् । एकाचरात् क्षती जाते सप्तम्याश्च न तौ स्मृताविति ॥ ४४४ ॥

शम् कम् इति मान्ताव्ययाभ्याम् एते सप्तप्रत्यया स्युरस्त्यर्थे । शम् अस्त्यस्य शय अत्र टिलोपाभाववीज व्यटिलोप इत्यत्र इत्यम् । एवं नद तसावित्यत्र नञा निर्दिष्टमनित्यमिति न्यायात् दान्तत्वनिषेधाभावे मस्यानुस्वार । एवं शयु-रित्यादि ॥ ४४५ ॥

श्रीरा टी—शञ्च कञ्च तौ ताभ्याम् । यञ्च युञ्च तञ्च तुञ्च वञ्च भञ्च ते । शय इति शमष्टेर्लोपाभाव. युसमभिव्याहृतये ॥ ४४५ ॥

उदाहरणे बोध्यम् ॥ ४४६ ॥

## ४४७ । नाम्न्यस्त्यर्थेऽचो घं ।

नाम्नि ७।, अस्त्यर्थे ७।, अच ६।, घं १। ।

स्वामी, तृणसः, मेधिरः, रथिरः दन्तुरः, काण्डीरः, अण्डीरः, द्युमः द्रुमः वलूलः, वातूलः बलिभः तुन्दिभः पर्वतः, मरुत्तः, चूडालः, मांसलः, फेनिलः, पिच्छिलः, लोमशः, रोमशः, पामनः, अङ्गना, प्राज्ञः, श्राद्धः, मधुरः, कुञ्जरः, केशवः मानवः, रजस्वला, कृषीवलः, फलिनः, बर्हिणः, ऊर्णायुः, अहंयु, शृङ्गारकः वृन्दारकः, निद्रालुः, दयालुः, अर्शसः, वैजयन्तः, वातकी, अतिसारकी ।

---

श्रीरा टी—गौश्च तृणञ्च मेधा च दन्तश्च काण्डश्च द्युश्च वलश्च बलिश्च पर्व च चूडा च फेनश्च लोम च प्रज्ञा च मधु च केशश्च रजश्च फलञ्च ऊर्णा च शृङ्गञ्च निद्रा च अर्शश्च वातश्च ते आदयो यस्य तत्तस्मात् मिश्च सश्च इरश्च उरश्च ईरश्च मश्च ऊलश्च इभश्च तश्च लश्च इलश्च शश्च नश्च णश्च रश्च वश्च वलश्च इनश्च युश्च आरकश्च आलुश्च अश्च किश्च तत् । गोमीति इनपुषेति घं पूज्य इत्यर्थ । यद्यपि सामान्ये-नोक्त तथाप्यभिधानात् अर्थविशेषे ज्ञातव्यः । तेन गोस्वयोः पूज्येश्वरयोरभिधान पक्षे गोमान् ॥ ४४६ ॥

अचो दीर्घं स्यादस्त्यर्थप्रत्ययेषु नाम्नि वाच्ये । स्वोऽस्यास्तीति स्वामी ईश्वर । गवादित्वान्मिनि अनेन दीर्घं । असञ्ज्ञाया स्वशब्दस्य गवादित्वाभावे स्ववान् इति एवम् अष्ठीवान् । शरादेर्नाम्नि वतौ दीर्घं शरावती । शरादिस्तु । शर वंश पद्म धूम अहि कपि मणि मुनि चन्द्र इत्यादि । अत्र येभ्यो वतुर्न सम्भवति तेभ्योऽपि नाम्नि वतु स्यात् शरादिगणपाठसामर्थ्यात् । नाम्नि किं शरवान् ग्राम । अजिर खदिर खपुर पुलिन मलय कारण्डव चक्रवाक वर्जंवह्वचो वतौ नाम्नि दीर्घं । उडुम्बरावती मशकावती नाम्नि किं मशकवान् ग्राम । तृणादेः स. दन्त्य । तृणस । तृणादिस्तु । तृण पर्णं नड वर्णं स्वर्णं दल वल जल । ८ । मेधादेरिर । मेधिर रथिर इत्यादौ ययोर्लोप इति इवर्णावर्णयोर्लोप । दन्तादेरुर । दन्तुरः इति पाददन्तेत्यत्र पादशब्दस्य व्यवस्थावाचित्वात् नददादेश । काण्डादेरीरः

गौर' काण्डीर अरुडीर'। द्यु आदेर्म। द्युम द्रुम। वलादेरूल' दीर्घो। वलूल'। वलादिस्तु। वल वात ललाट दन्त गल। वल्यादेरिभ। वलिभ। वल्यादिस्तु। वलि तुन्दि वटि। ३। पर्वादेस्त। पर्वत मरुत्त। चूडादेर्ल। चूडाल। चूडादिस्तु। चूडा सिध्मन् गडु नाभि वीज प्रज्ञा निष्पाव पांशु हनु करद मणि सक्थि लक्ष्मी मांस स्नेह जटा वत्स पक्ष श्याम उदश्वित पुष्प पिङ्ग पक्ष्मन् पृथु मञ्जु कण्डु कपि जटु चटु पत्र पर्ण मृदु कृष्ण पेश फेन श्लेष्मन्। ३७। फेनादेरिल। फेनिल। फेनादिस्तु। फेन पिच्छा ध्रुवका ध्रुवका प्रज्ञा पूर्णा कल पादक व्रीहि पार्ष्णि धमनि। ११। लोमादेः श तालव्य। लोमश। लोमादिस्तु। लोम रोम रुरु बभ्रु हरि तरु कपि स्वर्ण कर्क। १०। पामादेर्न। पामन। पामादिस्तु। पाम श्याम श्लेष्म दद्रु कृमि वलि वाम अङ्ग। ८। प्रज्ञादेर। णिल्लात् हृद्रौ प्राज्ञ। प्रज्ञादिस्तु। प्रज्ञा श्रद्धा अर्चा वृत्ति शर्करा सिकता ज्योत्स्ना। ७। शर्करादिभ्य स्त्रियामीप् वक्तव्य। मध्वादेर। मधुर। मध्वादिस्तु। मधु कुञ्ज शुषि उष पुष्प मुख नख पांशु पाण्डु बन्धु खलता सिन्धु कच्छु। कच्छाकस। कच्छुर। केशादेर्व योऽश्व। केशादिस्तु। केश मणि हिरण्य कुमार विल विषु राजी इष्टका गाण्डी अजकः। १०। रज आदेर्वल। रजखला। रज आदिस्तु। रजस् कृषि दन्त पुत्र भ्रातृ उत्साह शिखा परिषत् पर्षत्। ९। कृषीवल दन्तावल इत्युभयत्र नाम्न्यस्त्यर्थे दीर्घ। फलादेरिन। फलिन। फलादिस्तु। फल वर्ह शृङ्ग मल। ४। ऊर्णादेर्युः। ऊर्णायु। ऊर्णादिस्तु। ऊर्णा अहम् शुभम्। ७। अहंयु शुभंयु इत्युभयत्र युवर्जनादव्यटेर्लोप। शृङ्गादेरारक। शृङ्गारक एष वृन्दारक। निद्रादेरालु। निद्रालु। निद्रादिस्तु। निद्रा दया तन्द्रा श्रद्धा कृपा हृदय। ६। अर्श आदेर। अर्शस। अर्श आदिस्तु। अर्शस् वैजयन्ती उरस् उदर चतुर पलित जटा घाटा अभ्र इत्यादि। वातादे किन्। वातकी। वातादिस्तु। वात अतिसार प्रतिसार। ७। अत्र वाशब्दस्यानुक्तसमुच्चयार्थत्वात् सर्वेभ्य शालिन् वा स्यादस्त्यर्थे। श्रीशाली धनशाली तेजःशाली गीशाली इत्यादि ॥ ४४७ ॥

श्रीरा-टी—मत्वायाम् अस्त्यर्थे त्वे परेऽचोर्ष स्यात्। प्रायिक च तत्। स्वामीश्वर पक्षे स्ववान। गोस्वी गवादौ। तृणादे स। तृणस तृणादिश्चातुरर्थिके उक्त पक्षे तृणवान्। मेधादेरिर मेधिर इति मेधास्ति यस्य यस्मिन् वा आदिशब्दात रथिर रथिक रथवान्। दन्तादुर। आदिशब्दोऽत्र न प्रयुज्यते

प्रयोजनाभावात् दन्तुर इति उन्नतेऽभिधानात्। अन्यत्र दन्तवान्। काण्डादेरीर : काण्डीर इति पक्षे काण्डिक काण्डवान् आदिशब्दादण्डीर पक्षे अण्डवान्। द्यु आदेर्म द्युशब्द दिवसवाचक द्युम इति द्युमान् आदिशब्दात् द्रुम इति द्रुशब्द वृक्षावयववाचक. पक्षे द्रुमान्। बलादेरुल। बलूल इति पक्षे बल ान् बलवातौ गलदण्डौ ललाट पञ्चमी मत। बल्यादेरिभ बलिभ इति यस्य लोप इतीकार-लोप। पक्षे बलिमान्। बलितुण्डिवलजस्तथ.। पर्वादेस्त। पर्वत इति पक्षे पर्ववान् आदिशब्दान्मरुत् नद तसाविति नदम्। चूडादेर्ल चूडाल इति पक्षे चूडी चूडावान्। चूडा मणी मास गडुश्च नाभि प्रज्ञा कपि पाशुपटू च कर्ण। सिध्मा च निष्पाव स्टूढ कृष्ण स्नेहश्च पेष पृषुपत पर्ण। बीजश्यामोदक कर्तु बत्र फेनश्च सक्थि च। जङ्घा पर्शुर्हनु सूक्ष्म श्रीशते पटुमञ्जर। घाटाकाल जटाक्षेपे बल-वत्यस एव हि। चूडादौ कथितास्त्वेते वत्सल स्नेहवत्यपि। अथ प्राण्यङ्गमावन्त तथा काक क्षुद्रजन्तव। घाटा अस्ति अस्यास्मिन् वा घाटाल फेनादित्वात् घाटिल एव कालन कालनिन अस्याचन्द्रादिभिर्नोच्यते। जटाल. जटिल क्षेपे अन्यत्र घाटा-वान् कालवान् जटावान् बलवति असल अन्यत्वासवान् दुर्बल स्नेहवति स्नेहल अन्यत्र स्नेहवती गौ। प्राण्यङ्गावन्त्वात् कर्णिकाल कर्णिकावान् गज। शिखाया प्राण्यङ्गत्वेऽपि अनभिधानान्नेह शिखीति पूर्वेणैव प्राणिग्रहण कि शिखावान् शिखा वेदस्याङ्ग न तु प्राणिन.। रुगावन्त्वात् मूर्च्छाल विचर्चिकाल.। क्षुद्रजन्त्वावन्त-त्वात् यूकाल. मक्षिकाल इत्यादि। आवन्तादिति कि हस्तवान् ज्वरवान् मशक वानित्यादि। फेनादेरिल। फेनिल इति। फेन कर्णादिक प्रज्ञा ध्रुवका ध्रुवका कला। पिच्छिण्ड यवपिच्छाश्च कोकव्रीहि गुहाग्रहा। जङ्घा पादोदक पङ्क कर्ण तुण्ड शटा वसा.। शर्करा सिकतादिश्च क्षेपे काल घटा जटा। पार्ष्णिश्च धमनिश्चैव फेनादौ परिकीर्त्तिता। कैश्चित् गुहाग्रहशब्दौ न पठ्यते। पार्ष्णि-धमनिभ्यामीनी वा। आभ्यामीनी वा स्यात् अस्त्यर्थे। पार्ष्णीन पार्ष्णिन पक्ष पार्ष्णिवान् धमनीन धमनिन. पक्षे धमनिवान्। लोमादे. श। लोमश इति। लोम रोम तरुमान वरुवर्कौ कपिर्हवि। बहुवन्स दशोद्दिष्टा लोमादौ ग्रन्थकी-विदे। पामादेर्न। पामन इति पाम अस्ति अस्य अस्मिन् वा इति वाक्यम्। पाम श्लेष्मा कृमिर्दद्रुर्वलिश्च वामसामनी। अङ्ग तु स्यात् प्रशसाया निलिसो ज्योतिषो हि लुक्। कद्रुशाकी पलाशीना स्त्री नेलक्षुरास्तुडस्तथा। विश्वश्च दक्षतेर्लुक् च गणसूत्रप्रमाणत। अङ्गनेति प्रशसाया स्वभावात् स्त्रीलम् अन्यत्राङ्गवती नेपरे

ज्योतिष इणो लुक् ज्योत्स्ना इन्दुद्युतावभिधानम् अन्यत्र ज्योतिष्मती कद्रूर्नागजननी गृहगोधा च कद्रुण शाकी शाकसमूहे स्यात् महत्शाके वा शाकमस्यास्मिन् वा शाकिन पलाशी महत्पलाशे पलाशसमूहे वा पलाशिन तथाणा स लक्ष्मण्ड लक्ष्मण विषु अञ्चते क्विप् विष्वगस्त्यस्मिन् वा विषुण अञ्चतेर्लुक् । प्रज्ञादेर्ण । प्राज्ञ इति । प्रज्ञा श्रद्धा च भल्लूकौ मालुकभलुकावपि । भल्लूकश्च यवश्चापि रोहिणो मरुदित्यपि । काण्डोल वकवत्यर्चा लाङ्गूलवयसावपि । मध्वादेर । मधुर इति । मधु माधुर्यमस्त्यस्मिन् वा मधुरो रस शब्दशक्तिस्वभावात् विवक्षितार्थ एव त्य द्रव्याभिधानन्तु तद्योगात् मधुरो गुड यथा शुक्लादिगुणयोगात् शुक्ल पट इत्यादि। मधुपक्षमुख' पांशु रूष पाण्डु नखं शुषि । वल्गुरव्यय मज्ञाया खकुञ्जनगसिन्धव । खस्तु कच्छ्वा शिखायाश्च तमसस्तु तिमिस्तमि । खरो गर्दभ' कुञ्जरो हस्ती नगरो जनपद सिन्धुरोदेश कच्छुरस्त्यस्मिन् वा कच्छुर रे स्व' अन्यत्र कच्छमान् एव शिखा अस्यास्ति शिखर तमोऽस्यास्ति तिमिर तमिस्र पक्षे तमस्वितमस्वत् । केशादेर्व केशव इति । केशोऽष्टकामानहिरण्यराजी कुमार विश्वाश्च विधुर्विषव्यम् । अर्ण सलुग्वेजकाजगवौ तु नाम्न्येव गाण्डी च परे प्रयोगात् । अर्णोऽस्यास्त्यस्मिन् वा अर्णव: सकारलुक् रूढिशब्दात् अत्रान्यत्वस्य निवृत्ति अजो विष्णु को ब्रह्मा ताव-स्मिन् विद्येते अजक धनु अथवा अजो मुख्योऽस्य मुख्ये क सोऽस्त्यस्मिन् वा अजकव परेकदेशिनस्तु अजकावमित्याहु' । अज गच्छति अजग सोऽस्त्यस्या-स्मिन् वा अजगवमिति चान्द्रा । गाण्डी ग्रन्थि सोऽस्त्यस्मिन् वा गाण्डीव अर्जुन धनु । रज आदेर्वल. । रजस्वलेति स्त्रीधर्मिण्यभिधानम् । नाम्नि रज शिखा-दन्त परिषत् कृषिर्वात्वति. । भावोत्सङ्गोत्साहपुत्राश्चलार' सुरनाम्नि । शिखा-वलो मयूर दन्तावलो हस्ती परिषद्वलो राजा अप्रतिसदेति य. । मूले कृषो वल-इति नास्तीति र्ष भ्रातीवल शौण्डिक. षट् सञ्ज्ञायाम् असञ्ज्ञायान्तु भ्रातृवल । उत्सङ्गवल' उत्साहवल । ऊर्जोऽसहनवलेऽहङ्कारे । न इस् ऊर्जस्वल साहङ्कार । फलादेरिन फलिन इति । फल वर्ह पर्णो गर्भो मल शृङ्गञ्च कथ्यते । मलादीमसो वा । मलशब्दादीमस स्याद्वा अस्त्यर्थे । मलीमस. मलीन. मलवान् बर्हिण इति घूर्ण इति ण पक्षे वर्होत्यादि । ऊर्णादेर्यु. । ऊर्णायुरिति ऊर्णा मेषलोम अयुक्ताविति नाकारलोप । ऊर्णा शुभमहत्त्वय' । शुभम् अहं शब्दौ शुभाहङ्कारयो-र्वर्तेते स्वादिपाठात् व्यौ । निद्रादेरालु । निद्रालुरिति । निद्रा तन्द्रा दया लज्जा कृपा हृदयमेव च । अर्श आदेर. अर्शस इति वैजयन्त इति वैजयन्ती माला अस्ति

## ५५२। भू स्था पिवदेनो लुक पे।

भू-स्था पिव दा इन' ५।, लुक् ।१।, पे ७।।

एभ्यः सेर्लुक् स्यात् पे। अभूत् अभूताम्।

## ५५३। भुवो वन् टौव्यचि।

भुव ६।, वन् ।१।, टौव्यचि ७।।

भुवो वन् स्यात् टौव्योरचि परे। अभूवन्। अभूः अभूतम् अभूत, अभूवम् अभूव अभूम।

## ५५४। वसोऽरस्येमनौदितः।

वस' ६।, अरस्य ६।, इम् ।१।, अनौदित' ५।।

अनौदितो धोः परस्य अरस्य वसस्य इम् स्यात्।

अभविष्ट अभविषाताम्।

---

बाधक.। तेन कर्त्तरि अभविष्ट असविष्ट। कर्म्मणि अभाविषाताम् असाविषाताम् ॥५५१॥

भूश्च स्थाश्च पिवश्च दाश्च इन् चेति तस्मात् पिव इति निर्द्देशात् पाल रक्षणे पैशोषे इत्येतयो अपासीत्। दाइति दा सञ्ज्ञा तेन दैपशोधने इत्यस्य अदासीत्। अभूदिति व्या रत्वादसोरस्येति नेम्। ङित्वान्न गुणः। लुक्करणात् त्यलोपे त्यलक्षणमिति न्यायात् प्राप्तव्यकार्य्यस्य लुकि न तदेति निषेधात् व्रजवदेत्यनेन वृद्धिर्न स्यात् ॥५५२॥

टौव्योरच् टौव्यच तस्मिन्। भुव इति पञ्चम्यन्ताद्व इति कृते भुवो गुणापत्तिरिति षष्ठ्यन्तात् वन् विधान इदानीन्तु स्वावयवत्वेन वनो निमित्तत्वाभावान्न गुणः वकारे अकार उच्चारणार्थ. ॥ ५५३ ॥

न रौऽरस्तस्य। नास्ति औत् इत् यस्य सोऽनौदित् तस्मात्। वस इति पूर्ववकारादि प्रत्याहार.। इमो वसस्थानजातत्वेन तत्तुल्यत्वात् विवरिथ इत्यादौ गुण दुदुविव इत्यादौ न गुण'। औदितस्तु। पचतिर्मुञ्चतिविचिविविचिसिचयो णिजिवक्तिभजिप्रच्छिमज्जतय'। भुजिरञ्जिरुजित्यजिभ्रज्यतयो यजतिर्युजिभन्जिसृजिस्रिदय. ॥ यन्जिष्वन्जिच्छदिपद्यतयश्छिदिरत्तिखिदिक्रुधियुध्यतयः। नुदतिस्तु

## ५५५। मान्तोऽदनतः।

मान्तः ६।, अत् ।१।, अनत ५।।

मस्यान्त् इत्यस्य अत् स्यात् नत्वकारात् परस्य।

अभविषत, अभविष्ठाः अभविषाथाम्।

## ५५६। धे स-लोपो वा।

धे ७।, स-लोप. १।, वा ।१।।

धे परे सस्य लोपो वा स्यात्।

## ५५७। टौ ठौ ढौधो ढिचः सेमस्तु हलो वा।

टौ ठौ ढौ ध. ६।, ढ ।१।, इचः ५।, सेमः ५।, तु ।१।, हल ५।, वा ।१।।

इचः परस्यासा धस्य ढः स्यात्, सेम्हलात् परस्य तु वा स्यात्।

अभविढ्वं अभविध्व [ ६४ ] झप्झसोरिति सस्य दः।

अभविड्वं अभविषि अभविष्वहि अभविष्महि।

---

दतिच्छिदिमन्यतरो भिदि विद्यतिविन्दतिसीदतय॰ ॥ सविनत्तिरुधिच्छिपिसिध्यतयो-रभिधीयतिराध्यतिसाध्यतय। तुदिबन्धिबधिस्वपितप्यतयश्छपिहन्तियतिश्लिषिपुष्यतय। लिपिलुम्पतिविध्यतिचुध्यतयो नमिदशियमिसृश्विनद्यतय। वपतिर्विजतिश्च दिशिपश्यतयो रभिगच्छतिवेशतिरोशतय॰। रमुभञ्जुभजौनिशतित्विषयो द्विषि-तुष्यतिदुष्यतिशुष्यतयः ॥ विषतिर्विषगौपिसधीशिषयो घषतिवर्षतिदुर्हिलिहय ॥ आपिमृशिविशिक्रशिदहि॰॰ नीढिवंहिनक्षिशपतिशपय॰। तपतिः स्कन्दतिरौदित् गदितः श्रीमद्वोपदेवमतविदित. ॥ ५५४ ॥

मस्यात्मनेपदस्य अन्त् मान्त् तस्य। अन्तावयवमचं हित्वा पूर्वभागस्य ग्रहणं तेन कुर्वते कुर्वताम् अकुर्वत इत्यादावपि। अनतः किं एधन्ते लोपोऽतो इत्यनेन कृतस्याकारलोपस्य स्थानिवत्त्वाङ्गीकारात् ॥ ५५५ ॥

धे परे सस्य लोपः स्याद्वा। ङ्लिासड् धे शपो लुकि आध्वे सस्य दकारे आद्वे ॥ ५५६ ॥

टौठौढौनां ध टौठौढौध तस्य सह इमा वर्त्ततेऽसौ सेम् तस्मात्। यथा अकृढ्वं आनढ्वं अस्तौढ्वं अच्यैढ्व उडग्रन्दे ओढ्वं तुष्टुढ्वे चकृढ्वे कृषीढ्व नेषीढ्वं

## ५५८। धुर्द्विष्ठ्याङि।

धु १।, द्वि १।, ष्याङि ७।

ष्यामङि च धुर्द्विः स्यात्।

## ५५९। झभखथहघंकॄणां जब्चप् जस्वचुाः खेः।

झभ् कु हॄणा ६।।।, जब् चु श्वा १।।।, खे. ६।।

खेर्झभ खथ हकार घं कवर्ग ऋवर्णानां क्रमात् जब् चप् जकार स्व चवर्गाकाराः स्युः।

---

सोषीढ्व अभविढ्वमिति सलोपपक्षे घस्य ढ पक्षे अभविध्व सलोपाभावपक्षे झप्भसोरित्यनेन सस्य द अभविड्म्॥ ५५७॥

टौ च अङ् च ष्याङ् तस्मिन्। प्रकरणादेव धौ प्राप्तौ पुनरुपादान ज्ञापयति ष्या अव्यवहितपूर्वधातोरेव द्वित्व स्यात्। तेन इन्दामास इत्यादौ इन्दादेर्न द्वित्वम्। एव वीप्साया पद द्वि। यथा गृहे गृहे गीत स्मार स्मार मनसि। गुणसादृश्य पीडानुपूर्वेषु समासवच्च। एष्वर्थेषु द्विरुक्त समासवच्च स्यात्। गुणे सुखसुखेन प्रियप्रियेण। सादृश्ये गुणवाचकस्यैव पटु पट्वी मृदु मृद्वी पूर्वस्य पु वद्भाव' मन्दमन्दमुदित' प्रययौ ख भीतभीत इव शीतमयूख। कदाचित् समासो न स्यात् च। यथा मन्द मन्द नुदति पवनः। पीडाया गतगता नष्ट-नष्टा। आनुपूर्वे ज्येष्ठज्येष्ठ' प्रवेशय एकैकमचर जपति। त्वराया यावत् बोधम्। गच्छ गच्छ गच्छ 'ाहिरहिरहि। सामीप्येऽध्युपर्य्यधसाम्। अध्यधि ग्रामम् उपर्य्युपरि ग्रामम् अधोऽधो ग्रामम्। सामीप्ये कि सर्वस्योपरि चन्द्रमा। वाक्यच्च यावदिच्छयाधिक्ये। अहो दर्शनीया अहो दर्शनीया अत्र दर्शनीयत्वस्याधिक्य मह्य मह्य रोचते अत्र रुचेराधिक्यम्। नमस्तस्मै नमस्तस्मै नमो नम इत्यादौ भक्तेराधिक्यमिति॥ ५५८॥

झभ् च खथ् च हश्च घंश्च कुश्च ऋश्च ते तेषाम्। जब् च जप् च जश्च स्वश्च चुश्च अश्च ते। यथा जझाष डुढौके दधार जघास बभौ। चखाद पुस्फोर चिच्छेद टिष्ठेव तुथोद जहौ पपौ चुकोप जगाद। पपार ततार ऋकारेण वर्णस्य ऌका-रस्य ग्रहणात् चकल्पे॥ ५५९॥

## ५६० । भुवोऽङ् ठ्यां ढ-भावे तु वा ।

भुव: ६।, अङ् ।१। ठ्या ७।, ढ भावे ७।, तु ।१।, वा ।१।।

भुव: खेरङ् स्यात् ठ्यां ढ-भावयोस्तु वा ।

बभूव बभूवतु: बभूवु:, बभूविथ बभूवथु: बभूव, बभूव बभूविव बभूविम। बभूवे बभूवाते बभूविरे, बभूविषे बभूवाथे बभूविढ्वे बभूविध्वे बभूवे बभूविवहे बभूविमहे। ढे भावे च। बभूवे बुभूवे इति प्रयोगौ।

भविता भवितारौ भवितार:, भवितासि भवितास्थ: भवितास्थ, भवितास्मि भवितास्व: भवितास्म:। भविता भवितारौ भवितार:, भवितासे भवितासाथे भविताध्वे, भविताहे भवितास्वहे भवितास्महे।

भूयात् भूयास्ता भूयासु:, भूया: भूयास्तं भूयास्त, भूयासं भूयास्व भूयास्म। भविषीष्ट भविषीयास्ता भविषीरन्, भविषीष्ठा: भविषीयास्थां भविषीढ्वं भविषीध्वं, भविषीय भविषीवहि भविषीमहि।

भविष्यति भविष्यत: भविष्यन्ति, भविष्यसि भविष्यथ: भविष्यथ, भविष्यामि भविष्याव: भविष्याम:। भविष्यते भविष्येते भविष्यन्ते, भविष्यसे भविष्येथे भविष्यध्वे, भविष्ये भविष्यावहे भविष्यामहे।

अभविष्यत् अभविष्यताम् अभविष्यन्, अभविष्य: अभविष्यतम् अभविष्यत, अभविष्यम् अभविष्याव अभविष्याम। अभविष्यत अभविष्येताम् अभविष्यन्त, अभविष्यथा: अभविष्येथाम् अभविष्यध्वम्, अभविष्ये अभविष्यावहि अभविष्यामहि।

भवतकि भवतक:। प्रणिभवति प्रनिभवति। एवं चेतति इत्यादय:।

---

ङित्त्वादन्त्यस्य स्थाने। ढश्च भावश्च ढभाव तस्मिन्। ढभावयोरपि नित्य-

[२] चितो संज्ञाने। *

## ५६१। रुदाद्यस्तिसेर्दिस्योरीम्।

रुदादि अस्ति से: ५।, दि स्यो ६॥, ईम् ।१।

**एभ्यो दिस्योरीम् स्यात्।**

---

मिति केचित्। भूयादित्यादिषु कित्त्वान्न गुण.। भविषीढ्वमिति धकारस्य ढकारविधानसामर्थ्यात् व्यवधानेऽपि ढकार.। भविष्यतीत्यादीनि सुगमानि। भवतकीत्यादौ त्यादिर्व्यत्यादिनाऽक्। प्रणिभवतीत्यादि अकखाद्यषान्तान्तनेर्वा णत्वम्। एव चेततीत्यादय: इति। येषु विशेषकार्य्यं नास्ति ते प्रयोगा एवेत्यर्थ विशेषकार्य्यार्थं सूत्रारम्भ ॥५६०॥

रुदादिश्च "रोदिति स्वपितिश्चैव श्वसिति: प्राणितिस्तथा। जक्षति श्चैव विज्ञेयो रुदादि पञ्चको गण" इति। अस्तिरिति अस्लृभावे स्वरूपकथने तिप्

प्रसङ्गाद् बालबोधार्थं गणपाठोक्ता अनुबन्धास्तत्प्रयोजनानि अकारादि-क्रमेण चोच्यन्ते। (४)

अ—मुखोच्चारणार्थ।

आ—निष्ठाभावादिकर्म्म वेट्। (१०७७ भावे क्रियारम्भे च वाच्ये क्त—क्तवतु स्थाने वा इट्)

इ—नुणवान्। [५६८]

इर्—वा अङ्वान्। (५६५, ङ इति स्मते)

ई—अनिड् निष्ठ। (१०७१, क्त क्तवतु स्थाने न इट्)

उ—क्त्वा वेट्। (११७२)

ऊ—वेट्। (५७३) वेम्।

ऋ—चङि अह्रस्व:। (६३८)

ॠ—चङि वा ह्रस्व:। (३३९)

ऌ—अङ्वान्। (५६५) ङ।

ए—सिचि अवृद्धि। (५७६)

ऐ—यजादि (६५१)

ओ—निष्ठात न (१०५२) क्त क्तवन्तो' तस्थाने न)

औ—अनिट्। (५५४) अनिम्

क—चुरादि। (७७३)

कि—वा चुरादि. (७७३)

ग—क्र्यादि'। (७३८)

गि—प्वादि.। (७६९) पूधातुभिन्नश्चेत् ल्वादिश्च (१०५२)

घ—रुदादि. (५६१,५९५)

ङ—तङ्वान्। (५३१, कर्त्तरि वाच्ये आत्मनेपदी)

ञ—ज्वलादि:। [१०००]

ञ—उभयपदी। (५३१)

## ५६२। झस् स्वात् झसीम ईमि सेर्लोपः।

झस स्वात् ५।, झसि ७।, इम. ५।, ईमि ७।, सेः ६।, लोप १।।

**झसात् स्वाच्च परस्य झसि, इमः परस्य ईमि, सेर्लोपः स्यात्। अचेतीत् अचेतिष्टाम्।**

---

वक्तव्य। रुदादिश्च अस्तिश्च सिश्चेति रुदाद्यस्तिसि तस्मात्। दिश्च सिश्च दिसौ तयो। रुदाद्यस्तिभ्या व्यादिसोरेव रुदादेभ्या सिव्यवधानेन अस्तेर्भू आदेशे न च व्या दिसोरसम्भवात्। एव सिरिति व्या सिः तस्मात् परयोर्व्या दिस्योरेव व्या असम्भवात् एवञ्च दिसाहचर्य्यात् सिस्तु विभक्तेरेव। अन्यथा रुदादे परस्य व्या क्रतस्य सेरपि इम् प्रसजेत्। यथा अरोदीत् अरोदी आसीत् आसी। सेस्तु अनैषीत् अनैषी॥ ५६१॥

झस् च स्वश्चेति झस्स्व तस्मात् यथा असैद्वा अक्रत अव्राजीत्। ईम परस्य ईम्येवेति नियमात् अचेतिष्टामित्यादौ ह्रस्वात् परस्यापि सेर्न लोप। अचेष्ट अस्तोष्ट इत्यादौ लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बलवानिति न्यायात् आदौ गुणे सेर्लोपो न स्यात्॥ ५६२॥

---

| | |
|---|---|
| जि—अद्य क्त। (१०९५ वर्त्तमाने क्त.) | ञि—ञिचि इण् णमो वा ङस्व.। (७९९) |
| टु—साधु.। (११४२) | य—दिवादि। (७३८) |
| डु—विमक्-युत। (११४३) | र—वैदिक। (वेदोक्तधातुः)। |
| ण—फणादि। (५७९) | ल—अदादि, ५६७०) |
| त—अदन्त। अत्-अन्त। (७७५) | लि—ह्लादिः। (७२६) |
| द—तनादि.। (६८८) | लु—स्वपादि। (६६१) |
| ध—रुधादि। (७३८) | व—ह्वतादि.। (६४८) |
| न—स्वादि। (७३८) | श—तुदादि। (७३८) |
| प—मुचादि। (७४१) | शि—कुटादि.। (७५५) |
| भ—शमादि। (७४०) | ष—क्तदङ् वान्। (११५६, क्तदन्ते ङ) |
| म—घटादि। (७९८) | च—जचादिः। १७४) |

---

## ५६३। अनुस् सिद्देरभुवः।

अन्।१।, उस्।१।, सि द्दे. ५।, अभुव ५।।

सेर्द्देश्च परस्य अन उस् स्यात् न तु भुवः। अचेतिषुः अचेतीः।

## ५६४। खेराद्यचो लोप्योऽनुशस्खपाद्यन्तान्यस्याद्यन्तौ।

खे ६।, आद्यच ५।, लोप्य. १।, अनु।१।, शस् अन्तौ १॥।

खेराद्यचः परो भागो लोप्यः स्यात्, पश्चात् शसादिखपान्तो यदि स्थोऽवशिष्टस्तस्यादिर्लोप्यः, यदन्याद्दशस्तस्यान्तो लोप्यः। चिचेत चिचितत. चिचितुः।

---

सिश्च द्दिश्च सिद्दि तस्मात्। सेः परस्य झ्या अन् उस् द्देस्तु झ्या एव। यथा अचेतिषु अस्थु. अपुः अदु अगु. एषु भूस्थापिवेति सेर्लुकि त्यलोपे त्यलक्षणमिति न्यायात् से परत्वादन् उस्। द्देस्तु अजक्षु। अभुव किम् अभूवन् यङलुकि अबोभुवन्॥ ५६३॥

आदिश्चासावच् चेति आद्यच् तस्मात्। आदिरत्र अचः मध्य एव न तु यावदच्चानामिति बोध्यम् अन्यथा ददरिद्र इत्यादौ हसादेः परभागलोपानुपपत्तेः। शस् च खप् च शस खपौ। आदिश्च अन्तश्च आद्यन्तौ शसखपौ आद्यन्तौ यस्य स शसखपाद्यन्तः शसखपाद्यन्तश्च अन्यश्च शसखपाद्यन्तान्यौ शसखपाद्यन्तान्यौ च तौ स्थौ चेति शसखपाद्यन्तान्यस्थौ तयोराद्यन्तौ शसखपाद्यन्तान्यस्याद्यन्तौ। अनुरत्र परभागार्थ इत्यत आह आद्यच परो भाग इति। पश्चादिति आद्यच परभागाभावे इत्यर्थः। तेन यस्य आद्यच परभागो वर्त्तते तस्य तल्लोपानन्तरं यस्य तु परभागो न वर्त्तते तस्य प्रथमत एव शसखपाद्यन्तसंयोगस्य आदिर्लोप्यः अन्यसंयोगस्य अन्तो लोप्यः स्यादिति निष्कर्षः। यथा चस्खार पुस्फोर टिष्ठेव तस्थौ चुच्योत तुष्टुप तस्तार चस्कन्द पस्पर्श। अन्यसंयोगस्य तु सस्नाम दध्वान तत्रास चक्राम। परभागाभावे तु तुष्टाव तस्थौ चुष्काव पष्पार दध्यौ दध्माव जघ्रौ जग्लौ सस्तौ इति॥ ५६४॥

( १ )' च्युतिर् चरणे।

## ५६५। शासुलिद्द्युत्पुषादेर्ङ्टीपे जॄश्विस्तन्भुविषु म्रुचुम्लुचुग्रुचुग्लुश्विरितस्तु वा।

शासु पुषादे ५।, ङ १।, टीपे ७।, जॄ इरित ५।, तु ।१।, वा ।१।।

शासोर्ल्कारेतो द्युतादेः पुषादेश्च ङः स्यात् टीपे, ज्रादेस्तु वा। अच्युतत् अच्योतीत् चुच्योत।

---

लृ इत् यस्य स लित्। द्युत् च पुष् च द्युत्पुषौ तावादी ययोस्तौ द्युत्पुषादी शासुश्च लिच्च द्युत्पुषादी चेति तस्मात्। स्वमते लिदित्त्वेनैव सिद्धे द्युत्पुषादौ-विधान प्राचामनुरोधात्। इर् इत् यस्य स इरित्। जॄश्च श्विश्च स्तन्भुश्च विषुश्च म्रुचुश्च म्लुचुश्च ग्रुचुश्च ग्लुचुश्च इरिच्चेति तस्मात्। यथा अशिषत् अवसत्। द्युताद्यो ह्लादादेरात्मनेपदिन सर्वे टीपे ङ विधानसामर्थ्यात् ट्यामुभयपदिन इया द्युत ङ लृ द्युत्याम् अद्युतत् अद्योतिष्ट। द्युतादिश्च द्युति शुचि स्मय रुचिश्विता घ्विणि दाचिदा भ्रशुमिदा द्युटिश्च। रुचिर्लुटिश्वन्स लुठि चुभिश्चतुभि स्रन्तु-वृतुवृधुश्च। स्यन्दु' शृधुश्चापि कृपुर्द्युताविति वयोविंशतिरेव याता इति। पुषाद्यो दिवादौ परस्मैपदिन सर्वे। पुष्यति शुष्यति ष्विदय. श्लिष्यति तुष्यति वश्य-चुषय:। प्लुष्यति तृप्यति मुह्यति द्रुह्य ष्णुह्य ष्णिह्य कुधि लुठिणश्चय। सप्त-दशेति पुषादावुदिता. श्रीमद्देवपदेवमतविदिता। एव पुष्य तृप्यश्च मुदसु रमदय शाम्य एसु जसु मुदसय:। भस्य चाम्यति वस्य क्षुमय पुष्य विध्य कुसि बुसष्यति सुषय। उच्यति ऋषि मसि हृषि क्लश इशय कुप्यति भृश्य भ्रन्सु चिद्य। लुपिह्रं षिडिपिगुपियुपय क्षियति रुपि नुपि नुभि म्रदि ग्टवय। दुर्गसिंह इति चाह पुषादिं तेनोभयो प्रामाणिकत्वादेते इरनुबन्धा पठिना किन्त्व सिध्यति चुभ्यति लभ्यति तुभ्यतीना चतुर्णां दुर्गसिंहसम्मतानामपि बहुवाद्यसम्मतत्वादिरनु-बन्धेऽपि नोक्त। ज्रादेस्तु अजरत् अजारीत् अश्वत् अश्वयीत् अस्तभत् अस्तम्भीत्। विष इति विष निन्नौ व्याप्तौ इत्यस्य ग्रहणम् अविषत् अविचत् अम्रुचत् अम्रो-चीत् अम्लुचत् अम्लोचीत् अग्रुचत् अग्रोचीत् अग्लुचत् अग्लोचीत्। इरितस्तु अच्युतत् अच्योतीदित्यादि ॥ ५६५ ॥

(४) मन्थ विलोडने ।

५६६ । स्यात् ठ्यपित् किद्वा ।

स्यात् ५।, ठी ।१।, अपित् ।१।, कित् ।१।, वा ।१। ।

५६७ । ह्सुङ्नो लोपोऽणौ ।

ह्सुङ्न ६।, लोप १।, अणौ ७। ।

धोर्ह्स उङो नस्य लोपः स्यादणौ । ममथतुः ममन्थतुः । मथ्यात् ।

(५) कुथि हिंसा-संक्लेशयोः ।

५६८ । नेदित्पूजार्थाञ्चोः ।

न ।१।, इदित् पूजार्थाञ्ची ६॥ ।

इदितो धोः पूजार्थस्याञ्चतेश्च नलोपो न स्यादणौ । अत-एवेदितो नुण् । प्रनिकुन्थ्यात् । (५४९) कादित्वान्न णः ।

(५) षिधु गत्याम् ।

५६९ । भाद्यादिषाः स्नोऽष्ठ्यै ष्वक्कष्ठिवाम् ।

भाद्यादिषा ६।, स्न १।, अष्ठ्यै ष्व क्क-ष्ठिवाम् ६॥ ।

भादेरादौ स्थितयोः ष णयोः स नौ स्तः, न तु ष्ठ्यै ष्वक्क ष्ठिवाम् ।

---

संयोगात् परा अपित् ठी कित् स्याद्वा । यथा बभञ्जतु बभञ्जतुः । ह्सुङ्नोलोपो ऽणौ ठ्यान्तु वा इति कृते ठ्यपिति न लोपविकल्पे सिद्धे स्यात् ठ्यपित् कित् वेति विधानन्तु भ्रस्ज औ श पाके इत्यस्य ठ्यपिति भ्रस्जोऽरेऽणौ भर्जवेत्यनेन भर्जादेशे बभर्जे बभ्रज्जे इत्याद्यर्थम् ॥ ५६६ ॥

उङ् चासौ न चेति उङ् न । ह्सो ह्सन्तधातोरुङ् न ह्सुङ्न तस्य ह्सुङ्न इति षष्ठ्रकम् । नास्ति णर्यस्मिन् परे सोऽणस्तस्मिन् । यथा भन्जधौ भज्यते भक्त । ह्सन्तधातो किम् । नीय्यते नीर्ण अत न प्रसङ्ग ॥ ५६७ ॥

इदनुबन्धाना नकार एव नास्ति कुथ लोपो निषिध्यते इत्यत आह अतएवे-त्यादि । अतएव न लोपनिषेधादित्यर्थ. ॥ ५६८ ॥

**५७०। सेक सीक स्टप स्ट स्टज स्तृ स्त्या-न्ये दन्त्याजन्तसादय:। षोपदेशा षवः ष्वक्क ष्वित् ष्वत् ष्वञ्ज ष्वप ष्मिङश्च। णोपदेशास्त्व-नृतनर्द्द नाथ नाध नन्द नक्क नॄ नटः।**

सेक अन्ये १।॥, दन्त्याजन्तसादय १।॥, षोपदेशा. १।॥, षव १।॥, ष्वक्क-ष्मिङ १।॥, च ।१।, णोपदेशा. १।॥, तु ।१।, अ नृत्—नट. १।॥ ।

सेधति।

---

भ्वादिरिति भूसत्तायामित्यादिर्दशगणात्मक । तथाच। भ्वाद्यदादी जुहो-त्यादिर्दिवादि. स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादि चुरादय इति भ्वादेरादि भ्वाद्यादि ष च च ण च ण भ्वाद्यादी ण भ्वाद्यादि ण तस्य। धोरधि कारेऽपि भ्वादिग्रहण लिङ्गधातोर्निरासार्थम्। तेन षठमिच्छति षठीयति एव षकारीयतीत्यादौ न प्रसङ्ग । षाट्वर्गस्तवर्गज इति वोपदेवस्वरसात् अत्र षकारस्या-षट्वर्गस्य तवर्गप्रकृतिकत्वे ष्टायते दिर्भावे निमित्तस्याभावे नैमित्तिकस्याप्यभाव इति न्यायात् टकारस्य तकारत्वे णपि तष्टौ मनि तिष्ठासति यङि त्याटायते इति। एव सर्वत्र। षोपदेशणोपदेशौ दर्शयति सार्द्धश्लोकेन ॥५६९॥

सेक च सीक च स्टप च स्टश्च स्टज च स्तृश्च स्त्याश्च ते तेभ्योऽन्ये। दन्त्यश्च अच्च दन्त्याचौ तावन्ते यस्य स दन्त्याजन्त: दन्त्याजन्तश्चासौ स चेति दन्त्याजन्तस दन्त्या-जन्तस आदिर्येषा ते दन्त्याजन्तसादय दन्त्यवर्णान्ता अजन्ता वा ये सकारान्दा-दिका धातव· षोपदेशा धातुसञ्ज्ञाकाले मूर्द्धन्यादित्वेन पठिता इत्यर्थ सेका-दीनामजन्तसादित्वात् स्तृस्त्या इत्येतयोर्दन्त्यान्तसादित्वात् प्राप्तौ निषेध । ष्वक्कादयो दन्त्यान्तसादयोऽजन्तसादयोऽपि न भवन्तीति पृथगुक्ता । किञ्च उदूटौ यत्र विद्येते यो व प्रत्ययसन्धिज । अन्त स्थ त विजानीयात् तदन्यो वर्ग्य उच्यते। इति स्वरसात् स्वपेर्वकारस्य दन्त्यत्वेऽपि पृथक् ग्रहण ज्ञापयति दन्त्यान्तसादीनामजन्तसादीनाञ्च क्वचित् षोपदेशता नास्तीति। तेन स्तका प्रतीघाते सान्त्वक सान्त्वने इत्यादीना दन्त्यादित्वं सिद्धं षोपदेशफलन्तु कृतसकारवत्त्वात् तुष्टाव तोष्टूयते सुषुव सोषूयते इत्यादिषु षत्वम्। नृत्त नर्द च नाथ च नाध च नन्द च नक्कश्च नॄश्च नट श्च ते नृतनर्दनाथनाधनन्दनक्क नॄ नटः न विद्यन्ते ते येषु धातुषु मध्ये ते तथा। नृतादि-

## ५७१। व्याच्छस्य गत्यर्थवदे सः।

व्याच्छस्य ६।, गत्यर्थवदे ७।, स १।।

गत्यर्थे वदे च धौ परदे व्यस्याच्छस्य सः स्यात्। अच्छ-सेधति।

## ५७२। गीकः स्तु स्तुभ सो सुवास्यान्त-सुञां स्था सेनि सन्ज स्वन्जाऽगतिसेधाऽप्र-तिसदाऽयङ्सिचाऽनङ्स्तम्भाऽन्नव्यवस्वन परि नि वि सेव सुमऽनङ्सिवाऽनोऽङ्सहां सः षोऽभ्यपि दशस्यादेस्तु द्वेश्च।

गि इक ५।, स्तु सुञा ६।।।, स्था-सहा ६।।।, स १।, ष' १।, अभि ७।, अपि ।१।, दश-स्यादे ६।, तु ।१।, द्वे. ६।, च ।१।।

स्वादेरस्यान्तसुञः स्यादेरगत्यर्थ-सेधोऽप्रतिपूर्वसदो यङ्-वर्जसिचोऽङ्वर्जस्तम्भोऽन्नार्थव्यवपूर्व-स्वनः पर्य्यादिपूर्वसेव सुम-ऽङ्वर्ज सिव ओऽङ्वर्जसहाश्च गेरिकः परः सः षः स्यात् अभ्य-न्तरेऽपि दशानां स्यादीनान्तु द्विरुक्तानाञ्च। निषेधति न्यषे-धत् गतौ तु गङ्गां व्यसेधत्।

---

वर्जिता नादयो धातवः षोपदेशा धातुसञ्ज्ञाकाले मूर्द्धन्यादित्वेन उच्चारिता इत्यर्थः। षोपदेशफलन्तु प्रणयति प्रीणाति इत्यादिषु नादित्वात् प्राग्वन्नो इति णत्वम्। तृत न'नि इत्यादीना दन्त्यादित्वन्तु अन्येषामनुरोधात्॥५७०॥

व्यश्च तत् अच्छश्चेति व्याच्छ' तस्य। गत्यर्थश्च वदश्च गत्यर्थवद' तस्मिन्। अच्छेति अभिशब्दसमानार्थो निपात'। यथा अच्छगत्य अभिमुखं गत्वेत्यर्थ अच्छोद्य अभिमुखमुदित्वेत्यर्थः॥५७१॥

स्य स्वरूप स्योऽन्ते यस्य स स्यान्त न स्यान्तोऽस्यान्त. अस्यान्तश्चासौ सुञ् चेति अस्यान्तसुञ्। स्तुश्च स्तुभश्च सोश्च सुवश्च अस्यान्त सुञ् च तेषाम् अगतौ सेधः अगतिसेधः नास्ति प्रति यस्मिन् सोऽप्रति स चासौ सद चेति अप्रतिसदः। नास्ति

यड् यस्मात् सोऽयङ् स चासौ सिचश्चेति अयङ् सिच नास्ति अङ् यस्मात् सोऽनङ् स चासौ स्तम्भश्चेति अनङ् स्तम्भ । व्यवाभ्या स्वन. व्यवस्वन. अन्ने भक्षणे व्यवस्वन अन्नव्यवस्वन नास्ति अङ् यस्मात् सोऽनङ् स चासौ सिवश्चेति अनङ् सिव । ओश्च अङ् च ओऽङौ न विद्येते ओऽङौ यस्य सोऽनोङ् स चासौ सह चेति अनोङ् सह । सेवश्च सुम् च अनङ् सिवश्च अनोङ् सह च ते सेवसुमनङ् सिवानोऽङ् सह । परिश्च निश्च विश्च परिनिवय तेभ्य सेवसुमनङसिवानोऽङ् सह. परिनिविसेव-सुमऽनङ् सिवाऽनोङ् सह पश्चात् स्थाश्च सेनिश्च सन्जश्च स्वन्जश्च अगतिसेधश्च अप्रतिसदश्च अयङ् सिचश्च अनङ् स्तम्भश्च अन्नव्यवस्वनश्च परिनिविसेवसुमऽनङ् सिवा-ऽनोऽङ् सहाश्च ते स्थादिसह तेषा स्थादिसहाम्। दशाना स्थादीना समाहार दशस्थादि. तस्य। यथा अभिष्टौति विष्टोभते विष्यति विषुवति सुव इति तौदा-दिकस्य षूश चेपे इत्यस्य ग्रहणात् षू ङ् ल षू योङ इत्येतयोर्विसूते विसूयते इत्यादौ षत्व न स्यात्। विषुणोति स्यान्तस्य तु विसोष्यति विससिष्यति इत्यादौ न षत्वम्। स्य स्वरूप इति किं व्यषोढुमित्यादौ षत्व स्यादेव। निष्ठास्यति सेनिरिति लिङ्ग-धातु सेनया अभियाति अभिषेणयति। निषजति निष्वजते निषेधति। गतौ तु गङ्गा विसेधति किञ्च सेध इति निर्देशात् दैवादिकस्य निसिध्यतीत्यादौ न षत्वम्। निषीदन्नि प्रतौ तु प्रतिसीदति निषिञ्चति यङि तु विसेसिच्यते इत्युभयत्र न षत्वमिति श्रीपतिदत्त । विष्टभ्नाति विष्टभ्नोति अङि तु व्यतस्तभत् विष्वणति अवष्वणति चोर श्रियः अन्यत्र विस्वनति वीणा शब्द करोतीत्यर्थ.। व्यवेत्युक्तेर्व-कारादपि षत्व व्यवात् किं परिस्वनति इत्यादौ न स्यात्। परिसेवते निषेवते विषेवते। सुमिति सुमागम परिष्करोति। परिषीव्यति अङि तु पर्य्यसीषिवत् पर्य्यादिनिमित्तक खे षत्व निषिध्यते खिनिमित्तक मूलधातो षत्व क्रिला दित्यनेन स्यादेवेति श्रीपतिदत्त । परिषहते। ओकारे निसोढा अङि तु पर्य्यसीषहत्। अम्व्यवधाने तु प्रत्यष्टावीत् निविपरिस्वन्जस्तु सुमसिवसहाम् अम् व्यवधाने वा षत्वमिति वक्ष्यति। न्यष्टावीत् न्यस्तावीत् इत्यादि। दशस्थादेस्तु ईश्चेति विधानात् खिव्यवधानेऽपि षत्व खेः सकारे सति तस्यापि षत्वमिति बोध्य नितष्टौ अभिषिषेणयिषति निषषञ्ज विषाष्वज्यते। स्थान्नु सत् स्वञ्जोष्ठ्या नाखे-रिति वक्ष्यमाणात् मूलधातोर्न षत्वम्। तेन विषस्वाज विषसाद इति। निषि-षेध विषाषद्यते निषिषेच वितष्टम्भ विषष्वान विषिषेवे। एषामेव किं षोषनाशे विससौ विसुषाव इत्यादि दशस्थादेरिति नियमात् अन्येषा सोसुवादीना खेः

( ७ ) षिधू शास्त्रे माङ्गल्ये च ।

**५७३ । वेमूदित् स्वर चाय स्फाय प्याय सूति सूय धूञ रधादि निष्कुषोऽरवसो रु दु सुनोस्त्वठ्याः ।**

वा ।१।, इम् ।१।, ऊदित्—निष्कुष ५।, अरवस ६।, रुदुसुनो' ५।, तु ।१।, अठ्या' ६। ।

**एभ्यो वसस्यारस्येम् स्याद्वा, रौत्यादेस्तु ठीवर्जम् । असेधीत् ।**

---

षत्वं न स्यात् । क्विलादित्यनेन प्राप्तम् उपसर्गनिमित्तक षत्वमनेन नियम्यते । तेन षाल प्रस्तुत्या विस्नौति षालश्रोधने प्रतिस्नाति इत्यादौ न षत्व किन्तु उपसर्ग-निमित्तक षत्वमेव नियम्यते । तेन तौष्णुयते तोष्णूयते इत्यादौ खिनिमित्तक षत्व स्यादेव । क्विलादित्यत्र विसर्गव्यवधानेऽपि षत्वविधानादिहापि विसर्गव्यवधाने-ऽपि षत्वमिति बोध्यम् । नि ष्टौति दुःष्टौति ॥५७२॥

ऊदिद् यस्य स ऊदित् रध आदिर्यस्य रधादि । निस' कुषः निस्कुष । पश्चात् ऊदिच्च स्वरश्च चायश्च स्फायश्च प्यायश्च सूतिश्च सूयश्च धूञ च रधादिश्च निष्कुष चेति तस्मात् । स्वर इति स्वृञ शब्दोपतापयो. स्वजातीयधात्वन्तराभावात् स्वृग्रहणेनैवेष्टसिद्धौ स्वरग्रहण ज्ञापयति क्वचिन्निषेध बाधित्वा विकल्पोऽय प्रवर्त्तते इति । अतएव नेमृतस्थप इत्यनेन ठ ऋ स्वृ भिन्नात् ऋदन्तात् थप इम् निषेधेऽपि सस्वरिथ सस्वर्थ इति स्वयमुदाहरिष्यति । रधादिस्तु रध्यतिस्तृप्यदृप्यौ च मुह्यतिद्रुंह्यतिस्तथा । ष्णुहयिष्णौ नशस्तयू च रधादावष्ट धातव. । स्वमते ऊदित्त्वेनैव सिद्धौ स्वरते रधादेश्च इह पाठ' प्राचीनमतानुवादार्थम् । रुश्च दुश्च सुश्च नुश्च तस्मात् । यथा असेधीत् असैत्सीत् अस्वारीत् अस्वार्षीत् अचायीत् अचासीत् अस्फायिष्ट अस्फास्त अप्यायिष्ट अप्यास्त असविष्ट असोष्ट । सूति सूय इति अदादिदिवाद्योर्ग्रहणात् षूञ क्षेपे इत्यस्य असावीदिति नित्यम् । अधावीत् अधौषीत् । रधिता रद्धा निष्कोषिता निष्कोष्टा रविता रोता दविता दोता सविता सोता नविता नोता । ठ्यास्तु रुरुविव दुदुविव सुसुविव नुनुविव इति अन्यस्मादनिमोऽपि स्यादिति नियमात् नित्यमिम् ॥५७३॥

## ५७४। व्रजवदरलजनिमोऽञ्जिश्विजागृ-र्त्रिः सौ पे।

व्रज वद अर् अल्-अच्-अनिम ६।, अञ्जिश्विजागृ ६।, त्रि १।, सौ ७, पे ७।

**व्रजेर्वदेररन्तस्यालन्तस्याजन्तस्यानिमश्च सौ पे त्रिः स्यात् नतु ञ्जि श्वि-जागृणाम्।**

**असेत्सीत् असेधिष्टाम्।**

## ५७५। ढभात्तथोर्धोऽधः।

ढभात् ५।, तथो ६॥, ध. १।, अध ५।।

**ढभात् परयोस्तथयोर्धः स्यान्न तु धाञः। असेद्धाम्।**

---

नास्ति इम् यस्मात् सोऽनिम् व्रजश्च वदश्च अर् च अल् च अच् च अनिम् चेति तस्य। ञ्जिश्च श्विश्च जागृश्चेति तत्। न ञ्जिश्विजागृ अञ्जिश्विजागृ तस्य। अरलौ स्वरूपौ तेन तदन्तौ ग्राह्यौ। अच आरालैजित्यादिना अच एव वृद्धि स्थानिवत्त्वेन निर्देशात् अच एवेत्यर्थः। धातौ स्वरूपकथने इप्रत्ययो वक्तव्यः। तेन व्रजेर्वदेरित्युक्तम्। यथा अव्राजीत् अवादीत्। व्रजसाहचर्य्यात् वद इति दन्त्यवकारादिरेव तेन वद स्थैर्य्ये इत्यस्य अवादीत् असारीत् अफालीत् अजैषीत् अनैषीत् अहौषीत् अधौषीत् अकार्षीत् अद्राक्षीत् असैत्सीत् अतौत्सीत् अमा-त्सीत्। ञ्यादेस्तु अश्वनयीत् अश्वयीत् अजागरीत्। ननु जागृोऽनञ्वीति गुण स्यैव प्राप्तौ जागुरिह वर्जनं कथमिति चेन्न निमित्तगतविशेषस्य बलवत्त्वात् वृद्धेः प्राप्तौ निषेधार्थम्। अतएव दीधीवेव्योर्गुणकृता नित्यत्वात् परस्मैपदे अनुस्सिद्धे-रिति उसि दीधीवेव्योर्न गुणरिति सूत्रं बाधित्वा गुणस्य ठ्यामित्यनेन गुणे अदीधयुः अवेवयुरिति बोपदेवः॥ ५७४॥

तश्च थश्च तथौ तयोस्तथोः। असैद्धामित्यनिमपक्षे इमि तु असेधिष्टामिति। अधः किं धत्तः॥ ५७५॥

[ ८ ] खद स्थैर्य्ये वधे च ।

## ५७६ । हसादेः सेमोऽह्मग्रेदित् चणश्वसवधो वोङतः सौ पे व्रिः ।

हसादि ६।, सेम ६।, अ ह म-य एदित् चणश्वसवध ६।, वा ।१।, उङत ६।, सौ ७।, पे ७।, व्रि १।।

हमयान्तादेकारेतः चणादेश्चान्यस्य सेमो हसादेरुङोऽकारस्य व्रि स्याद्वा सौ पे। प्रन्यखादीत् [ ५४९ ] खादित्वान्न णः, अखदीत्।

## ५७७ । ञ्णित्यन्त्यजुङतोः ।

ञिणति ७।, अन्त्येजुङतो ६॥।

धोरन्त्यस्येच उङोऽकारस्य च व्रिः स्यात् ञिति णिति च। चखाद।

---

सह इमा वर्त्तते य स सेम् तस्य। एत् इत् यस्य स एदित्। ह च म च य च एदिश्च चणश्च श्वसश्च वध चेति तत। न ह्मग्रेदित्चणश्वसवध अह्मग्रेदित्चणश्वसवध तस्य। उङ् चासौ अच्चेति उङत् तस्य। हान्तादेस्तु अचहीत् अक्रमीत् अहयीत् अकटीत अचणीत् अश्वसीत् अवधीत्॥ ५७६॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन्। अन्यश्चासाविच् चेति अन्त्येच् उङ् चासावच्चेति उङत् अन्त्येच उङच्च तौ अन्त्येजुङतौ तयो। हसादेरिति नानुवर्त्तते उङतो ग्रहणात्। तेन धातुमात्रस्य अन्त्ये च उङतश्च व्रि स्यात् ञिति णिति च परे। यथा जिगाय निनाय जुहाव पुपाव चकार ततार पपाठ उङत इति येन केनापि उङतो ग्रहणम्। तेन भन्जगिलम्भोर्वेखमोर्नलोपे इति नलोपे अजाजि अलाभि इत्यादि सिद्धम्। अतएव रन्जधातोर्नलोपे उङतो वृद्धौ घटादिर्नीत्यनेन ह्रस्व विधाय रजयति मृगानिति स्वय वक्ष्यति। वृत्तौ धोरिति व्याख्यानात् त्वचयतीत्यत्र ञिसमेतस्य धातुसञ्ज्ञाया त्वचौ धातुत्वाभावादुङतो न वृद्धि। ननु निनाय नुनाव इत्यादिषु आदौ गुणे कृते पश्चादुङतो वृद्धौ इष्टसिद्धौ अन्त्येचो ग्रहण वृथेति चेन्न एकनिमित्तके गुणे कृते वृद्धेरकर्त्तव्यत्वात्। अन्यथा-

५७८। गाप्यन्त्ये वा।

गपि ७।, अन्त्ये ७।, वा ।१।।

चखाद चखद।

[९] गद भाषि।

प्रणिगदति।

[१०] [वर्ग्यबकारादिः] बद स्थैर्य्ये।

५७९। तॄ फल भज त्रप श्रथ ग्रथ दभा-द्यन्तास्थहसां ठ्याः कित् सेमथप्यदेः खिलोप-श्चा-शश दद वाद्यन्यथा-खि गु नलोपिनां जॄ वम भ्रम त्रस फणादिवधार्थ राधान्तु वा।

तॄ-हसा ६।।।, ठ्या. ६।, कित्-सेमथपि ७।, अत् ।१।, ए' १।, खिलोप १।, च ।१।, अ-शश—नलोपिना ६।।।, जॄ राधा ६।।।, तु १।, वा ।१।।

तादीनामाद्यन्तस्थितास्थहसानाञ्च अकारः ठ्याः किति सेमथपि च एः स्यात् खिलोपश्च, नतु शशेर्ददेर्वकारादेरन्यथा-भूतखेर्गुमतो नलोपिनश्च, जॄवमभ्रमत्रसफणादीनां हिंसार्थस्य राधेश्च वा स्यात्।

बेदतुः बेदुः बेदिथ। अन्यथाभूतखेस्तु चखदतुः।

[११] णद शब्दे।

[५६९] स्वाद्यादीति णो नः। नदति। प्रणिनदति।

---

णौ जागरयतीत्यादौ जार्गोऽणब्बीति गुणे कृते ञ्डती हृद्धापत्ते। एकनिमित्तके इति किं दिव्यतीति देव' अत्र पचादित्वादनि गुणे देवस्येद दैवम् अत्र णार्द्दिः स्यादेव। न च तथापि अन्त्येनैव गतश्नता क्लिमिची ग्रहणेनेति वाच्यम्। व्येञ्-हृताविव्यस्य णपि विव्याय इत्यनुपपत्तेः। रामतर्कवागीशस्तु अन्त्याजुङतीरिति

पठित्वा अल्लोपित्वं स्यानिवत्त्वञ्चादन्तत्वप्रयोजनम् । यत्र लेते न विद्यन्ते तत्रा-ल्लोपो विकल्पनम् । तदन्तादन्त्यदीर्घस्य पुकश्चेत्यङ्गापयत्यत इति खरसादकारस्य स्थितिपक्षे उद्विनादन्तत्वात् पनश्च विधाय अङ्गापयति । अवलमिति साधयति तद्वैयम् अच एव वृद्धि स्थानित्वेन निर्देशात् । व्रजवदेत्यादौ यथा अचो ग्रहण विनाप्यच: प्राप्तिस्तथात्रापि ञ्णित्यन्तोक्तौरित्यनेनैवेष्टसिद्धौ अचो ग्रहणस्यैव वैय-र्थ्यात् । स्वमाचष्टे स्वापयति इत्यादौ अनेन वृद्धौ पनागमेनैवेष्टसिद्धौ एकाज-कारान्ताना मापविधानवैयर्थ्याच्च । एव नित्यस्य अल्लोपस्य तद्वचनबलादिकल्पे अन्त्यदीर्घस्यापि तद्वचनादेव सिद्धौ अकारस्य इह वृद्धिविधानवैयर्थ्याच्च अङ्गा-पयतीत्यादौ तु अल्लोपो विकल्पनम् अन्त्यदीर्घश्चेत्युभयमेव मनीषादित्वात् साध्य-मिति ॥५७८॥

मुगम प्रणिगदतीति गदनर्दति चलम ॥५७८॥

स्य सयोग न स्योऽस्य कस्यश्चासौ हस् चेति अस हस् आद्यन्तयोरस्य हस् येषा ते आद्यन्तास्यहस: । तृश्च फलश्च भजश्च त्रपश्च श्रथश्च ग्रथश्च दभश्च आद्यन्तास्य हसश्च तेषाम् । सह इमा वर्त्तते य' स सेम् सेम् चासौ थप् चेति सेमथप् । किञ्च सेमथप् चेति किसेमथप् तस्मिन् । अन्तस्थवकार आदिर्यस्य स वादि । अन्यथा अन्यप्रकार खिर्यस्य सोऽन्यथाखि । गुश्च नलोपश्च गुनलोपौ तौ विद्येते ययोस्तौ गुनलोपिनौ । शसश्च ददश्च वादिश्च अन्यथाखिश्च गुनलोपिनौ च ते । पश्चात् नञ्समास तेषाम् । वधार्थश्चासौ राध चेति वधार्थराध । जॄश्च ब्रमश्च भ्रमश्च त्रसश्च फणादिश्च वधार्थराध च ते ज्रादिराध तेषा तॄ इत्यस्य गुण-त्वात् फलभजोरन्यथाखित्वात् त्रपसयोगादित्वात् श्रथग्रथो. सयोगादित्वात् न लोपित्वाच्च दभोनलोपित्वादप्राप्तौ पृथगुक्ति । ननु उपदेशकाले आद्यन्तास्यहस. ये धातवस्तेषामेव ग्रहणात् गुणन्नलोपिनोरप्राप्तौ येन केनापि प्रकारेण आद्य-न्तास्यहसा ग्रहणात् गुणन्नलोपिवर्जन कथमिति चेन्न टुनदिसवृधि इत्यादीना-मुपदेशे आद्यन्तास्य हसत्वात् ननन्दतुरित्यादावपि खिलोपाद्युत्पत्ते. । फणादिश्च फणति राजतिश्चैव भ्राजतिर्भ्राशतिस्तथा । भ्लाशति स्यमतिश्चैव स्वनतिश्च फणा-दय । अत्र फणादिपाठसामर्थ्यादाकारस्याप्येत्वम् । एव वधार्थराधोऽपि रेधतुरिति वद ख्यैर्यं वर्ग्यवकारादित्वान्निषेध । दन्त्यादेस्तु वनसम्भोक्तौ ववनतु' एवं वज गतौ ववजतु: वसिरस्तम्भे ववसतु । अन्यथा खिगुनलोपिनामिति एषा मध्ये वखदतुरित्युदाहृतम् अन्यत् यथास्थानमुदाहर्त्तव्यमित्यभिप्राय. ॥ ५७९ ॥

[ १२ ] अर्द्द पीडायाम्।

५८०। स्यान्तादादृदादश्नोः खेरान् ठ्यां वा त्वाञ्छेः।

स्यान्तादादि-ऋदादि—अश्नो ६।, खे' ६।, आन् ।१।, ठ्या ७।, वा ।१।, तु ।१।, आञ्छे ६।।

स्यान्तो योऽकारादिस्तस्य ऋकारादेरश्नोतेश्च खेरान् स्यात् ठ्याम् आञ्छतेस्तु वा।

आनर्द।

[ १३ ] इदि परमैश्वर्य्ये।

५८१। भूयोऽमजादेः।

भूय ।१।, अम् ।१।, अजादे ६।।

अजादेरमि कृते पुनरम् स्यात्। ऐन्दत्।

५८२। विजादि-दयायासत्यानेकाचोऽनृच्छूर्णोष्ठ्यामाम्।

विजादि—अनेकाच. ५।, अनृच्छूर्णो ५।, ठ्या ७।, आम् ।१।।

इसन्तेजादेर्दय अय आस एभ्यस्यान्तादनेकाचश्च आम् स्यात् न तु ऋच्छूर्णोः।

---

स्य' संयोगोऽन्ते यस्य स स्यान्त। अत् अकार आदिर्यस्य सोऽदादि. स्यन्तश्चासौ अदादिश्चेति स्यन्तादादि'। ऋत् आदिर्यस्य स ऋदादि.। अव तद्गुणसविज्ञानबहुव्रीहिणा अन्तावयववर्णान्तरसहितऋकारादिरुच्यते। तेन ऋगतावित्यादेर्न ग्रहणम्। पश्चात् स्यन्तादादिश्च अश्नुश्चेति। अश्नु इति सौवादिकस्य निर्देशात् क्रियादिकस्य आश इत्येव। अश्नोः पृथक्ग्रहणादेव अदादिशब्देन स्यन्तादादौ लब्धव्ये स्यान्तकरणं कथमिति चेन्न अश्नातेरप्राप्तये अश्नुग्रहणस्य सार्थकत्वे अदादिपदेन स्यान्तानामस्यान्तानाञ्च अकारादीना प्राप्तव्यत्वात्॥ ५८०॥

पूर्वकृतेन अमा धातो. सन्धौ पश्चादनेन पुनरम्। अमो. सन्धौ पुनरम् करणस्य वैफल्यात्। ननु धौटीधौश्वम् धीरमाऽजादेर्त्रिश्च इत्यनेनैवेष्टसिद्धौ एतद्विधानन्तु आदिष्टस्याप्यजादे पुनरम् विधानार्थम्। तेन यजैत्रौ ऐज्यत वशलुस्त्रहि औष्टामित्यादि सिद्धम्॥ ५८१॥

## ५८३। भ्वसक्रन्वामः।

भू अस क्र ।१॥, अनु ।१।, आमः ५।।

भू अस् क्र एते आमन्तादनु प्रयुज्यन्ते। इन्दाम्बभूव इन्दामास इन्दाञ्चकार।

## ५८४। नेमसुम् क्र स्ट व्र भृ स्तु द्रु स्रु स्रोरिव ठ्राः।

न ।१।, इम् ।१।, असुन क्र स्रो ५।, एव ।१।, ठ्रा ६।।

एभ्यष्ठ्रा एव इम् न स्यात् अन्यस्मादनिमोऽपि स्यात्। इन्दाञ्चकर्थ।

---

इगुरु इश्चासौ इच् चेति विंच्, विंच आदिर्यस्य स विंजादि विंजादिश्च दयश्च अयश्च आसश्च त्यश्च अनेकाच् चेति तस्मात्। ऋच्छ च ऊर्णुश्चेति ऋच्छूर्णु, न ऋच्छूर्णु अनृच्छूर्णु तस्मात्। त्य प्रत्यय। यथा ऋतीयाञ्चक्रे पणायाञ्चक्रे कारयामास चिकीर्षामास इत्यादि। त्यान्तानामनेकाचत्वेनैव प्राप्तौ पृथक् ग्रहणं स्वामास इत्याद्यर्थम् ॥ ५८२ ॥

भूश्च अस् च क्रश्चेति भ्वसक्र। आम इति पञ्चम्यैव परत प्रयोगे सिद्धे अनुग्रहणं क्रियाविशेषणोपसर्गव्यवधानेऽपि प्रयोगार्थम्। तेन त पातयाम्प्रथमं मास पपात प्रागिति रघु। उचाम् प्रचकुर्नगरस्य मार्गानिति भट्टि। पूर्वतोऽनुवृत्तावपि पुनरामो ग्रहण सामान्याम् प्राप्त्यर्थम्। तेन दरिद्राञ्चकारेत्यादि पश्चाम् वाभीत्यादिभिर्विहितादामोऽपि भ्वादेरनुप्रयोग। एवमात्मनेपदिधातुभ्योऽस् भुवोरनुप्रयोगे कर्तरि द्रुतस्यात्मनेपदस्य स्थाने परस्मैपदादेशो वक्तव्य। ईहामास ईहाम्बभूव। भावकर्मणो क्रतस्य तु न स्यात। ईहामासे ईहाम्बभूवे चन्द्री जनेन। व्यतीहारे कर्तरि क्रतस्यापि न स्यात्। इहाम् व्यतिबभूवे काव। करोतेरनुप्रयोगे तु मूलधातोरेव परस्मैपदात्मनेपदे तिष्ठत। इन्दाञ्चकार ईहाञ्चक्रे। ननु पूर्वसूत्रे ठ्रामिति विषयसप्तम्या ठ्रा उत्पत्ते प्रागेव आमि कृते भ्वादीनामनुप्रयोगे तदनुसारेणैव विभक्ति स्यात्। किमात्मनेपदस्य परस्मैपदादेशेन इति चेत् न। क्रञो-ऽनुप्रयोगे आत्मनेपदिधातो ईहाञ्चकार इति परस्मैपदापत्ते। एव परस्मैपदिधातो इन्दाञ्चक्रे इत्यात्मनेपदापत्तेश्च। इन्दामासेति अस्तेरनुप्रयोगविधानसामर्थ्यात् भूरादेशो न स्यात् ॥ ५८३ ॥

[ १४ ] णिदि कुत्सायाम्।

प्रणिन्दति प्रनिन्दति।

[ १५ ] उख गतौ।

५८५। खियोरियुवर्णे।

खे ६।, यो ६।, इयुव् ।१।, अर्णे ७।।

खेरिवर्णोवर्णयोः क्रमादियुवौ स्याताम् अर्णे परे। उवोख।

अर्णे किम्? ऊखतुः।

[ १६ ] अन्चु गतिपूजनयोः।

[५६८] नेदित् पूजार्थाञ्चोरिति अञ्चयात्। गतौ तु अच्यात्

[ १७ ] म्रुचु इर्गत्याम्।

[५६५] शासुलिट्शुदिति ङो वा अम्रुचत् अम्रोचीत्।

एवं [ १८ ] ग्लुचुग्रुचुग्लुञ्चु।

[ १९ ] आछि आयामे।

आनाञ्छ आञ्छ।

---

नास्ति सुम् यस्यासौऽसुम् असुम् चासौ क्रश्चेति असुमक्र असुमक्रश्च स्तृश्च वृश्च श्रुश्च स्रुश्च द्रुश्च श्रुश्च सुश्चेति तस्मात्। नेमिकोजादित्यत इवर्जनात् प्राप्तस्य इमो निषेधार्थमिह वग्रहणम्। अन्येषां सप्ताना एकाचत्वेन अनिमामपि इह ग्रहणं नियमार्थम्। ननु एवशब्दं विनापि नियमसम्भवादव एवशब्दो वृथेति चेत् न। रङो वि. सुपीत्यत्र निमित्ते कार्य्यिणोरङो नियमात् यथा रङभिन्नरेफस्य विसर्गो न स्यात्। तथात्रापि असुमक्रादेर्निमित्तात् कार्य्यसञ्ज्ञायाम् थ्या एव इम् न स्यात्। असुमक्रादेरनियमोऽपि थ्या अन्यत्र इमापत्तेः। ततश्च असुमक्रादिसम्बन्धिना एवशब्देन असुमक्रादिभिन्नादनियमोऽपि थ्या इम् स्यादेवेति बोध्यते इत्यत आह अन्यस्मादनिमोऽपि स्यादिति। यथा चक्रथ सस्तृव ववृव बभृव तुष्टुव दुद्रुव शुश्रुव सुस्रुव। असुमक्रजस्तु सच्चस्कोरिव अन्यस्मादनिमोऽपि स्यादिति नियमेन जग्मिव ददिव पिश गतौ पिप्यिव नीञ् निन्ये तु ल लुलुविव दम्भिव। किञ्चिन्मात्रनियमेन विभाषा न बाध्यते ववन्दिव वव्दे ॥ ५८४ ॥

[ २० ] वज गतौ।

ववजतुः ववजिथ [ ५७९ ] वादित्वान्न एः।

[ २१ ] व्रज गतौ।

[ ५७४ ] व्रजवदेति व्रिः अव्राजीत्।

[ २२ ] अज गतौ क्षेपणे च।

५८६। व्यजोऽरे वा त्वनवस्यघञल्क्यपि।

वि ।१।, अज ६।, अरे ७।, वा ।१।, तु ।१।, अन-वसि ७।, अ-घञ् अल् क्यपि ७।।

अजतेररे विः स्यात्, अन त्ये वसे च वा स्यात्, न तु घञादौ।

५८७। नेमेकाजाद्युदृतोऽश्वि श्रि डी शी यु रु णु स्नु च्नु क्ष्णु वुः।

न ।१।, इम् ।१।, एकाच-आत्-इ-उत् ऋत ५।, अश्वि—वु ५।।

श्वयादेरन्येभ्य एकाज्भ्य आदन्तेवर्णान्तोदन्त ऋदन्तेभ्य इम् न स्यात्।

अवैषीत् आजीत्। विवाय।

---

इश्च उश्च यु तस्य इर्‌ च उव् च इयुव्। इयेष उवोख। अर्थो कि ईषतुः ऊखतु ॥ ५८५ ॥

न रोऽरस्तस्मिन्नरे अनश्च वस् च तस्मिन्। घञ् च अल् च क्यप् चेति घञल्-क्यप् न घञल्क्यप् अघञल्क्यप् तस्मिन्। अल्प्रत्यय वस् प्रत्याहारः। यथा अरे याकी वायकः। अनटि वयनम् अजन वसे द्दणि वेता अजिता घञादौ समाजः समज समज्या ॥५८६॥

एकोऽच् यस्य स एकाच् आत् च इश्च उत् च ऋत् चेति आद्युदृत् एकाचासौ आद्युदृच्चेति एकाजाद्युदृत् तस्मात्। श्विश्च श्रिश्च डीश्च शीश्च युश्च रुश्च णुश्च स्नुश्च च्नुश्च क्ष्णुश्च वुश्च ते,न विद्यन्ते ते यत्र तत् अश्विश्रिडीशीयुरुणुस्नुच्नुक्ष्णुवु तस्मात्। यथा

## ५८८। स्नुध्वोरणचीयुव्योर्व्यौ त्वस्यान्नैका-चोर्व्यो:।

स्नु ध्वो. ६॥, अणचि ७।, इयुव् ।१।, यो ६।, व्यौ १॥, तु ।१।, अस्यात् ५।, नैकाचो ६॥, व्यो ६॥।

**स्नोर्धोश्च इवर्णोवर्णयोरणावचि इयुवौ स्तोऽनेकाचस्तु अस्यात् परयो: क्रमादुवर्णे वर्णयोर्व यौ स्त । वियतु विव्यु.।**

---

पाता जेता नेता श्रीता कर्त्ता। एकाच कि दरिद्रिता चिरयिता दिधिता उर्ण-विता जागरिता सामान्यविधानात् प्राप्तेम् एव निषेधकोऽय विशेषविधिना तु स्यादेव। यथा यमरमेति अपासिष्टा सुस्तुधोरिति अस्तावीत्। स्वस्थ्वेन इति करिष्यति। श्व्यादिस्तु श्वयिता अयिता डयिता शयिता 'यविता रविता रीता नविता नीता वेमुदितो वा स्नविता चविता च्यावता वरिता। कविकल्पद्रुमे ष्ड व्रज विवर्जिता इत्युभयग्रहणज्ञापकादल सूर्वे युत मिश्रो इयस्यैव वर्जने युञ्ज बन्धे इत्यस्मादिम् न स्यात्। तेन योता। यद्यपि स्नमने रु नु इति इर्यो-रिहामुक्तावपि एकाजुदन्ततया अनिमत्वे नेमसुमिति ठ्रा नित्येमच ठ्रा अन्यत्र वेमूदिदित्यनेन वेमच तथापीह पाठ केषाञ्चिन्मते द्वावेतौ नित्येमाविति ज्ञाप-नार्थम्। अतएव कविकल्पद्रुमे श्विश्रिडीशीयुरुनुस्नुक्षुच्णु वृङ्व्रज विवर्जिता इति नित्येमा मध्ये अनयो' पाठ'। अवैषीदिति अजदौपि पूर्वेण वसे परे वि आदेश एकाजिवर्णान्तत्वादनेन इम्निषेध ॥ ५८७ ॥

स्नुश्च धुश्च स्नुधू तयो। नास्ति णर्यस्मिन् सोऽण अणश्चासावच् चेति अणच् तस्मिन्। इय् च उव् च इयुव्। इश्च उश्च यु तस्य व च य च व्यौ। न सोऽस्य तस्मात्। न एको नैक। नैकोऽच् ययोस्तौ नैकाचौ तयोर्नैकाचोरिति स्नुध्वो-रित्यस्य विशेषणम्। उश्च इश्च वौ तयोर्व्यो। योरित्येकवचनान्तस्य इयुव इत्यनेनैव यथासख्य न तु स्नुध्वोरिति द्विवचनान्तेन स्नोरिवर्णस्य असम्भवात्। तेन अय नियम। अणावचि परे स्नोरुवर्णस्य उव् स्यात् धातोरिवर्णोवर्णयो क्रमादियुवौ स्त इति। एव व्योरिति द्विवचनान्तस्य स्नुध्वोरित्यनेन च यथासख्यम्। तेन अनेकाच स्नोरसंयोगात् परस्य उवर्णस्य वकार। श्रयितेत्यादौ गुणेन बाधितत्वादेव इयुवो-रप्राप्तौ अणाविति सुखार्थमिति काशीश्वर.। तद्वेयम्। स्नुधूसम्बन्धोवर्णो वर्ण-

## ५८९। सृजद्दृशच् पाठात्वतो नित्यानिम्तु-थपो वेमन्तृव्येऽदः।

सृज्-दृश-अच्-पाठ-अत्वत ५।, नित्य-अनिम्तुः ५।, थप. ६।, वा ।१।, इम् ।१।, अन्-ऋ-व्येऽद ५।।

**सृजेर्दृशेरजन्तात् ध्वादिपाठेऽकारवतो नित्यमिम्रहित-टत्वात् थप इम् वा स्यात्, न तु ऋ व्येञ अद एभ्यः। विव-यिथ विवेथ।**

---

स्थानिकत्वादन्भावनिमित्तकत्वाच्च विशेषेण ञ्‌ध्वोरित्यनेन इडस्थानिकत्वादनभ्यास-निमित्तकत्वाच्च सामान्यस्य गुर्घूङ्स्वेत्यस्य बाधितत्वात् अयिता इत्यादावपि इया-पत्ते। अत्र धोरिवर्णस्य विकृतस्यापि ग्रहणं तेन आद्रियते इत्यादि सिद्धम् ॥५८८॥

अत् अन्त्यस्य अत्वान् पाठे दशविधगणपाठे अत्वान् पाठात्वान्। सृजश्च दृशश्च अच्च पाठात्वाश्चेति तस्मात्। नित्यमनिम् ट प्रत्ययो यस्मात् स नित्यानिम्ता तस्मात्। नित्यानिम्तुरिति अजन्तस्य पाठात्वतश्च विशेषणम्। ऋश्च व्येञ्च अद चेति ऋव्येऽद न ऋव्येऽद अनृव्येऽद तस्मात्। यथा ससर्जिथ ससष्ठ ददर्शिथ दद्रष्ठ। अजन्तात् यथा पपिथ पपाथ चिचयिथ चिचेथ निनयिथ निनेथ जुहविथ जुहोथ। नित्यानिम्तु कि शिश्रयिथ युयविथ पुपविथ ववरिथ तेरिथ। पाठात्वतो यथा डुपचीञ्पच पाके पेचिथ पपक्थ, वचौ वाचि उवचिथ उवक्थ व्यधौ ताडे विव्यधिथ विव्यद्ध, षद्लृजौश विषादे सेदिथ ससत्थ। भन्जधौ मोटने बभञ्जिथ बभङ्क्थ। नित्यानिम्तु. कि पठ वाचि पेठिथ इत्यादि। न च अत्वतोग्रहणे-नैवेष्टसिद्धौ पाठात्वतो ग्रहणं व्यर्थेति वाच्य ग्रच्छातेर्यङि जौ कृते नरीनृत्यत इति खरीखि यथा जरी ग्रच्यते इति स्यात्। तथात्वापि कृषादीना थपि वद्रोऽकि-दिति ऋकारस्य रेफेऽकारवत्त्वात् चक्रषिथ चक्रष्ठ इत्याद्यनिष्टापत्ते.। ऋव्येऽद इत्यत्र ऋशब्दस्य ऋवर्णान्तवाचित्वेऽपि दीर्घऋदन्ताना व इत्यस्य च सेम् कृत्वात् प्रसङ्गाभावे ह्रस्वऋभिन्न ऋदन्तात् नेम्तस्थप इत्यनेन थप इम् निषेधे ऋस्य इति ह्योरेव नित्यानिम्टत्वात् वेम्प्राप्तावनेन निषेधे नेमसुमृक् इति नियमाद्दसीरस्ये-तीमि आरिथ सस्वरिथ इति। व्येऽदोस्तु विव्ययिथ आदिथ ॥ ५८९ ॥

[ २३ ] चि चये ।

५९० । घोऽज्यरे ।

घं ।१।, अच् ।१।, यि ७।, अरे ७। ।

अजन्तस्य घं: स्यादरे ये परे । चीयात् ।

[ २४ ] कटे वर्षावरणयोः ।

अकटीत् एदित्त्वान्न वृिः [ ५७६ ] ।

[ २५ ] गुपू रक्षणे ।

५९१ । कम ऋतो गुपू धूप पण पनो ञिङीयङाया धुः ।

कम ५।, ऋत ५।, गुपू-धूप पण पन' ५।, ञिङ्-ईयङ्—आया. १।।।, धु १। ।

कमो ञिङ् ऋतेरीयङ् गुपादेराय: स्यात् स्वार्थे, तदन्तस्य धुसंज्ञ: । गोपायति ।

५९२ । वारे ।

वा ।१।, अरे ७। ।

एभ्य एते वा स्युररे विषये । अगोपायीत् अगोपीत् अगौप्सीत् । गोपायामास जुगोप ।

एवं [ २६ ] धूप तापे ।

[ २७ ] तपौ सन्तापे ।

[ ५५४ ] औदित्त्वान्नेम्, अताप्सीत् ।

---

न र अर. तस्मिन् यि इत्यस्य विशेषणम् । यथा चीयात् । शिव इवाचरति शिवायते एवं हरीयते विष्णूयते । धोरन्तस्थितस्य प्रकृतेर्विकृतेरप्यचो दीर्घ. स्यात् ह्वेञ ह्यात् टुओश्वि शूयात् इत्यादौ जौ कृतेऽपि दीर्घ. । स्त्रविगतौ स्त्रियात् डुकृञ क्रियात् इत्यादौ तु ऋद्रि. शयक्ढीपे इत्यत्र ऋस्वान्तादेशसामर्थ्यात् न दीर्घ. ॥५९०॥

कमः ऋत इति द्वय पञ्चम्येकम् । गुपूश्च धूपश्च पणश्च पनू चेति तस्मात् ।

[ २८ ] चमु अदने।

५९३। ष्ठिवुक्लमाचमोऽपि घं:।

ष्ठिवु क्लम आचम ६।, अपि ७।, घं १।।

एषां घं: स्यादपि। आचामति। आङ: किं, चमति विचमति।

[ ५७६ ] मान्तत्वान्न त्रि.। अचमीत्।

[ २८ ] क्रमु पादविक्षेपे।

५९४। क्रम क्लम भ्रम भ्राश भ्लाश त्रस त्रुट लष यस संयस: श्यन् वा रे घे।

क्रम सयस ५।, श्यन्।१।, वा।१।, रे ७।, घे ७।

एभ्यो घेऽर्थे श्यन् वा स्यात् रे परे। क्राम्यति।

---

ञिङ् च ईयङ् च आयश्च ते ञिङीअकारो वृद्ध्यर्थं ङकार आत्मनेपदार्थं। ईय-ङोङकार आत्मनेपदार्थोऽगुणार्थश्च। अर्थाविशेषेण विधानात् स्वार्थे स्तु। यथा कामयते ऋतीयते गोपायति गोपायते धूपायति धूपायते पणायति पणायते पनायति पनायते आयान्तत्वादुभयपद वक्ष्यति॥५९१॥

विषयसप्तमीय तेन व्यामेव सिप्रभृति प्रत्यय सम्भाव्यते इति टीविभक्त्युत्पत्तेः प्रागेव आदेशास्ततो धातुसञ्ज्ञाया टीप्रभृति विभक्त्युत्पत्ति। अगोपायीदिति आयान्तत्वेन धातुसञ्ज्ञाया धात्वन्तरत्वान्नित्यमिम्। पक्षे अगोपीत् अगौप्सीदिति ऊदित्वान्नेम्। अनिम्पक्षे वृद्धि। गोपायामासेति प्रत्ययान्तत्वादाम्। एव गोपाय्यते गुप्यते गोपायति गोपयति इत्यादि॥५९२॥

ष्ठीवति क्लामति आचामति॥५९३॥

क्रमश्च क्लमश्च भ्रमश्च भ्राशश्च भ्लाशश्च त्रसश्च त्रुटश्च लषश्च यसश्च संयस् चेति तस्मात् क्रम्यति श्यनि परेऽपि दीर्घं इति गोविन्दभट्ट। तन्मते। क्राम्यति अतएव पठन्ति च इष्यते श्यनि दीर्घत्व दाक्षिणात्यलक्षणवेदिभिः। तेन क्राम्यति कौमारे चानित्यत्वोपलक्षणादिति। क्लाम्यति शमादित्वात् दीर्घं वक्ष्यति भ्रम्यति भ्रमति भ्राश्यते भ्राशते भ्लाश्यते भ्लाशते भ्राशभ्लाशौ तालव्यान्तौ दन्त्यादौ च त्रस्यति त्रसति

५९५। क्रमः पेऽपि घं:।

क्रम' ६।, पे ७।, अपि ७।, घं. १।।

क्रामति।

५९६। स्नु-क्रमोऽमेऽरवस इम्।

स्नु क्रम ५।, अमे ७।, अरवस ६।, इम्।१।।

आभ्यां वमस्यारस्य इम् स्यान्न तु मे। अक्रमीत्।

[ ३० ] औ यमु उपरमे।

५९७। स्था दान पा घ्रा ध्मा म्ना·र्त्ति दृश शत् सद्गमिष् यम जनां तिष्ठ यच्छ पिव जा जिघ्र धम मनर्च्छ पश्य शीय सीद गच्छेच्छ यच्छ जाः शिति।

स्था—जना ६।।।, तिष्ठ—जा १।।।, शिति ७।।

एषामेते क्रमात् स्यु शिति परे। यच्छति।

---

त्रुट्यति त्रुटति पक्षे तुदादित्वात् श। लष्यति लषति यस्यति यसति अन्तस्यादि संयस्यति अन्यत्र प्रयस्यति। अत्र शित्वाद्रसञ्ज्ञायां ङिदपिद्र इति ङित्वे त्रुट्यती-त्यत्र न गुण नकारस्तु त्रुट्यन्तीत्यादौ अप्यनो नित्यमिति गुणार्थं ॥५९४॥

क्रामति। पे किं प्रक्रमते ॥५९५॥

स्नुक्रमोनेममे इत्यनेनापीष्टसिद्धौ अमेऽरवस इति गौरवं ज्ञापयति क्रमधातो रनात्मनेपदे अरवसमात्रस्य नित्यमविधानात् क्वचिदिमो विकल्पेऽपि नित्यमिम् इति। तेनानुपसर्गस्य क्रमधातोर्वा गेरित्यात्मनेपदयोग्यत्वेमर्हात् क्रमोनेम त्वण इति इम्निषेधे नित्यानिमृत्वात् प्राप्तव्य स्तजट्टशीति विकल्प बाधित्वा यपि चक्रमिथ इत्यत्र नित्यमिम्। अस्नावीत् अक्रमीत् स्नविष्यति क्रमिष्यति स्नवितव्य क्रमितव्य मे तु स्नोष्यते क्रंस्यते पचिक्रंसते सुस्नूषतीति तु नेमुगुहग्रहेति इम् निषेधात् क्रम परस्य भावकर्म्मणो कृतस्य आत्मनेपदस्य इम् स्यादिति दुर्गसिंह-क्रमदीश्वरौ। यथा सनन्तस्य चिक्रमिष्यते ॥५९६॥

क्रमौ यथा स्था तिष्ठति दान यच्छति दा इत्युक्तौ दासंज्ञाग्रहणेन डुदाञ्कि

**५९८। यम रम-नमातः पे सेरिम् सन् चैषाम्।**

यम—आत ५।, पे ७।, से ६।, इम् ।१।, सन् ।१।, च ।१।, एषाम् ६॥।

यमादेरादन्ताच्च सेरिम् स्यात् पे तेषाञ्च सन्। अयसीत् अयमिष्टाम्। [ ५८८ ] स्वजद्दमेति वेम्। येमिथ ययन्थ।

एवं [ ३१ ] णमौ शब्दनत्योः।

[ ३२ ] ह्वय गतौ।

अह्वयीत् [ ५७६ ] यान्तत्वान्न व्रिः।

[ ३३ ] दल मि भेदे।

[ ५७४ ] व्रजवदेति व्रिः। अदालीत्।

[ ३४ ] ञि फला विसरणे।

फेलतुः फेलुः फेलिथ।

[ ३५ ] त्सर छद्मगतौ।

अत्सारीत्।

[ ३६ ] ष्ठिवु निरसने।

[ ५९३ ] ष्ठिवुक्लमेति घंः। ष्ठीवति।

---

डुधाञलि इत्येततयो श्पोलुक् करणात् अन्येषाञ्च असम्भवात् दान इत्यत्र नकारः सुखार्थ इति काशीश्वर। वस्तुतस्तु डुदाञलि दाने दालनूनावित्याभ्या शपो लुकि कृतेऽपि शतृशानयोर्यच्छादेशनिवृत्त्यर्थं। पा पाने पिवति दानसाहचर्य्यात् पा इत्यपि भौवादिक एव। अन्यथा पाल रक्षणे इत्यस्य शतृशानयो पिवादेशापत्ते। ज्ञा जानाति घ्रा जिघ्रति ध्मा धमति म्ना मनति अर्त्तिरिति भौवादिकजुहोत्याद्योर्ह योर्ग्रहणम्। तेन ऋप्रापे ऋच्छति। ऋलिंगत्यामित्यस्य तु तिबादौ शपो लुक् करणात शतृशानयोर्ऋच्छादेशे इयृच्छन् इयृच्छान। दृश पश्यति। शदॢजौशाते तालव्यादिः शीयते। षदॢजौशविषादे शरणे गतौ सीदति। गम गच्छति इषुशवाञ्छे इच्छति। भौवादिकयोर्गमयमयोर्मध्यवर्त्तित्वात् इषधातोः अकारमात्रावशिष्टे शिति इच्छादेशः तेन इषगाभीक्ष्ण्ये इष्णाति इष सर्पणे इष्यति। यम यच्छति।

## ५९९ । ष्ठिवजाद्योः खेष्ठक्कोस्त वा ।

ष्ठि व अजाद्यो. ६॥, खे ६।, ठक्को. ६॥, त ।१।, वा ।१। ।

तिष्ठेव टिष्ठेव छीव्यात् ।

[ ३७ ] जि जये ।

## ६०० । जेर्गिः सन्-ठ्योः ।

जे ६।, गि १।, सन् ठ्यो ७॥ ।

जिगाय ।

[ ३८ ] रक्ष पालने ।

प्रनिरक्षति । षान्तत्वान्न [ ५४९ ] णः ।

[ ३९ ] अक्षू व्याप्तौ ।

## ६०१ । वाक्ष-कृशार्थतक्षः श्नुर्घे रे ।

वा ।१।, अक्ष कृशार्थ तक्ष' ५।, श्नु १।, घे ७।, रे ७। ।

आभ्या रे परे श्नुः स्याद्वा घेऽर्थे। अक्ष्णोति अक्षति । [ ५८८ ] श्नुभ्वोरित्युव अक्ष्णुवन्ति । [ ५७३ ] उदित्त्वादिम् वा आक्षीत् । [ २१३ ] स्कादेः स्तो लोपः ।

---

जनीभ्यङ्जनौ जायते । गमादिसाहचर्य्यात् रे परे जायमानो य श्नित् तस्मिन्नेव जनो जादेश तेन जन्मलिच इति जौद्धीत्यादिकस्य शत्रशानयोर्जादेशाभावे जज्ञत् व्यतिजज्ञान इति । ननु रे इत्यनेनैवेष्टसिद्धौ श्नीति कथमिति चेत् न ऋलिंगत्वा-मित्यस्य इयर्त्तीत्यादौ श्नपो लुकि विवादो ऋच्छादेशापत्ते ॥५९७॥

यथा अयसीत् अयसिष्टा व्यरसीत् अनसीत् अयासीत् गै अगासीत् ॥५९८॥

ष्ठिव् च अजादिश्च ष्ठिवजादी तयो. । ठ च क च ठक्कौ तयो. ष्ठिवधातो' खेष्ठकारस्य अजादिधातो खेच्ककारस्य च तकार स्याद्वा । यथा तिष्ठेव टिष्ठेव उक्तोश्वन्ध्समापने उतिच्छिषति । उचिच्छिषति छीव्यादिति व्यंनचतयीति दीर्घ ॥५९९॥

जिगीषति जिगाय । जेर्खुवन्क्षीश्निन्नीति वक्तव्यम् । जयति रघुवंशतिलकः ।

## ६०२ । षढोः कः से ।

ष ढो. ६॥, क १।, से ७। ।

षस्य ढस्य च कः स्यात् सकारे परे । आचीत् आचिष्टाम् आष्टाम्, आचिषुः आचुः ।

एव [ ४० ] तचूकार्श्ये ।

कृशार्थः किं, निर्भर्त्सने सन्तचति ।

[ ४१ ] णिच चुम्बने ।

[ ४४८ ] प्रणिचति प्रनिचति ।

[ ४२ ] कृषौ विलेखने ।

## ६०३ । कृष मृश स्पृश तृप दृप सृप सिच्यां वा ।

कृष—सृप ५।, सि १।, च्या ७।, वा ।१। ।

एभ्यः सिर्वा स्यात् च्याम् ।

---

जयन्ति यमुनाकूले रह केलय । तुपस्थाने तातड् इष्यते भावगम्यमना कोऽपि जयताङागगोचर इति हलायुध ॥६००॥

कृशार्थश्चासौ तच चेति कृशार्थतच । अचश्च कृशार्थतच चेति तस्मात् । तक्ष्णोति तचति काष्ठ तचा तनूकरोति इत्यर्थं । सन्तचति चौर साधुर्निर्भ-र्त्सयतीत्यर्थं. । धातूनामनेकार्थत्वात् सन्तचतिरिह निर्भर्त्सनार्थं. ॥६०१॥

आचीदिति अनिम्पचेऽपि च्यां सि रुदादयस्सीति ईम् स्यादे. सीलोप इति कलोपे अनेन यस्य के क्रिलादिति ष । आष्टामिति अनिम्पचे भास्स्वादिति सिलोपे संयोगादे कस्य लोपे ष्टुभिरिति तस्य ट. । आचुरिति अनिम्पचे सेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् अन् उस् । प्रणिचतीति वात्वननिसेत्यादिना णत्व वा ॥६०२॥

कृषौ त्वाकृषि कृषजौ चेत्युभयं मृशशौ मृशि स्पृशशौ स्पृशि ञितृप्यू प्रीणने दृप्यू इर्हर्षगर्वयो. सृपौ गत्याम् इत्येतेभ्य. सिर्वा स्यात् च्याम् ऋकारस्य वृद्धौ अकार्क्षीत् धकि अकृचत् ॥६०३॥

## ६०४ । वर्द्धोऽकिज्झसे इशहजोस्तु नित्यम् ।

वा ।१।, ऋत् ।१।, र. १।, अकित् झसे ७।, इश हजी ६॥, तु ।१।, नित्यम् १। ।

**क्षपादीनाम् ऋकारो रः स्याद्वा अकिज्झसे इशहजोस्तु नित्यम्। अक्राक्षीत्, अकार्क्षीत्।**

## ६०५ । हशषोऽनिमिजुङोऽदृशः सक् ष्यां श्लिषस्त्वालिङ्गने ।

ह-श-ष ५।, अनिम् इजुङ ५।, अ-दृश ५।, सक् ।१।, ष्यां ७।, श्लिष ५।, तु ।१।, आलिङ्गने ७।

**अनिमिजुङो ह श षान्तात् दृशवर्जात् सक् स्यात् ष्यां, श्लिषतेस्त्वालिङ्गनेऽर्थे। अक्रुक्षत्।**

**[ ४३ ] रुष हिंसायाम्।**

## ६०६ । वेम् सह लुभ भृ स्तु शुच वस त्वश रुष रिषिषो स्तोऽरस्य ।

वा ।१।, इम् ।१।, सह—इषो: ५।, त ६।, अरस्य ६। ।

**एभ्यस्तस्यारस्य इम् स्याद्वा। रोषिता रोष्टा।**

**एव [ ४४ ] रिष हिंसायाम्।**

---

वाशब्दस्य व्यवस्थावाचित्वात् सनि सृजदृशोर्ऋकारस्य रेफी न स्यादिति बोध्यम्। यथा दिदृक्षते सिसृक्षति। वा ग्रहणमुत्तरत्र निवृत्त्यर्थम् ॥ ६०४ ॥

हश्च-तालव्य-शश्च मूर्द्धन्यष चेति तस्मात्। नास्ति इम् यस्मात् सोऽनिम् इच् उङ् यस्य स इजुङ् अनिम् चासौ इजुङ् चेति अनिमिजुङ् तस्मात्। अनिमिजुङ इति हशषो विशेषणम्। नास्ति दृश् यत्र सोऽदृश् तस्मात्। अनिमिजुङ्-हान्तात्तालव्यशान्तान्मूर्द्धन्यषान्ताच्च दृश्वर्जात् सक् स्यात् ष्याम्। श्लिष्यतेस्तु आलिङ्गनेऽर्थे इत्यर्थ। यथा मिहौ सिचि अमिक्षत् रुहौ अरुक्षत् दिशशौञ अदिक्षत् क्रुशजौ अक्रुक्षत् सृशशौ अस्पृक्षत् लिषौञ भासि अलिक्षत् दुर्दुष्यौ अदुक्षत् क्रषौ अकृक्षत्। अत्र शस् प्रत्याहारो लिपिकरप्रमादकृतः अनिमृइजुङ् दन्त्यसान्तधातोरसम्भवात् आलिङ्गनन्तु प्रीतिपूर्वकवक्षोद्वयसंयोगः। अश्लिक्षत् युवती युवा ॥६०५॥

[ ४५ ] उष दाहे।

६०७। दरिद्राकासकाशजागुषो वाम् ठ्याम्।

दरिद्रा—उष ५।, वा ।१।, आम् ।१।, ठ्याम् ७।

एभ्य आम् वा स्यात् ठ्याम्।

[ ५८३ ] भ्वस् क्रन्चाम इति ओषाम्बभूव उवोष।

[ ४६ ] शश प्लुतगतौ।

शशाश शशशतुः शशशिथ।

[ ४७ ] मिह सेचने।

[ ६०५ ] इगशषोऽनिमिति सक्। ( १७५ ) ह्वोढोभौ असिद्धत्।

[ ७७ ] ढोढि पंखानुरिति, मेढा।

[ ४८ ] दह भस्मीकरणे।

[१७६] दादेर्धः। [१७७] भभान्तस्येति दस्य धः। अधाक्षीत्।

[ ४९ ] चह कल्कने।

अचहीत् [ ५७६ ] हान्तत्वान्न वि:।

[ ५० ] शुच शोके।

[ ६०६ ] शोचिता शोक्ता।

---

यथा सहिता सोढा लोभिता लोब्धा भरिता भर्त्ता सविता सोता शोचिता शोक्ता वसलडस्तृतौ वसिता वस्ता तुलब्रच्यादौ तविता तोता अशग भोजने अशिता अष्टा रोषिता रोष्टा इषु शवाञ्छे एषिता एष्टा इषु ग्रहणात् इषुगाभीक्ष्ण्ये इष्यसर्पणे इत्येतयोर्नित्यमेव ॥ ६०६ ॥

यथा दरिद्रामास ददरिद्र काश द्युतौ काशाञ्चक्रे चकाशे काशृड कुशब्दे काशामास चकाशे जागरामास जजागार ओषाम्बभूव उवोष। मेढेति मिह सेचने अन्तरङ्गतरत्वादादौ गुणे ह्वोढोभाविति हस्य ढे ढभात्तयोरिति तकारस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रीति ढस्य लोपे पूर्वङ्स्वाभावान्न दीर्घः ॥ ६०७ ॥

[ ५१ ] ग्लै हर्षक्षये ।

## ६०८ । एचोऽशित्याः ।

एच ६।, अशिति ७।, आ १। ।

धोरेच आः स्यादशिति । [ ५८८ ] यमरमेतीम् सनौ । अग्लासीत् ।

## ६०९ । णवातो डौः ।

णप् ।१।, आत ५।, डौ १। ।

आदन्तात् परो णप् डौः स्यात् । जग्लौ ।

## ६१० । उस्येचीम्यणखराचि लोपः ।

उसि ७।, एचि ७।, इमि ७।, अखराचि ७।, लोप १। ।

उसि एचि इमि अणोरखराचि धोरातो लोपः स्यात् । जग्लतुः जग्लुः । जग्लिथ जग्लाथ ।

## ६११ । स्यादेर्ङेऽस्थो वाव्यणौ ।

स्यादेः ६।, ङे ।१।, अस्थ ६।, वा ।१।, व्यणौ ७। ।

स्यादेरादन्तस्य स्थावर्जस्य ङे स्याद्वा व्यणौ । ग्लेयात् ग्लायात् ।

---

अशितीति विषयसप्तमी तेनादौ आ स्यात् । तत प्रत्ययोत्पत्ति । अतएव साम गायतीति सामग. इत्यत्र आदौ एचोऽशित्या तत आदन्तात् हनजनाङ्गमादेरिति डः । अरे इत्यनेनैवेष्टसिद्धौ अशितीति कथम् इति चेन्न ग्लै क्षमि इत्यस्य यङ्लुकि ख्या जाग्लायात् इत्यादौ ऐकारस्य आकारानुपपत्तेः ॥ ६०८ ॥

ददरिद्रौ इति सिद्धार्थं डौकरणमिति रामतर्कवागीशं । इदमतीव हास्यास्पद बहुव्याकरणविरुद्धत्वात् ग्रन्थकारेण दरिद्रं आलोप इति सूत्र कृत्वा णपि ददरिद्र इति स्वयमुदाहृतत्वाच्च । वस्तुतस्तु डौकरणं क्वचिदेकपदेऽपि सन्धिर्न स्यादिति सूचनार्थं तेन चालनी तितउ. पुमानित्यमर. ॥ ६०९ ॥

नास्ति णर्यस्मिन् सोऽणः अणश्चासावरश्चेति अखर. तस्याच् अखराच् तस्मिन् । यथा अप्सु गार्लिस्तुतौ व्यतिजगे जग्लिथ अन्तर्द्धिः अणौ. किं स्थानम् अरस्य किं भान्ति अचि किं स्यात. ॥ ६१० ॥

[ ५२ ] गै शब्दे ।

## ६१२ । दा मा गै हाक पिव सो स्थोऽरहसे ल्यपि ङी ।

दा—स्थ ६।, अरहसे ७।, तु ।१।, अयपि ७।, ङी ।१।।

एषां क्यणौ ङे स्यात् अरहसे ल्यणौ यप् वर्जे ङी स्यात् । गेयात् ।

[ ५३ ] ध्यै सहतौ ध्वनौ ।

ध्यायति ।

[ ५४ ] दैप शोधने ।

[ ५३४ ] पित्वान्न दासञ्ज्ञा । अदासीत् । दायात् ।

[ ५५ ] धेण्ट पाने ।

[ २५७ ] ट ईवर्थ: ।

---

न च परसूत्रे स्याग्रहणेनैव इह तस्याप्राप्तौ स्यावर्जनं कथमिति वाच्यम् । पर सूत्रे स्याग्रहणस्य अरहसे त्वयपिङीति शेषरीतिसम्बन्धेनैव सार्थकत्वे सयोगाद्यादन्तत्वेन स्याधातोरनेन क्यणौ ङे विकल्पापत्तेः । ध्येयात् ध्यायात् प्रेयात् प्रायात् स्रेयात् स्रायात् ॥ ६११ ॥

समस्तस्यासमस्तेन नित्याकाङ्क्षेण सङ्गतिरिति न्यायाद्णावित्यस्य ङीसम्बन्धस्यापि अरहसे इत्यनेन सम्बन्धः । अथवा यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् यप् वर्जनेनैव अणाविति लभ्यते दा इति सञ्ज्ञा देयात् धेयात् दीयते धीयते दैप शोधने इत्यस्य दायात् दायते मास्वरूप तेन मात्माने मेयात् मीयते माङलिशब्दे माङयच मेङ प्रतिदाने एषा मीयते । गेयात् गीयते हेयात् हीयते हाकग्रहणात् हाङलि हायते पेयात् पीयते पिवग्रहणात पाल पै इत्येतयो पायात् पायते सो इति सोय नाशे । सेयात् सीयते स्थेयात् स्थीयते । यपि तु प्रदाय प्रमाय इत्यादि । अत्र अयप्रेहसे तु ङी इति कृतेऽपीष्टसिद्धौ अरहसे ल्यपीङीति कृत तस्य क्वचिन्नित्यत्वज्ञापनार्थं तेन हानिरित्यत्र न ङी । ट ईवर्थ इति । तेन सनन्धयीत्यादि ॥ ६१२ ॥

## ६१३। ञि श्रि स्रु द्रु कमोऽङ् घे स्यां श्वि धेट ध्वन्येल्यर्ह्यूनेस्तु वा।

ञि—कमः ५।, अङ्।१।, घे ७।, ट्या ७।, श्वि धेट ध्वनि एलि अर्हि-ऊने ५।, तु।१।, वा।१।।

जन्तादिभ्यश्चामङ् स्यात् घेऽर्थे श्वगादेस्तु वा। (५५८) श्रुद्विष्ठरडीति, अदधत्।

## ६१४। धेशाच्छासाघ्रः सेः पे लुग्वा।

धे—घ्र ५।, से ६।, पे ७।, लुक्।१।, वा।१।

अधात् अधासीत्।

[ ५६ ] पा पाने।

[५८७] स्थादानेति पिव। पिवति। [ ५५२ ] भूस्था पिवेति सेर्लुक्। अपात् पेयात्।

[ ५७ ] घ्रा गन्धोपादाने।

जिघ्रति। अघ्रात् अघ्रासीत्।

[ ५८ ] ध्मा शब्दाग्निसयोगयोः।

धमति। अध्मासीत्।

[ ५९ ] ष्ठा गतिनिर्वृत्तौ।

तिष्ठति। न्यष्ठात्। नितष्ठौ। स्थेयात्।

[ ६० ] म्ना अभ्यासे।

मनति।

[ ६१ ] दा·न दाने।

प्रणियच्छति। प्रणदात्। देयात्।

---

ञिश्च श्रिश्च स्रुश्च द्रुश्च कम' चेति तस्मात्। श्विश्च धेटश्च ध्वनिश्च एलिश्च अर्हिश्च ऊनिश्चेति तस्मात्। यथा अबीभवत् अशिश्रियत् असुस्रुवत् दत्यादि.। अदुद्रुवत्

[ ६२ ] ह्वृ कौटिल्ये।

## ६१५। स्याद्यर्त्त्यृतो गुर्यङ्यक् ठीढाणौ स्कुस्तु ठाम्।

स्यादि-अर्त्ति-ऋत ६।, गु. १।, यङ्-यक्-ठीढणौ ७।, स्कु ६।, तु ।१।, ठाम् ७।।

**स्यादेरर्त्तेॠकारस्य गुः स्यात् यङि यकि ठीढोरणौ च, स्कुस्तु ठामिव। जह्वरतुः।**

## ६१६। नेमृतस्थपोऽवृस्कुः

न ।१।, इम् ।१।, ऋत ५।, थप ६।, अ वृ ऋ स्कु ५।।

**वृ ऋ स्कु वर्जात् ऋकारान्तात् थप इम् न स्यात्। जह्वर्थ।**

---

अचकमत् अशिश्वियत् अश्वयीत् व्रजवदित्यत्र त्रिश्वि वर्जनात् न व्रि। अदधत् अधासीत्। ध्वनिरिति मि ध्वन रवे इत्यस्य घटादिपचे कृतङ्खस्य ध्वनत क त शब्दे इत्यदन्तस्य च ग्रहणम्। अदिध्वनत् अध्वनयीत्। इल ऐलयीत् ऐलिलत् अर्द आर्दयीत् आर्दिदत् ऊनिरित्यदन्तचुरादि औनिनत् औनयीत्॥ ६१३॥

धेट पाने शोय निशाने क्षोय न्यूनौ सोय नाशे घ्रा गन्धग्रहणे एभ्य सेर्लुग् वेह्वा परस्मैपदे। अधात् अधासीत् अशात् अशासीत् अच्छात् अच्छासीत् असात् अससीत् अघ्रात् अघ्रासीत्। पिवतीति पिवादेशस्य अदन्तत्वात् न णु लोपोऽतो इत्यकारलोप। न्वष्ठादिति भ्रस्था पिवेति सिलुक् गीकः सुस्तुभेत्यत्र अभ्यपीति षत्वम्। नितष्ठाविति दशस्य ादेरिति खिव्यवधानेऽपि षत्वम्॥ ६१४॥

स्यादिश्च अर्त्तिश्च स्याद्यर्त्तौ तयोॠत् स्याद्यर्त्त्यृत् तस्य। नास्ति णुर्यस्मिन् सोऽणु ठीढोरणु ठीढणु। यङ् च यक् च ठीढणुश्चेति तस्मिन्। अत्र ढणरिति ठीसाहचर्य्यात् कित्ठीढीषमित्यनेन कित्संज्ञस्य ढीपरस्मैपदस्यैव ग्रहणम्। तेन स्तृनञ्स्तृतावित्यस्य स्याद्वॄदुरिति वेमत्वे स्तृषीष्ट इत्यादौ इगुङ्ग-मंढीति व्यात्मनेपदस्य कित्त्वेऽपि अनेन गुणो न स्यात् स्तुरिति ससुमकञ इत्यर्थः। यथा सास्मर्य्यते स्मर्य्यते सस्मरतु स्मर्य्यात्। अर्त्तेस्तु अरार्य्यते अर्य्यते आरतु अर्य्यात्। स्कुस्तु सञ्चस्करिव। अत्र अर्त्तेः साहचर्य्यात् स्यादेरिति ऋदन्तस्यैव ग्रहणम्। तेन स्पृशशौ परीस्पृश्यते स्पृश्यते पस्पृशतुः स्पृश्यात् एषु न गुणः॥६१५॥

## ६१७। स्वस्य द्वैनः ।

स्वस्य ६।, ऋत्-ह्न ५। ।

ऋदन्त हन्तिभ्यां स्वस्य इम् स्यात् । ह्वरिष्यति ।

[ ६३ ] स्वृ ज शब्दोपतापयोः ।

[ ५७२ ] वेमूदिति इम् वा अस्वारीत् अस्वार्षीत् सस्वरिथ सस्वर्थ ।

[ ६४ ] सृ गतौ ।

## ६१८। वक्त्यस्य ख्या लिप सिच ह्वो ङो घे व्यां स्सृ वा लिबभ्यस्तु मे ।

वक्ति-ह्व. ५।, ङ १।, घे ७।, व्या ७।, स्र. ५।, तु ।१।, वा ।१।, लिब्भ्य' ५॥, तु ।१।, मे ७। ।

वक्त्यादेर्घेऽर्थे ङः स्यात् व्यां, सृऋभ्यान्तु वा लिपादेस्तु मे वा स्यात् ।

---

ह्रस्व ऋस्य स्वस्य ते, न विद्यन्ते ह्रस्वस्वारौ यत्र सोऽह्रस्व. तस्मात् । यथा ऋदन्त-सेके जगर्थ जघर्थ वादेस्तु ववरिथ नेमसुमित्यादिना हृधातो छीमावस्य इम् निषेधेऽपि अत्र ह्रग्रहणात् थप इम् । ववरिथ सञ्जस्करिथ वेमूदिदित्यत्र स्वरग्रहणाज्ज्ञापकात् स्वृजशब्दोपतापयोरित्यस्य सस्वरिथ सस्वर्थ इति स्यादेव ॥ ६१६ ॥

करोतीत्यादीना नेमेकाजिति निषेधादप्राप्तौ स्वृजशब्दोपतापयोरित्यस्य वेमोऽपि नित्यार्थं विधानम् । करिष्यति स्वरिष्यति हनिष्यति ॥ ६१७ ॥

वक्तिरिति वच्लौ वाचि । अस्य इति असु इर् क्षेपे । वक्तिश्च अस्यश्च ख्याश्च लिपश्च सिचश्च ह्वाश्च तस्मात् । सृश्च ऋश्च स तस्मात् । लिब्भ्य इति बहुवचन गणार्थम् । तेन लिपसिचह्वाभ्य इत्यर्थ । यथा अवोचत् आस्थत् अस्यते परस्मैपदे ङ सिद्ध एव इहोपन्यासस्तु आत्मनेपदप्राप्त्यर्थं । तेन गीर्वास्योह्योढे चेत्यात्मनेपदे निरास्थत आख्यत् अलिपत् असिचत् अह्वत् असरत् आरत् इग्योर्गुरिति गु' पक्षे असार्षीत् आर्षीत् लिपादेस्तु अलिपत अलिप्त असिचत असिक्त अह्वत अह्वास्त ॥ ६१८ ॥

६१९। इग्नोर्णुः।

इग्नो ६॥, णु १।।

इग्नेर्ऋवर्णान्तस्य च णुः स्यात् र

६२०। ऋद्रिः शयक्ढ्यौ ७, स्नुः ६।, तु ।१।,

ऋत् ।१।, रिः १।, श-यक्-ढी-पे ७।।

स्त्रियात्।

[ ६५ ] ऋ गतौ। क ठौच्योरणौ च,

ऋच्छति। आरत् आर्षीत्। आर, आरतु

[ ६६ ] श्रु श्रवणे।

६२१। श्रोः श्रुर्घे रे जिश्च।

श्री ५।, श्र १।, घे ७।, रे ७।, जि १।, च ।१।।

श्रुवो घेऽर्थे श्नु स्यात् रे, श्रुवश्च जिः। शृणोति शृणुतः

६२२। नूपोऽस्यस्योल्लोपो व्मि वा

नूप ६।, अस्यस्य ६।, उल्लोपः १।, व्मि ७।, वा ।१।।

अस्यस्य नोरूपश्च उकारस्य वा लोपः स्यात्

परयोः। शृण्वः शृणुवः शृण्मः शृणुमः।

[ ५४७ ] ईर्लोगोऽस्येति, शृणु शुश्रुव।

---

अदर्शत् आरत् अजरत् ॥ ६१९ ॥

शश्च यक् च ढीपश्च तस्मिन्। आद्रियते क्रियते क्रियात्। आरतुरिति स्वाद्यच्यृत इति णः। आरियेति सृजदृशेत्यत्र ऋवर्जनात् न वेम्। अर्य्यादिति स्वाद्यच्यृत इति णः ॥ ६२० ॥

शृण्वन्तीति ष्रुर्ण इति णत्व नुभ्वोरिति व ॥ ६२१ ॥

नुश्च उप् चेति तस्य। न स्योऽस्य तस्य। उत लोपः उल्लोप। व च म च व्म तस्मिन् शृण्व. शृणुव. शृण्मः शृणुम. तन्व तनुवः तन्मः तनुम शृणोमि तर्नो-मीत्यादौ लोपस्वरादेशयोः स्वरादेशविधिर्बलवानिति न्यायात् गुण एव। संयुक्त-नुपोस्तु आप्नुवः आप्नुम इत्यादुञ्भवे नोप्युडोर्णुवेति गुणे तर्णुव तर्णुमः शुश्रुवेति नैमसृमिति नियमात् न इम् ॥ ६२२ ॥

६१७। स्यस्य ] सु गतौ।

स्यस्य ६।, ऋत्-हन' ५।। धोः सेरिम् पे।

ऋदन्त हन्तिभ्यां स्य ।, पे ७।।

[ ६३ ] थ सुषुविव। सविता सोता।

[ ५७३ ] वेमूदितं [ ६८ ] सु गतौ।

सस्वथं। ङ्। असुस्रुवत्। सुस्रोथ सुस्रुक।

[ ६९ ] दु गतौ।

६१८। व त् दुदुविव।

घे व्यां सस्तु [ ७० ] द्रु गतौ।

वक्ति-ह्न. ५। दुद्रुव।

तु।१।, मे ७। [ ७१ ] गम्लौ गतौ।

वक्त्यान्ति [ ५६५ ] लिदित्त्वात् ङ', अगमत्। जगाम।

मे वा स्याद्धनगमेत्युङ्लोप', जग्मतुः जग्मु'। जगमिथ जगन्थ।

६२४। गमोऽमे स इम् मार्हात्तु वा।

सेके गम ५।, अमे ७।, स ६।, इम्।१।, मार्हात् ५।, तु।१।, वा।१।।

गमः परस्य सस्य त् स्यात् न तु मे, मर्योग्यात्त् वा। गमिष्यति।

---

वेमूदित्यनेन वेमत्वे नित्यार्थं सुग्रहणम्। एकाजुदन्तत्वेन निषेधे स्तु धीग्रहणम्। असावीत् अस्रावीत् अधावीत् पे किम्? असोष्ट असविष्ट अस्तोष्ट अधोषाता रुदुसुनीस्वव्या इत्युक्ते सुषुविव सुषविथ उभयत्र नित्येम् सोता सविता इति वेम्। सुश्रोथेति नेमसुमिति नियमेन स्वजटशेत्यस्य बाधितत्वात् नेम्। रुदुसुनीस्वव्या इत्युक्ते अदावीत् अदौषीत् दुदुविव दुद्रुव इति नेमसुमिति नियमात् नेम्। जगमिथ जगन्थेति स्वजटशेति वेम्॥ ६२३॥

गमिष्यति जिगमिषति जिगमिषु' मे तु गंस्यते ग्रामस्तेन। मम् आत्मनेपद मर्हतीति मार्ह'। समो गम्यृच्छेत्यादिना आत्मनेपदविधानात् सञ्जिगमिष सञ्जिगसु। मार्हात् सेष वा इत्येके सङ्गंस्यते सङ्गमिष्यति अस्पदिति लृदित्त्वात् झयमशेति सौ वद्धोऽकिदिति वृद्धी वा असासीत् असासीत्॥ ६२४॥

[७२] स्वप्नौ ग ये।

असाप्सीत् असाप्सीत् अस्वपत्। ङ्यक् ठौढाणौ

[७३] स्कन्दिरौ गति।

६२५। विस्कभ्ना-निर्विसुनिर्दुःस्वपः षो, निनिर्वि स्फुर स्फुल प्राणि-घ-निपरिनिर्व्यभ्यनु स्यन्दो। के ठौस्योरणौ च,

विस्कभ्ना—स्वप ६।, स १।, प १।, नि निर् स्तु
ये।

विस्कभ्नातेर्व-वर्ज-व्यादिपूर्वस्य स्वपश्च।

पूर्वं स्फुर-स्फुलो: परि-वि-स्कन्दते: अप्राणिघ न्दी तेश्च स्याद्वा। परिष्कन्दति परिस्कन्दति।

[७४] तॄ प्लवन तरणयो:।

६२६। ऋतो णु: कित् ठ्याम्।

ऋत ६।, ण. १।, कित्-ठ्याम् ७।।

तेरतु:।

---

वे स्कभ्ना विश्च सुश्च निर् च दुर् च तेभ्य' स्वप् निर्गतो वो यस्य स निर्वश्चासौ विसुनिर्दु स्वप् चेति निर्वविसुनिर्दु स्वप्विस्कभ्नाश्च निर्वविसुनिः स्वप् च तयो। निश्च निर् च विश्च ते तेभ्य स्फुरस्फुलौ निनिर्विस्फुरस्फुलौ परि विभ्यां स्कन्द परिविस्कन्द निश्च परिश्च निर् च विश्च अभिश्च अनुश्च ते तेभ्य स्यन्द निपरिनिर्व्यभ्यनुस्यन्द अप्राणी घो यस्य सोऽप्राणिघ. स चासौ निपरि निर्व्यभ्यनुस्यन्द चेति अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द निर्निर्विस्फुरस्फुलौ च परि-विस्कन्दश्च अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द चेति। तस्य। यथा विष्कभ्नाति। निस्फुलति निष्फुलति, एव निर्विभ्याम्। परिस्कन्दति परिष्कन्दति विष्कन्दति विस्कन्दति निष्यन्दते निस्यन्दते घृत चरतीत्यर्थ। एव परि निर् वि अभि अनुभ्य। अप्राणिघ कि निस्यन्दते हस्ती मदं मुञ्चतीत्यर्थ: ॥ ६२५ ॥

किच्चासौ ठी चेति कित् ठी तस्याम्। तेरतुरिति अनेन गुणे तॄफलेति अकारस्य एकार, खिलोपश्च। दीर्घ ऋत. इति किम्? चक्रतु ॥ ६२६ ॥

## तृतीयः पादः—भवत् ।

[ ७९ ] एधङ वृद्धौ ।

एधते । ऐधिष्ट । एधाञ्चक्रे ।

[ ८० ] ददङ दाने ।

[ ५७९ [ अग्रग्रदद इत्युक्तेः, दददे ।

[ ८१ ] ष्वक्क ङ सर्पणे ।

[ ५६९ ] अ-ष्ठ्यै ष्वक्क इत्युक्तेः, ष्वक्कते । षष्वक्के ।

[ ८२ ] ऋज ङ आर्ज्जवे । आनृजे ।

[ ८३ ] तिजङ क्षमा-निशानयोः ।

तितिक्षते ।

[ ८४ ] ष्वन्जौ ङ सङ्गे ।

निष्वजते ।

६३३ । निविपरिस्वन्जस्तु सुमादेः सः षोऽमि वा ।

नि सुमादे ६।, स ६।, ष १।, अमि ७।, वा ।१।।

न्यष्वङ्क्त । न्यस्वङ्क्त । सस्वजे सस्वञ्जे ।

---

ष्वक्कङ । अष्ठ्यै ष्वक्क इत्युक्तेर्न दन्त्यादेश । ष्वक्कते षष्वक्के षिष्वक्किषते षाष्वक्क्यते । चन्द्रभुजन्तु इम पञ्चमस्वरित्य मत्वा षुक्कत षुषुक्के षुषुक्किषते षुषुक्क्यते इत्युदाहरति । निष्वजत इति सन्जदन्शेति नलोपे गीक इति षत्वम् ॥ ६३२ ॥

सुम् आदिर्यस्य स सुमादि । स्वन्जश्च सुश्च सुमादिश्चेति । निविपरिभ्य स्वन्जस्तु सुमादि निविपरिस्वन्जस्तु सुमादि सुमादिश्च गीक इति सूत्रे पठिता अमागम सिवसह निविपरिभ्य परेषामेषा सस्य ष स्यात् वा अम् व्यवधाने । न्यष्वङ्क्त न्यस्वङ्क्त व्यष्टावीत् व्यस्तावीत् पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् न्यषेवीत् न्यसेवीत् व्यषहत व्यसहत । सस्वजे इत्यादि स्यात् व्यपिदिति कित् पचे न लोप. ॥६३३॥

## ६३४। सत्स्वञ्जोष्ठ्यां नाखेः।

सद्-स्वञ्जी ६॥, ष्या ७, न ।१।, अखे ६।।

खिवर्जस्थानयोः सः षो न स्यात् ष्याम्। विषस्वजे विषस्वञ्जे।

[ ८५ ] त्रपूषङ् लज्जायाम्।

अत्रपिष्ट अत्रप्त। त्रेपे।

[ ८६ ] जभङ् जम्भने।

## ६३५। नुण् जभोऽचि।

नुण् ।१।, जभ ६।, अचि ७।।

अजम्भिष्ट।

[ ८७ ] ष्टुभङ् स्तम्भे।

विष्टोभते व्यष्टोभिष्ट।

[ ८८ ] पणङ् व्यवहारे स्तुतौ च।

[ ५९१ ] काम ऋतेत्यायः। पणायते।

## ६३६। सनः पमे धोर्वा त्वायात्।

सन ५।, पमे १॥, धोः ६।, वा ।१।, तु ।१।, आयात् ५।।

पणायति पणायते। अपणायिष्ट अपणिष्ट। पणायाञ्चक्रे पेणे।

---

सद् च स्वन्ज च सद्स्वन्जौ तयोः न खिरखिः तस्य अखे। विषसाद विषस्वजे। ष्यामिति किं विषाष्वज्यते इत्यादौ दशस्यादेरित्युक्तेरुभयोः षत्वम् ॥६३४॥

जभो नुण् स्यात् अचि परे प्रकरणबलात् जभङ् जम्भे इत्यस्यात्मनेपद एवेति बोध्यम्। जम्भते अजम्भिष्ट जम्भन जम्भ' जभि जभ जभने इत्यस्य परस्मैपदिनस्तु जभति जभिष्यति जभनम्। विष्टोभते गौक इति षत्वं व्यष्टोभिष्टेति अभ्यपीति षत्वम् ॥६३५॥

सन सनन्तात् मूलधातौ सम्बन्धिनी पमे स्याताम्। यथा बुभूषति पिपर्द्धिषते चिकीर्षति चिकीर्षते आयात्तु वा पणायति पणायते आयस्यजानुबन्धेनेवेष्टसिद्धौ

६३७। विच्छास्तुतिपणो वाय: ।

विच्छ—अस्तुतिपण. ५।, वा ।१।, आय' १।।

पणायते पणते ।

एवं [ ८६ ] पन ङीडे ।

[ ६० ] कमुङ कान्तौ ।

कामयते । [ ६१३ ] आन्तत्वादङ् ।

६३८। अड्युङ: स्वोऽनग्लोपि शास्वृदित: ।

अडि ७।, उङ ६।, स्व १।, अनग्लोपि—शासु ऋदित. ६। ।

अनग्लोपिन: शासोऋ्कारेतश्चान्यस्य उङ: स्व: स्यात् ञे: परे अडि परे ।

---

आयात् तु वेति क्रत इङ्वेरप्राप्तयैं फलवत् कर्त्तरि परस्मैपदार्थमफलवत् कर्त्तर्यात्मनेपदार्थञ्च ॥६३६॥

न स्तुतिरस्तुति. अस्तुतौ पण् अस्तुति पण् विच्छश्च अस्तुति पण् चेति तस्मात् । विच्छश्च गतावित्यस्मादस्तुत्यर्थमूर्द्धन्यान्तपणश्चाय स्याद्वा । स्तुतिवर्ज्जनात् व्यवहारार्थे इत्यर्थ । व्यवहारश्च क्रयविक्रयस्वरूप । विच्छायति विच्छायते विच्छति पणायते पणायति पणते । एव पन इति पनङीङे इति दन्त्यान्तस्यापि कम ऋत इत्याये पनायति पनायते इत्यादिकं बोध्यमित्यर्थ ॥६३७॥

ञे परोऽङ् ञ्यङ् तस्मिन् । अकी लोप अग्लोप सोऽस्यास्तीति अग्लोपी । ऋत् इत् यस्य स ऋदित् । अग्लोपी च शासुश्च ऋदिच्चेति न अग्लोपिशास्वृदित् अनग्लोपिशास्वृदित् तस्य । यथा अपीपठत् अदीदवत् अबूबुधत् । अग्लोप्यादिस्तु । कुटल्कदाहे मन्त्रे इत्यदन्तात् चुर्य्योञिरिति ञौ हसात्लोप इत्यकारलोपे अग्लोपित्वात् न ह्रस्व अचुकुटत् अशशासत् अडुढौकत् । श्रीणृ अपसारणे इत्यस्य ऋदनुबन्धो ज्ञापयति ञ्यडि आदौ ह्रस्व' पश्चात् द्वित्वमिति । अन्यथा आदौ द्वित्वे दीर्घोङी-ऽभावादेव ह्रस्वासम्भवे ऋदनुबन्धो व्यर्थ' स्यादिति । मा भवान् श्रीणिणत् अतएव मा भवान् अटिटत् इट मा भवान् इटिटत् उष मा भवान् उषिषत् इत्यादीना ञौ आदौ इद्धौ गुणे वा क्रते अनेन ह्रस्वे पश्चात् द्वित्वे मायोगादमागमाभावे तद्रूपेण स्थितिरिति । अत्र केवलेऽङि दीर्घोङीऽभावादेव ञे: परेऽङीति लब्धे ञिग्रहण

६३९। खेः सन्वद्घौ घोर्ह्रसादेर्घश्च, ल्यनेकाचोस्त्वकलिहलेर्वा।

खे ६।, सन्वत् ।१।, घौ ७।, घो ६।, ह्रसादे ६।, घ १।, च ।१।, ल्यनेकाचो ६॥, तु ।१।, अकलिहले. ६।, वा ।१।।

अनग्लोपिनः खेर्घौ ध्वचरे परे सन्वत् कार्य्यं स्यात् अग्ङि, घोश्च खेर्ह्रसादेः घंः स्यात्, कलि-हलि-वर्जस्य लेः अनेकाचश्च सन्वत् वा स्यात्।

---

सामान्यार्थम्। तेन वादितवन्त प्रयोजितवान् अवीवदद्वीणा गायनेन राजा इत्यत्र पुनर्ञौ कृते पूर्वञेर्लोपेऽपि अनग्लोपित्वात् ह्रस्व स्यादेव इति काशीश्वर। वस्तुतस्तु केञ्लेऽङि उक्तौ परत्वानुवृत्तौ अचकमत इत्यत्रापि सन्वत् भावाद्यापत्ति ॥६३८॥

सन् इव सन्वत् लिश्च अनेकाच्च तौ तयो कलिश्च हलिश्चेति कलिहलि न कलिहलि अकलिहलि तस्य। अनग्लोपि शास्वृदितो अनुवृत्तावपि खे परस्य शास्वृदितोर्लघोरसम्भवात् चकाद्दङ् दीप्तावित्यस्य ऋदितोऽपि अनेकाच्त्वात् विशेषेण विकल्पेन बाधितत्वात् अनग्लोपिन इत्येव व्याख्यातम्। ञे परेऽङिपरे सति अनग्लोपिधातोः खे' सन्वत् कार्य्यं स्यात् खे परे लघुधात्वचरे सति। तत्रैव यदि ह्रसादेर्धातो खिर्लघुर्भवति तदा तस्य दीर्घश्च स्यात्। कलिहलिवर्जस्य लेरनेकाच्धातोश्च खेर्लघुधात्वचरे परे सन्वत् कार्य्यं स्याद्वा। सन्वद्भावपक्षे ह्रसादिसम्बन्धी खिर्यदि लघुर्भवति तदा घं: स्यादित्यर्थ। अत्र केवलस्य लघोरसम्भवात् लघुयुक्तस्य ह्रसो ग्रहणम्। यथा अपीपचत् असीषिचत् अमुमूहत् अचीकरत्। अग्लोपिनस्तु कलत्वागतिसख्ययोः। अचकलत्। घौ ध्वचरे किं अररम्भत्। ह्रसादे किं औन्दिदत्। लघो खे किं ध्वन अदिध्वनत्। लेस्तु कृतयति अचीकृतत् अचकृतत्। कविमाख्यातवान् अचीकवत् अचकवत् पटुमाख्यातवान् अपीपटत् अपपटत् कलिहलिवर्जनात् लेरग्लोपित्वेऽपि स्यात्। इवर्णौ वर्णाभ्यामन्यस्य लिङ्गस्य सन्वद्भावो नास्तीति जौमराः। कलिहल्योस्तु अचकलत् अजहलत्। अनेकाचस्तु अचीचकासत् अचचकासत् ॥६३९॥

## ६४०। ख्यस्येत् सनि।

ख्यस्य ६।, इत् ।१।, सनि ७।।

खेरवर्णस्य इत् स्यात् सनि परे।

## ६४१। ञेर्लोपोऽनाल्विष्ण्वाय्यान्तेत्न्वामिम्शिति।

ञ ६।, लोप १।, अनालु—शिति ७।।

आलु इष्णु आय्य अन्त इत्नु आम् इम् शित् एभ्योऽन्यत्र ञेर्लोपः स्यात्।

अचीकमत अचकमत। कामयाञ्चक्रे चकमे।

[८१ [ अयङ गतौ।

आयिढ्वम् आयिध्वम् आयिद्वम्। अयाञ्चक्रे।

एव [ ८२ ] दयङ् गतौ।

[ ८३ ] स्फायीङ् वृद्धौ।

अस्फायिष्ट।

---

खेर ख्य तस्य ॥६४०॥

आलुश्च इष्णुश्च आय्यश्च अन्तश्च इत्नुश्च आम् च इम् च शिच्च ते। न विद्यन्ते ते यत्र स तस्मिन् यथा भाव्यते बोध्यते इत्यादिषु यकि ञेर्लोपे त्यलोपे त्यलक्षण-मिति न्यायात् वृद्धिगुणौ स्त एव। आल्वादौ तु स्पृहयालु कारयिष्णु. स्पृहयाय्य मण्डयन्त स्तनयित्नु कारयामास कारयिष्यति कारयति अचीकमतेति कम ञिङ् वृद्धि कामि इत्यस्य धातुसञ्ज्ञा तन् अङ् ञ्यङुङ् इति ह्रस्वे कमि इत्यस्य द्वित्वे मि इत्यस्य लोपे कस्य च खे सन्वदिति सन्वत्त्वात् ख्यस्येन् सनीति अकारस्य इकारे घोस्य खेर्ह्रसादेर्घश्चेति तस्य दीर्घेऽनेन ञेर्लोप अचकमतेति वारे इति ञिङोऽप्राप्तिपक्षे ञिश्रीत्यङ्। अयङ् गतौ अयधातौ परे निर्दुः प्रतिवर्जस्य उपसर्गस्य रेफो लः स्यादिति वक्तव्यम्। प्लायते पलायते पल्ययते निर्दुः प्रतीनान्तु निरयते दुरयते प्रत्ययते। आयिढ्वमिति अयध्व ध्वा सि. इम् धे स लोपो वा टोठौढौव इति धस्य ढो वा पक्षे तद्रूपस्थिति। सस्य स्थितिपक्षे झप्झसोरिति सस्य दः। अयाञ्चक्रे विंजादीत्याम्। अस्फायिष्टेति वेमूदितीम् वा ॥६४१॥

६४२ । य्वोर्लोपो ह्रस्यये ।

य्वो ६॥, लोप १।, ह्रसि ७।, अयि ७।।

अस्फास्त ।

[ ८४ ] ओ प्यायी ङ् वृद्धौ ।

६४३ । पदस्तनीण् घे प्याय ताय दीप पूर जन बुधस्तु वा ।

पद ५।, तनि ७।, इण्।१।, घे ७।, प्याय—बुध ५।, तु।१।, वा।१।

पदो घेऽर्थे इण् स्यात् तनि, प्यायादेस्तु वा ।

६४४ । इणस्तन् लोप्यः ।

इण ५।, तन्।१।, लोप्य १।।

अप्यायि अप्यायिष्ट अप्यास्त ।

६४५ । प्यायः पीर्यङ् ठ्योः ।

प्याय ६।, पी' १।, यङ्-ठ्यो' ७॥ ।

पिप्ये ।

[ ८५ ] तायृङ् सन्तानपालनयोगतौ च ।

अतायि अतायिष्ट ।

---

य च व च य्वौ तयो । वकारो दन्त्य. । अस्फास्तेति अनिम् पक्षे यलोप । एव स्फाता प्याता । दिव्यु यङ्लुकि जटो अप्राप्तिपक्षे देदेति देदित ह्रसि कि स्फायते सेवते अयि कि पलाय्यते दीव्यति ॥ ६४२ ॥

णिलात् वृद्धि । अपादि अप्यायि अप्यायिष्ट अतायि अतायिष्ट अदीपि अदीपिष्ट अपूरि अपूरिष्ट अजनि अजनिष्ट अबोधि अबुद्ध ॥ ६४३ ॥

इण इति सामान्यार्थं तेन रतनोर्यणिणावित्यनेन कृतादिणोऽपि तनो लोप । ननु तन्स्थाने इण् करणेनैवेष्टसिद्धौ तनि परे इण कृत्वा तल्लोपविधानगौरव कथमिति चेत् सत्य तत्स्थाने इणि कृते ध्या सेरापत्ति. तनस्थाने जातत्वेन ङित्वात् अबोधीत्यादौ गुणाभावश्च ॥ ६४४ ॥

[ ९६ ] शलङ चलने ।

अशलिढ्वम् अशलिध्वम् अशलिढ्म् ।

[ ९७ ] षेवृङ सेवने ।

परिषेवते, न्यषेविष्ट, विषिषेवे । प्रतिसेवते ।

[ ९८ ] काशृङ दीप्तौ ।

काशामास चकाशे ।

एव [ ९९ ] कासृङ कुशब्दे ।

[ १०० ] ईहङ चेष्टायाम् ।

ऐहिढ्वम् ऐहिध्वम् ऐहिढ्म् ।

[ १०१ ] रु ङ वधे गत्याम् ।

अरविष्ट अरोष्ट । रुरुविषे ।

[ १०२ ] दे ङ पालने ।

६४६ । द्वे देङो दिगिष्ठ्याम् ।

द्वे ६।, देङ ६।, दिगि: १।, ठ्याम् ७। ।

द्विरुक्तस्य देङो दिगि: स्यात् ठ्याम् । दिग्ये ।

[ १०३ ] ओडीङ नभोगतौ ।

अडयिष्ट ।

---

पिप्ये शृध्वोरिति य । यङि पेपीयते यङ्लुकि पेपेति पेपीत अशलिढ्ढ मित्यादि धे सलोपपक्षे ढौ वा पक्षे सस्य द । परिषेवते परिनिविसेविति षत्वम् । न्यषेविष्टेति अभ्यपीति षत्वम् । विषिषेवे इति दशस्यादेरिति षत्वम् । एभ्य किं प्रतिसेवते काशामासेति दरिद्राकाशेत्यामि असोऽनुप्रयोगे वक्तव्यात् आत्मनेपदस्य परस्मैपदादेश । ऐहिढ्ढमित्यादि सुगमम् अरोष्टेति रुदुसुनीस्त्वठ्या इति इमोऽभावपक्षे लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बलवानिति न्यायादादौ गुणे ह्रस्वपरत्वाभावान्न सिलोप । रुरुविषे इति रुङ् ठ्या. से द्वित्वं रुदुञ्नोरिति ठीवर्जनात् नेमसुमिति नियमेन नित्यमिम् शृध्वोरित्युव् ॥ ६४५ ॥

[ १०४ ] गुपङ गोपन कुत्सनयोः। जुगुप्सते।

[ १०५ ] मानङ विचारे। मीमांसते।

[ १०६ ] बधङ निन्दायाम्। बीभत्सते।

[ १०७ ] द्युतङ ऌ दीप्तौ।

[ ५६५ ] ग्रासुलिद्युदिति ङः तेनैव पम्। अद्युतत् अद्योतिष्ट।

६४७। द्युत्स्वाप्योः खेर्जिः।

द्युत् स्वाप्यो ६॥, खि ६।, जि १।।

दिद्युते। [ १०८ ] वृतङ वृ‌ऌ वर्त्तने।

६४८। वृद्भ्यो नेम् पे स्यसनोर्वा त्वमे।

वृद्भ्य ५॥, न ।१।, इम् ।१।, पे ७।, स्य सनी ६॥, वा ।१।, तु ।१।, अमे ७।।

वृतादेः स्य-सनोः इम् न स्यात् पे, मादन्यत्र तु वा। अत-एव पम्। वर्त्स्यति। मे तु, वर्त्तिष्यते।

[ १०९ ] स्यन्दूङ वृ‌ऌ क्षरणे।

निष्यन्दते निस्यन्दते घृतम्। निस्यन्दते हस्तीति प्राणि-धत्वान्न षः।

---

सुगमम्। जुगुप्सत इति कित्तिजेति सन्। बीभत्सत इति बधस्तेनैव सनि खेर्डौं च भभान्तस्येति बस्य भ। द्युतङ् तेनैव पमिति द्युतादेष्टीपेङ्विधानसाम-र्थ्यात् व्यामुभयपदमित्यर्थः॥ ६४६॥

द्युतौ अन्तस्पस्य खेर्जिः स्यात्। दिद्युते दिद्योतिषते देद्युत्यते सुष्वापयिषति असूषुपत्॥ ६४७॥

बहुवचन गणार्थम्। अतएव पमिति वृतादेरात्मनेपदिनः परस्मैपदे स्यसनौ इम् निषेधादेव स्यसनोरुभयपदित्वमित्यर्थः। यथा वर्त्स्यति विवृत्सति। मे तु वर्त्तिष्यते विवर्त्तिषते। मादन्यत्र तु विवर्त्तिषा विवृत्सा विवर्त्तिषु विवृत्सु विवर्त्तिषितव्य विवृत्सितव्यम्। वृतादिश्च वृतुर्वृधु शृधु. स्यन्दूः कृपू पञ्च वृतादयः। निष्यन्दते घृतमिति अप्राणिधत्वात् षत्व वा। निस्यन्दते हस्तीति प्राणि-धत्वान्न षः॥ ६४८॥

[ ११० ] क्रपूङ् व्कृ कल्पने ।

६४९ । क्रपः क्लृपोऽक्रपादौ ।

क्रप ६।, क्लृप' १', अक्रपादौ ७। ।

क्रपः स्थाने क्लृपः स्यात् न तु क्रपादौ । कल्पते ।

६५० । नेम् पे ङ्या: ।

नं ।१।, इम् ।१।, पे ७।, ङ्या ६। ।

क्रपो ङ्या इम् न स्यात् पे । अतएव पम् । कल्प्ता ।
किं कल्पिता कल्प्ता, कल्प्स्यति, मे तु कल्पिष्यते कल्प्स्यते ।

[ १११ ] व्यथ षङ् पीडायाम् ।

६५१ । व्यथ-ग्रह-ज्या-वय-व्यध-वश-व्यच-प्रच्छ-व्रश्च-भ्रस्ज स्वप वच-यजादेः खेर्जिःष्ठ्याम् ।

व्यथ यजादि ६।, खे ष्याम् ७। ।

एषां खेर्जिः स्यात् ष्याम् । विव्यथे ।

[ ११२ ] ञि त्वरा षङ् स्यदे ।

अत्वरिढ्वम् अत्वरिध्वम् अत्वरिढ्वम् ।

इति भवत् पादः ।

---

क्रप स्थाने क्लृप स्यात् न तु क्रपादौ पदे साध्ये । क्रपादिर्यथा क्रपा क्रपाच क्रपश्च कर्पटश्च क्रप क्रपी ॥ ६४९ ॥

अत्रापि अतएव परस्मैपदमिति बोध्यम् । ततश्च द्युतादिष्यामुभयपदित्व हतादिर्द्युताद्यन्तर्गणत्वात् ष्या स्यसनीश्च उभयपदित्वम् । क्रपस्तु द्युतादित्वात् ष्या हतादित्वात् स्यसनी नेम् पे ङ्या इत्यनेन ङ्याच्च उभयपदित्वम् । अन्यत्र सर्वं एवात्मनेपदिन ॥ ६५० ॥

व्यथश्च ग्रहश्च ज्याश्च वयश्च व्यधश्च वशश्च व्यचश्च प्रच्छश्च व्रश्चश्च भ्रस्जश्च स्वपश्च वचश्च यजादिश्चेति तस्य । एषा खेर्जि स्यात् ठ्याम् । विव्यथे जयाह जिज्यौ उवाय वय इह वेञ स्थाने वयादेश । तस्य च वेञ स्थाने जातत्वेनैव णौ

## चतुर्थपादः—मिश्रः ।

---

[ ११३ ] पतॢज गत्यैश्वर्य्ययोः ।

६५२ । वच्यस्य-श्वि-पतां वोचस्थ-श्व पप्ता ङे ।

वचि अस्य श्वि-पता ६॥, वोच अस्थ श्व पप्ता १॥, ङे ७। ।

एषामेते क्रमात् स्युर्ङे । प्रश्पप्तत् ।

[११४] एजट्ट वम उद्गिरणे । वेमतुः ववमतुः वेमिथ ववमिथ ।

[ ११५ ] भ्रमु जण चलने ।

( ५८४ ) क्रमक्लमेति श्यन् वा । भ्रम्यति भ्रमति । भ्रेमतुः बभ्रमतु ।

[ ११६ ] षह जङ मर्षणे ।

व्यषहत व्यसहत । [६०६] वेमसहेतीम् वा । परिषहिता ।

---

सिद्धे इह ग्रहण ठ्या नवे प्रच्छामिति जि निषेधस्य बाधनार्थम् । विव्याध उवाश्च विव्याच पप्रच्छ वव्रश्च बभ्रज्ज । ग्रहप्रच्छव्रश्चभ्रस्जा खिर्जौ क्रते ऋभखयेति ऋकारस्याकारे ज़े फलाभावेऽपीह ग्रहण ग्रहादिगणार्थम् । तेन गृह्यते पृच्छ्यते वृश्च्यते भृज्ज्यते इत्यादिषु ग्रहस्यपाद्यैरिति जि । सुष्वाप उवाच स्वप साहचर्य्यात् वच इह अदादिको ग्राह्य इति जौमरा । इयाज । ठ्या कि वा व्यथते । यजादिषु "यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिस्तथा । वदिर्वसिश्च श्वयतिश्चैते नव यजादय । अवरिद्धमित्यादि धे सलोपपक्षे ढौ वा पक्षे सस्य द ॥ ६५१ ॥

इति भवत्पाद. ।

---

वचिश्च अस्श्च श्विश्च पत् च ते तेषा वोच च अस्थश्च श्वश्च पप्तश्च ते । वचिरिति अदादिक एव भौवादिकात् ङप्राप्त्यभावात् अस इति दिवादिक एव अन्यस्मात् ङप्राप्त्यभावात् । प्रश्पप्तदिति लृदित्वात् ङे अनेन पप्तादेश. गदनदेति षत्वम् । एवम् अवोचत् आस्थत् अश्वत् । वेमतुरित्यादि जृवमभ्रमेति एत्व खिलोपश्च वा व्यषहत इत्यादि निविपरिस्सनूनेति वा षत्वम् ॥ ६५२ ॥

६५३। सहवहोऽदो ढि।

सह वह ६।, अत् ।१।, ओ ।१।, ढि ७।।

सहवहोः अकार ओ स्यात् ढे परे। निसोढ़ा। [ ५७२ ] ओत्वान्न षः।

[ ११७ ] षद ल्ट जौ विषादे गतौ।

निषीदति। न्यषदत्। निषसाद। प्रतेस्तु। प्रतिसीदति।

[ ११८ ] शद ल्ट जौ शाते।

६५४। शदोऽपि मम्।

शद ५।, अपि ७।, मम् १।।

शीयते। अशदत्। [ ११९ ] फण मिण गतौ।

फेणतुः पफणतुः, फेणिथ पफणिथ।

[ १२० राजृ अ ण दीप्तौ।

रेजतुः रराजतुः, रेजे रराजे। [ ५७९ ] विधिबलादातोऽप्येत्वम्।

एवं [ १२१ ] टुभ्राशृ ङ ण दीप्तौ।

भ्राश्यते भ्राशते। भ्रेशे बभ्राशे।

एव [ १२२ ] टुभ्लाशृ ङ ण भासि।

[ १२३ ] ष्वन ण शब्दे।

विष्वणति अवष्वणति मासम्। व्यष्वणत् विष्वेणतुः विषष्वणतुः। विस्वनति वीणा निस्वनति अन्नम्। [ ५७२ ] अन्नव्यवेत्युक्तेन षः।

[ १२४ ] खनुञविदारे।

[ २३० ] हनगमेत्युङ् लोपः, चख्नतुः चख्ने।

---

सुगमम्। निसोढेति वेमुसहेत्यनिम् पचे होढोभाविति हस्य ढेऽनेनाकारस्य ओत्वे ढभात्तथोरिति तस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रौति ढस्य लोपे ओत्वान्न सत्वम्। एव सोढव्यः। वोढा वोढव्य.॥ ६५३॥

## ६५५ । खन सन-जनां ङा झसि, ये तु वा ।

खन-सन जना ६।॥, डा ।१।, झसि ७, ये ७, तु ।१।, वा ।१। ।

खायात् खन्यात् । [१२५] चायृ ञ निशाने अर्च्चे ।

अचायीत् [६४२] यो र्लोप इति । अचासीत् ।

[१२६] लषञ स्पृहायाम् । लष्यति लषति ।

[१२७] गुहू ञ संवरणे ।

## ६६५ । गुहो णोरूः ।

गुह ६।, णी ६।, ऊ ।१। ।

गुहो णोरूः स्यात् । गूहति गूहते । अगूहीत् अघुक्षत् ।

---

शदन्त्जौ शाते इत्यस्मादव्विषये न स्यात् यस्या विभक्तौ शप् सम्भवति तत्रा-त्मनेपदमित्यर्थ । शीयते शीयेत अशीयत । अपि किम् ? अशदत् शशाद शत्ता शद्यात् शत्स्यति असत्स्यत् । फेणतुरित्यादि फणादित्वात् एत्व खिलोपश्च वा । विधिवलादित्यादि राजृ भ्राजृ प्रभृतीना फणादिपाठबलादाकारस्यापि एत्व खिलोपश्च इत्यर्थ । भाश्यत इति क्रमक्लमेति श्यन् वा । भे शे इति फणादित्वात् खिलोपादि-र्वा । अवष्वणतीति विधानबलादकारात् परस्यापि षत्वम् ॥ ६५४ ॥

खनश्च सनश्च जन च ते तेषाम् । एषां डा स्यात् झसि यि तु वा । खातः सात' जात । खायते खन्यते सायते सन्यते जायते जन्यते । अत्र वाशब्दस्य व्यवस्थावाचित्वात् पिति झसि परे न स्यादिति बोध्यम् । तेन यङ्लुकि चङ्क्न्ति चङ्कसि ससन्ति ससंसि जञ्जन्ति जञ्जसि एव वाशब्दस्यानुक्तसमुच्चयार्थत्वात् तनोतेर्डा स्यात् वा यकि इति बोध्यम् । तायते तन्यते । तथा च तदूरीकृत्य कृतिभि-र्वाचस्पत्य प्रतायते इति माघ । अचायीदिति वेमूदिदितीम् वा पचे यो- र्लोप इति यलोप । लष्यतीति क्रमक्लमेति श्यन् वा ॥ ६५५ ॥

कृति गुह्य' गोह्यमित्युदाहरता अचि परे एवाय विधिरिति ज्ञापितम् । गूहति गूहिता गोढा गूहिष्यति घोच्यति अतएव गुहो ङिदचीति जौमरा. । अघुक्षदिति वेमूदिदित्यत्र वाशब्दस्य गुह. सेरिमोविलक्षणविकल्पार्थत्वात् से. अनिम् पक्षे सिरेव न स्यात् अनिमत्वात् सगेव ॥ ६५६ ॥

## ६५७। गुह-दुह-दिह-लिहां टीमदन्त्ये न सिः सक् वा।

गुह दुह दिह-लिहा ६॥, टीमदन्त्ये ७।, न ।१।, सि १।, सक् ।१।, वा ।१।।

**एषां टीमदन्त्ये परे सिर्न स्यात्, सक् च वा स्यात्। अगूढ़ अधुक्षत।**

## ६५८। सकोऽल्लोपोऽच्यव्वे।

सक ६।, अत्-लोप १।, अचि ७।, अव्वे ७।।

**सकोऽकारस्य लोपः स्यात् अव्वे अचि परे।**

**अगूहिषि अधुक्षि। अगुह्वहि अधुक्षावहि। दन्त्ये किम्, अगूहिषहि अधुक्षामहि। अव्वे किम्। अगूहिषत अधुक्षन्त।**

व्या म टीम टीमि दन्त्यष्टीमदन्त्य तस्मिन्। लिहामिति परत्र जनिष्यमाणत्वेन सम्बन्धी य सि. स न स्यात् एतेन सेर्जाततुल्यत्वाभिधानात् अपो न प्रसङ्ग सक्कृतौ विप्रतिषेधो यद्बाधित तद्बाधितमेवेति न्यायादित्यर्थः। अन्यथा पञ्चस्यैव सिद्धे षड्‌ग्रा वैयर्थ्यं स्यात्। सिर्नित्य निषिध्यते हशषेति विहित सक् च विभाष्यते इत्यर्थ। अगूढेति इम् पक्षे सेर्निषेधे अरवसाभावादिमोऽभावे होढ़ोभाविति ढभात्तर्थोरिति ढ्रोढ्रि र्घश्चेति। अधुक्षतेति तनि अनिम् पक्षे सकि हस्य ढे झभान्त-स्येति गस्य वे षढो क से इति ढस्य के क्षित्वादिति षत्वम्। एवम् अदुग्ध अधुक्षत अदिग्ध अधिक्षत। अलीढ़ अलिक्षत। एवञ्च थास् ध्वम् वहिष्वपि यथा-दर्शनमुदाहर्त्तव्यम्। किञ्च प्रत्ययत्वेन दन्त्यवकारादेर्वहे. प्राप्त्यर्थमेव दन्त्योपादान कृतम् अन्यथा टीमतौ इत्युक्तावपीष्टसिद्धे ॥ ६५७ ॥

अतो लोप. अल्लोप न व्वम् अव्व तस्मिन्। अधुक्षि इति गुह इ सक् होढोभौ झभान्तस्येति गस्य घ षढो क से षत्वम् अनेन सकोऽल्लोप. इम् पक्षे अगुहिषीति बोध्यम्। अगुह्वहीति गुह वहि सेर्निषेधे सकोऽप्यप्राप्तिपक्षे वकारस्य दन्त्यत्वेन झसत्वाभावात् होढ़ोभाविति न ढ। पक्षे सकि आत्तिमभवीति आत्वे अधुक्षावहीति दन्त्य किम् अधुक्षामहीति दन्त्यपरत्वाभावात् गुहदुहदिहलिहा इत्यस्याप्राप्तौ वेमत्वादनिम् पक्षे हशषोऽनिमिक्षुड इत्यनेन सकि आत्तिमभवीति आत्वम्। इम् पक्षे तु अगुहिषहि इति बोध्यम्। अव्वे कि गुह अन्त हशष इति

[१२८] हृञ हृत्याम् ।

६५९ । इगुङ्मंठीस्यनिम् किङ्गमस्तु वा ।

इगुङ् ५।, मठीसि ।१।, अनिम् ।१।, कित् ।१।, गम ५।, तु ।१।, वा ।१।।

इगुङ ऋवर्णान्ताच्च परा मे स्थिता अनिम् ठी सिश्च कित् स्यात्, गमस्तु वा । अहृत अहृषाताम् । हृषीष्ट ।

[१२९] टुडु भृञ भरणे । बभृव ।

[१३०] दान ञ आर्जवे छिदि । दीदांसति दीदांसते ।

एवं [१३१] शान ञ तेजे । शीशांसति शीशांसते ।

[१३२] भजी ञ भागसेवयोः । भजते । भेजे भेजिथ बभक्थ।

[ १३३ ] श्रि ञ सेवायाम् ।

[ ६१३ ] ञिश्रीत्यङ् अशिश्रियत् श्रयिता ।

[ १३४ ] रन्जी ञ रागे ।

६६० । रन्जोऽपषकानासघ्णिनौ नलोपो ञौ तु मृगरमणे ।

रन्ज ६।, अप् षक-अन-अस्-घ्णिनौ ७।, न लोप १।, ञौ ७।, तु ।१।, मृगरमणे७। ।

रजति रजते । ररजतुः ररञ्जतुः ।

---

सकि लोपोऽतोऽदेचोरित्यकारलोपे अर्वुद्धन्त इति । अकारेऽवश्यलोपव्येऽपि अब्वे इति कृतं ज्ञापयति । लोपोऽस्योमाङ्गोरिति लोपोऽतोऽदेचोरिति इसाल्लोपो-ऽशित्ययोरित्येतेभ्योऽन्यसूत्रेण अकारलोपस्य स्थानिवत्त्वं नास्तीति तेन लुगङ्गोऽप-इत्यादिना अकारलोपे स्थानिवत्त्वानङ्गीकारात् मान्तोऽदनत इत्यत्र प्रवृत्तौ दुहते दिहते लिहते इत्यादि सिद्धमिति ॥६५८॥

इक् उङ्-यस्य स इगुङ् । इगुङ् च ऋश्च इगुङृ तस्मात् । ठी च सिश्चेति मे ठीसि मठीसि । नास्ति इम् यस्य सोऽनिम् इति मठीसेर्विशेषणम् । यथा ञधौ भिदिर् भित्सीष्ट अभित्त बुध्यौङ भुत्सीष्ट अबुद्ध सृज्यौङ् सृक्षीष्ट असृष्ट डुकृञ् कृषीष्ट अकृत । कॄञगि हिंसे स्यात् यृदॄदु रित्यनिम् पचे कीर्षीष्ट अकीर्ष्ट । गमस्तु सङ्गसीष्ट सङ्गंसीष्ट समगत समगस्त । बभूवेति नेमसुमिति इम् निषेधः । दीदा-

[ १३५ ] त्विषौञ कान्तौ । अत्विचत् त्विचौष्ट ।

[ १३६ ] यजै ञौ देवार्च्चा दान सङ्गतौ ।

[ ६५१ ] व्यथग्रहेति जिः, इयाज ।

## ६६१ । ग्रहस्वपाद्योः कङिक्तितोर्जिः ।

ग्रह स्वपाद्यो ६॥, कङित् कितो ७॥, जि १॥ ।

ग्रहादेः किति ङिति, स्वपादेः, किति, जिः स्यात् ।

ईजतुः ईजु, इयजिथ इयष्ठ ।

[ १३७ ] डु वपौ ञे मुण्ड वीजोत्योः । प्रखुवाप ।

( १३८ ) वहैञौ प्रापणे ।

प्रखवाक्षीत्, अवोढ । उवाह ऊहे ।

---

सतीति कित्तिजेति सन् खेर्डौ च । मेजियेति सृजदृशीति वेम् अयितेति नेमे का-जेत्यत अविवर्जनादिम् ॥६५८॥

अप् च यकश्च अस् च घ्णिनिश्चेति तस्मिन् । यथा रजति रजकी रजन रज रागी । घ्णिनिरिति कृतप्रत्ययो वक्तव्य । अस्य घकारो जस्य गकारार्थ पूर्व-णकारो वृद्ध्यर्थ । शेष इकार उच्चारणार्थ । रञ्जनमिति अप्रन्तस्यैव । ररजतुरिति स्यात् ठ्रपिदिति कित् पचे न लोप । अत्विचदिति त्विषौ जभासे हृशवेति सन् । त्विचौष्टेति इगुड्रिति कित्वान्न गुण ॥५६०॥

ग्रहश्च स्वपश्च ग्रहस्वपौ तावादी ययोस्तौ ग्रहस्वपादी तयो । कङावितौ यस्य स कङित् कङिच्च किच्च कङिक्तितौ तयो । स्वपग्रहाद्यो. किदखोर्जिरिति कृतेऽपीष्टसिद्धौ कङिक्तितोरिति गौरवम् कथमिति चेन्न । अनिम्सनोऽगुणत्वे ज्याप्रभृतीनाम् अनिमा सनि जेरापत्ते । वस्तुतस्तु सनोऽगुणत्वे ग्रहस्वपप्रच्छामिति नियमादन्येषामनिमि सनि जे प्रसङ्गाभाव । गौरव स्पष्टार्थम् । व्यथग्रहेति सूत्रे पठिता ग्रहादय स्वपादयश्च । यथा गृह्यते गृह्णाति जीन जीनाति विध्यते विध्यति उश्यते उशन्ति । व्यचस्तु तदोपादान व्या खेर्जि प्राप्त्यर्थमेव । व्यचोजिस्त्रिणदसीति अनेन ञित् णित् अस् एभ्योऽन्यत्र जि कर्त्तव्यत्वात् । पृच्छ्यते पृच्छति वृश्च्यते वृश्चति भृज्ज्यते भृज्जति सुप्यते उच्यते इज्यते इत्यादि ईजतुरिति व्यथग्रहेति खेर्जि. अनेन मूलधातोर्जि. । इयजिथ सृजदृशीति वेम् अनिम् पचे प्रच्छाजेति

[१३९] वेञ् स्यूतौ।

### ६६२। ठ्यां न वे-प्रच्छाम्।

ठ्या ७।, न ।१।, वे प्रच्छाम् ६।।।।

वेञ् प्रच्छि व्रश्चि भ्रस्जोना जिर्न स्यात् ठ्याम्। ववौ ववतुः।

### ६६३। वेञो वय् वा।

वेञ ६।, वय् ।१।, वा ।१।।

वेञो वय् स्याद्वा ठ्याम्। उवाय ऊयतुः।

### ६६४। य वः किति।

य ।१।, व १।, किति ७।।

वेञो यस्य व. स्याद्वा ठ्यां किति। ऊवतुः।

[१४०] व्येञ् वृतौ।

### ६६५। ना व्येष्ठ्याम्।

न ।१।, आ ।१।, व्ये ६।, ठ्याम् ७।।

व्येञ आ न स्यात् ठ्याम्। विव्याय।

---

नड्। प्रष्टुवाप इति गदनदेति णत्वम्। प्रण्यवाचीदिति ह्रोढोभौ व्रजवदेति ञि गदनदेति णत्वम्। अवोढेति वह तन् सि औदित्वान्नेम् भससादिति सेर्लोप हस्य ढत्वे सहवह इति ओत्वे ढभात्तथोरिति तस्य धत्वे ष्टुभिरिति धस्य ढत्वे ढ्रोर्द्वीति ढलोप ॥६६१॥

वेश्च प्रच्छश्च वेप्रच्छ। प्रच्छ इति बहुवचन गणार्थम्। तेन व्ययग्रहेति सूत्रे पच्छादयो ग्रहादिगणसमाप्तिपर्यन्ता इत्यर्थ। अत आह। प्रच्छि व्रश्चि भ्रस्जो-नामिति। वेञ् निषेधेऽपि तदादेशस्य वयोञिर्न निषेध। अन्यथा तत्र वयो ग्रहणस्य वैयर्थ्यं स्यात्। ववौ इति वेञ एचोऽशित्या णप् व्ययग्रहेति प्राप्तः खेर्जिर्न स्यात् नवातो डो। ववतुरिति व्ययग्रहेति खेर्ग्रहस्वपाद्योरिति मूलधातो र्जिर्नाभूत् ॥६६२॥

उवाय व्ययग्रहेति खेर्जि ऊयतुरिति व्ययग्रहेति खेर्ग्रहस्वपाद्योरिति मूल-धातोश्च जिः ॥ ६६३ ॥

वेञो यस्यासम्भवात् तदादेशस्य वय एव यकारस्येत्यर्थः ॥ ६६४ ॥

## ६६६ । जिं वान्त्यः किति ।

जि २।, वा ।१।, अन्त्य १।, किति ७। ।

ह्वेर्य्योऽन्त्यो भागो जि वा प्राप्नोति व्याम् किति । विव्यतुः विव्ययतुः विव्ययिथ ।

[१४१] ह्वेञ् स्पर्द्धाया शब्दे च । अह्वत् अह्वत अह्वास्त ।

## ६६७ । ह्वो ह्वे र्जिः ।

ह्व ६।, ह्वे ६।, जि १। ।

ह्वेर्ह्वो जिः स्यात् । जुहाव जुहुवतुः । [१४२] ए वसौ निवासे ।

## ६६८ । स त् स्यरे ।

स ।६।, त् ।१।, सि ७।, अरे ७। ।

सस्य त स्यात् अरे से परे । अवात्सीत् अवात्ताम्, उवास ऊषतुः ।

[१४३] वदै वाचि । अच्छवदति । [५७४] व्रजवदेति व्रिः ।

अवादीत् उवाद ऊदतुः ।

[१४४] टु ओश्वि इर् गतिवृद्ध्योः ।

[५६५] शासुलिद्‌द्युदिति ङः वा । अश्वत् ।

[६१३] जिश्वोत्यङ् वा । अशिश्वियत् अश्वयीत् ।

---

व्येञ्वेतावित्यस्य ठ्रा एचोऽसित्येति आकारो न स्यात् । ठ्रामित्युपादान किर्तीत्यस्य वाशब्दस्य च निवृत्त्यर्थम् । विव्याय ञ्णित्यन्ते जुडतोरिति वृद्धि ॥ ६६५ ॥

विव्यतुरिति मूलधातोर्जौ कृते स्नुध्वोरिति य । पक्षे विव्ययतुरिति यलायेति अयादेश । उभयत्र खेर्नित्य जि. । विव्ययियेति स्रजदृशेत्यत्र व्येवर्जनान्नित्यमिम् । अह्वदिति वक्तव्यसत्त्वेति ङ उस्येचोत्याकारलोप । अह्वत अह्वास्तेति लिव्ध्यस्तु से इति ङो वा ॥ ६६६ ॥

जे पुनरुपादानात् ठ्रा किति वा इति त्रयाणा नानुवृत्ति । ह्वयतेर्यत्र द्वित्वं तत्र खेर्मूलधातोश्च द्विर्निमित्तको जि स्यात् इत्यर्थ. । यथा जुहाव अजूहवत् जुहूयति जोहूयते ॥ ६६७ ॥

स इति लुप्तषष्ठ्येक त इति लुप्तप्रथमैकम् । अरे कि आसमे । अवात्तामिति

## ६६९ । श्वेर्जिर्वा यङ्ठ्योर्ञ्यङ्सनोः ।

श्वे ६।, जि १।, वा ।१।, यङ्ठ्री ७॥, ञ्यङ्-सनी ७॥ ।

श्वे र्जिर्वा स्यात् यङि ठ्याम् ञे परे ऋङि सनि च ।

शुशाव शिश्वाय शुशुवतुः शिश्वियतुः । श्वयिता । शूयात् ।

इति मिश्रपादः ।

इति भ्वाद्यध्यायः ।

---

अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ सस्य तकारे पश्चात् सेर्लोपे जौसरा अप्येवम् । न च आदौ सेर्लोपेऽपि त्यलोपे त्यलक्षणमिति न्यायात् हृद्विवत् सस्य तकारेण भाव्यमिति वाच्यम् । तस्य लोपे सति त्यस्वरूपेण विहित यत् कार्य्यं तदेव स्यात् न तु त्यस्य वर्णविहितमिति । तेन सौ विहितत्वात् हृद्वि सकारे विहितत्वात् सस्य तकारो न स्यात् इति । अन्यथा अनुड इत्यादौ सेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् सकारे परे झभान्तस्येत्यादिना वकारस्य भकारापत्ति । रामानन्दकाशी-श्वरौ तु प्रत्ययलोपस्य बलवत्वादादौ सेर्लोपे सकारपरत्वाभावात् सस्य तकाराभावे आवास्तामित्याहतु । तद्वेयम् । एकन्यायाद्बलवता सिलोपेन न्यायाद्बलवत्तरस्य तकारादेशस्य बाधितुमशक्यत्वात् अच्छवदतीति व्याच्छस्येति समास । अवादीदिति व्रजवदेति त्रि । अश्वदिति टुओश्वि शासलिदद्युदिति ङ वच्यस्श्वि पतामिति स्व । अश्वयीदिति पक्षे ठ्या सौ नेमेकाजेयत्व श्विवर्जनादिम् सेर्लोपे व्रजवदित्यत्र श्विवर्जनात् न त्रि ॥ ६६८ ॥

यङ् च ठी च यङ्ठ्रौ तयो । ऋङ् च सन् च ऋङ्सनौ । ञे परावङ्-सनौ तयो । अत्र वाशब्दस्य व्यवस्थावाचित्वात् श्वेर्यङादौ द्वयोरेव जि स्यात् पक्षे द्वयोरेव जिर्न स्यात् इत्यर्थ । अन्यथा अशूशवदित्यादौ प्रागच्कार्य्यादिति नियमा-दादौ द्वित्वे खेर्जिर्न स्यात् । यथा शुशाव शिश्वाय इत्यादि एव शोशूयते शेश्वीयते अशूशवत् अशिश्वयत् शुशावयिषति श्वयितेति नेमेकाजेत्यत्र श्विवर्जनादिम् । शूयादिति ग्रहस्वपाद्योरिति जि घोंऽञ्यरे इति दीर्घ. ॥ ६६९ ॥

इति मिश्रपाद । इति भ्वाद्यध्याय: ।

---

# प्रथमः पादः—अदादिः।

[ १४५ ] अद्लृ भक्षणे।

## ६७०। लुगद्भ्योऽपः।

लुक् ।१।, अद्भ्य. ५।।।, अप ६।।

अदादेः परस्य अपो लुक् स्यात्। अत्ति।

## ६७१। हुझसो हेर्धिः।

हु झस ५।, है. ६।, धि १।।

होर्झसाच परस्य हेर्धिः स्यात्। अद्धि।

## ६७२। हसादभ्यां दिसेर्लोपामौ।

हस्-अदभ्या ५।।, दि सी ६।, लोपामौ १।।।

हसात् परयोर्दिस्योर्लोपः स्यात् अदः परयोः अम् स्यात्। आदत् आद.।

---

बहुवचन गणार्थम्। वे शप्रे इत्यत्र अदादिवर्जनेनैवेष्टसिद्धौ अदादेः शप विधाय तत् लुक् करण कदाचित् अदादेः शप स्यिन्यर्थं तेन सर्वा एवाहनत् प्रथगिति चखडीत्यादि सिद्ध्यति। वस्तुतस्तु ञिष्विर् रुद रोदने तुर्नि वेगे इत्येताभ्या को भावादि ढे वीदुडोऽन्वित इत्यनेन गुणविकल्पे रोदित रुदित तेन तोरित तुरित तेन इत्यादि सिद्ध्यर्थम्। लुक् करणात् युत युवन्ति इत्यादौ न गुण ॥ ६७० ॥

यथा जुहुधि रुधिर्धौ ञ दन्वि अद्लो अद्धि। वशस्तु उड्ढि च अत्र शच्छ्राजेति षड् झप्झसोरिति षस्य ड.। धौ पिषस्ट पिण्ढि चकास्ट चकाद्धि इत्यादि। परत्वाद्विशेषत्वाच्च तातयादेशेनाय बाध्यते। तेन त्वम् अमृतमत्तादित्यादि ॥ ६७१ ॥

दिसेवित्येकवचन यथासङ्ख्या निरासाय दिसेरिति ध्या एव टास्तु सिव्यवधानादसम्भवः। यथा अलेट् अहन् अभुनक् अवट् अपिनट् इत्यादि ॥ ६७२ ॥

## ६७३। घस्लृदः सन् त्यल् घञि।

घस् लृ ।१।, अद ६।, सन् टी-अल् घञि ७।

अदो घस्लृ स्यात् सनि त्याम् अलि घञि च। (५६५) लित्त्वात् ङः। अघसत्।

## ६७४। ठ्यां वा।

ठ्या ७।, वा ।१।।

जघास आद। [ २३० ] हनगमेत्युङ् लोपः। जक्षतुः, आदतुः जघसिथ आदिथ। [१४६ प्सा ल भक्षणे। प्रणिप्साति।

## ६७५। द्विषविदातोऽनुस् वा।

द्विष विद आत ५।, अन् ।१।, उस् ।१।, वा ।१।।

द्वेष्टेर्वेत्तेरादन्ताच्च परोऽन् उस् स्याद्वा। अप्सुः अप्सान्।

[ १४७ ] वश ल कान्तौ। वष्टि। [ ६६१ ] ग्रहस्वपादेरिति जिः। उष्टः उशन्ति। अवट्। उवाश।

---

सन् च टी च अल् च घञ् चेति तस्मिन्। जिघत्सति अघसत् हनगमेत्यत्र ङवर्जनात् न उङ् लोप। प्रघस घास ॥ ६७३ ॥

अदो घस्लृ स्यात् वा ठ्याम्। जक्षतुरिति हनगमेत्युङ् लोपे झप्झसोरिति घस्य कत्वे शासवसघसेति षत्वम्। अत्र अद्लृ भक्षे लृघसौ पचे इति द्वाभ्यामेव आद जघास इत्यादि सिद्धावपि ठ्या वेति सूत्रविधान ज्ञापयति घसतेस्तस्यापि अद-तुल्यत्व स्यादिति। तेन सृजदृशेत्यत्र अदो वर्जनादेव घसौ वर्जने सिद्धे जघसिथेत्यत्र इमि विकल्पाभावे नेमुसुमिति नियमात् वसोऽरस्वेति नित्यमिम्। न च स्थानिवत्त्वादेव अदतुल्यत्वमिति वाच्यम्। धात्वादेशाना स्थानिवत्त्वानङ्गीकारात्। अन्यथा अजधातौ स्थाने जातस्य वीधातौ सेमत्वापत्ते। हनस्थाने जातस्य वधधातोरनिमत्वापत्तेश्च। प्रणिप्सातीति गदनदेति णत्वम् ॥ ६७४ ॥

अद्विषु अद्विषन् अविदु अविदन् उस्येचीत्याकारलोपे अप्सु अप्सान् अन् इति ध्या एव ट्यान्तु द्विष. सकारव्यवधानान्न प्रसङ्ग.। अद्विक्षन्। विदधातोस्त

[ १४८ ] हन् लौ हिंसागत्योः ।

६७६ । वनतनाद्यनिमां ञम्लोपो झस्-यप्यतिक्यणौ ।

वन-तनाद्यनिमा ६॥, ञम्लोप १।, झस् यपि ७।, अतिकि ७।, अणौ ७। ।

एषां ञम्लोपः स्यात् अणौ झसि यपि च, न तु तिकि । प्रणिहतः । [ १८९ ] हनो ङ्गो घ्नः । घ्नन्ति । प्रहण्वः प्रहन्वः प्रणम्मः प्रहन्मः ।

६७७। जह्येधि-शाधि हन्यस्ति-शास्ति हिना ।

जहि एधि शाधि ।१।, हनि अस्ति शास्ति ।६।, हिना ७। ।

एषां हियुक्तानां क्रमादेते स्युः । जहि ।

६७८ । हनो वधष्टौव्यलि टीमे तु वा ।

हन. ६।, वध १।, टौव्यलि ७।, टीमे ७।, तु ।१।, वा ।१। ।

हनो वधः स्यात् व्याम् व्यामलि च, टी-मे तु वा । अवधीत् ।

---

अनुस्सिद्धेरिति नित्यमुसि अवेदिषु अस्मासिषु । वष्टीति वश्लुस्थ्हि शङ्का-जीति षङ् । अवट् इति हसाद्यामिति दिस्योर्लोपे शङ्काजीति षङ् षोड फे ॥७५॥

नास्ति इम् यस्मात् सोऽनिम् । वनश्च तनादिश्च अनिम् चेति ते तेषाम् । ञमो लोप ञम्लोप । झसश्च यप् च झसयप् तस्मिन् । न तिक् अतिक् तस्मिन् । नास्ति णुर्यस्मिन् सोऽण तस्मिन् । वनश्याप्तौ । षत वति प्रवत्य । तत तति. प्रतत्य । चत. चति प्रचत्य । हतः हति. प्रहत्य । गत गति. प्रगत्य । झसि किं वन्यते इत्यादि । अणौ किं ववन्ति इत्यादि । अतिकि किं वन्तिरित्यादि । प्रहण्व इत्यादि वस्य प्रत्ययत्वात् दन्त्यत्वे झसत्वाभावात् ञमो लोपाभावे मवान्तहन इति वा णत्वम् ॥ ६७६ ॥

जहिश्च एधिश्च शाधिश्चेति । हनिश्च अस्तिश्च शास्तिश्चेति जहीति पक्षे तातङ्ङ्ऽपि हतात् ॥ ६७७ ॥

टी च ढी च अल् चेति तस्मिन् । ट्यादौ हन्तेः प्रयोगं निषिध्य वधहताविति

## ६७९। खेर्हो घो ञ्णिति च।

खे ५।, ह' ६।, घ १।, ञ्णिति ७।, च।१।,

**खेः परस्य हनो हस्य घः स्यात् ञिति णिति च।**

जघान, जघ्नतुः। हन्ता। बध्यात्। प्रहणिष्यति।

[१४९। द्युलभिसर्पणे।

## ६८०। रपिद्वस्युतोऽद्वेर्व्रिः।

र पित्-हसि ७।, उत ६।, अद्वे ६।, व्रि १।।

**अद्वेर्धोरुकारस्य व्रिः स्यात् पिति हसे रे।** द्यौति द्युतः द्युवन्ति। [१५०] यु ल मिश्रणे अमिश्रणे च। यौति यविता। [१५१] नु ल स्तुतौ। अनावीत् अनौषीत्। नुनुविव। [१५२] क्ष्णु ल तेजने। क्ष्णविता। [१५३] ष्णुल प्रस्नुत्याम्।

[५७९, स्नुक्रमोऽमे इतीम्। अस्नावीत्। [१५४] इन ल गतौ।

## ६८१। यिनोऽच्यणौ।

य।१।, इन. ६।, अचि ७।, अणौ ७।

**इनो यः स्यात् अणौ अचि। यन्ति।**

---

भौवादिक प्रयुज्यत इत्यर्थ.। तेन अबधीदित्यादौ बधधातोरौदित्वाभावादसौ-ऽरस्येतीम् हसादे' सेम इत्यव बधवर्जनान्न व्रि। एव बध्यात् बध्यास्ता बध टौमि तु आवधिष्ट आहत॥ ६७८॥

चकारादर्थद्वयम्। खेः परस्य हनो हस्य घ स्यादित्येकोऽर्थ। हनो हस्य घ स्यात् ञिति णिति च परे इत्यपरोऽर्थ। खे परस्य यथा जघनिथ जिघासति जङ्घन्यते। ञिति घातयति णिति अघानि घातक घात घात प्रहणिष्यतीति खस्खेन इति इभ् नादिहन्मीनेति णत्वम्॥ ६७९॥

रश्चासौ पिच्चासौ हस् चेति रपिद्धस् तस्मिन्। न द्वि अद्वि. तस्य। द्यौति रौति। अद्वि किं जुहोति। यवितेति नेमिकाजित्यत्र युवर्जनादिम्। अनावी-दित्यादि वेमूदितीम् नुनुविवेति अठ्या इत्युक्तेर्नित्यमिम्। क्ष्णवितेति नेमिकाजित्यत्र क्ष्णुवर्जनादिम्॥ ६८०॥

## ६८२ । गा ब्याम् ।

गा ।१।, ट्याम् ७। ।

इनो गा स्यात् ब्याम् । अगात् इयाय ।

## ६८३ । खेः कितिघः ।

खे ६।, किति ७।, घं १। ।

इनः खे घः स्यात् किति ब्याम् । ईयतुः ।

## ६८४ । अगेर्ढ्याम् ।

अगे ६।, ब्याम् ७। ।

अगेरिनो घः स्यात् किति ब्याम् । ईयात् । अगेः किम् ? अन्वियात् । [१५५] अधीक ल स्मरणे ।

## ६८५ । इन्वदिकः ।

इन् वत् ।१।, इक ६। ।

इन् इव इकः कार्य्यं स्यात् रूपञ्च तद्वत् ।

[ १५६ ] या ल गतौ । प्रणियाति ।

एवं [१५७] वा ल गमनहिंसयोः ।

[१५८] द्रा ल स्वप्ने पलायने च ।

[१५९] ख्या ल ख्यातौ कथने च । अख्यत् । [ १६० ] मा ल माने । प्रणिमाति । मेयात् ।

---

मुर्ध्नीरिति प्राप्तव्यस्य इयो बाधक अस्य नकारो भूस्थापिवेत्यादिषु विशेषज्ञापनाय ॥ ६८१ ॥

अगादिति भूस्थापिवेति सि लुक् ॥ ६८२ ॥

डिभूतादिनधातौ ढ्या अन्यत्र कितोऽसम्भवादेव ट्यामिति व्याख्यात ईयतुरिति यिनोऽचष्वाविति यकारेऽनेन खेर्घः ॥ ६८३ ॥

नियमोऽयं ढ्या किति अगेरिन एव दीर्घं न तु सगेरिपि । ईयात् । अगेः किम् अन्वियात् समियादित्यादौ घोऽच्य्यरे इत्यनेनापि न दीर्घं ॥ ६८४ ॥

अधील् स्मृत्यामिति अयं धातुः कातन्त्राद्यैरिकस्मरणे इति पठ्यते तन्मतमवलम्ब्य

[१६१] विद ल ज्ञाने।

**६८६। वेत्तेः कौपं ठौपं वा।**

वेत्ते ५।, कौप १।, ठौप १। वा ।१।।

विदः परस्य क्याः पस्य त्याः पं स्याद्वा।

वेद विदतुः विदुः, वेत्थ विदथुः विद, वेद विद्व विद्म। पक्षे सुगमम्।

**६८७। डाम् वा त्यां ग्यान्तु क्रनु।**

डाम् ।१।, वा ।१।, ठ्या ७।, ग्या ७।, तु १।, क्र ।१।, अनु ।१।।

वेत्तेः त्या डाम् वा स्यात् ग्यान्तु क्रञ एवानुप्रयोगः।

**६८८। तनुभ्यः शुप् रे घे।**

तनुभ्य ५।।।, शुप् ।१।, रे ७।, घे ७।।

विदाङ्करोतु वेत्तु।

**६८९। क्रञोऽङ्गणौ रे।**

क्रञ ६।, अत् ।१।, अणौ ७।, रे ७।।

क्रञोऽकार उ. स्यात् अणौ रे। विदाङ्कुरुताम्। वित्ताम् अविदुः अविदन्।

---

इक् इत्युक्तम्। अधिकग्रहणमन्यपूर्वस्य केवलस्य च प्रयोगनिरासार्थम्। यथा अध्येति अधीत. अधियन्ति अध्यगात् अधीयाय अधीयतुरित्यादि। अधीयादित्यादौ तु सह यँ घं इत्यनेनैव दीर्घ.। एवं गमिनिडीरित्यादावपि अधिजिगमिषति इति बोध्यम्। सखीतयो राघवयोरधीयन्निति भट्टौ। अधीयन्निति तु आतिदेशिकमनित्यमिति न्यायात् इन्वदिक् इत्यस्यानित्यत्वात् यिणोऽच्यणावित्यस्याप्राप्तौ शुभ्वोरिति इयि कृते सिद्धम्। प्रणियातीति सोद्दनवायेति णत्वम्। अस्यदिति वक्ष्यस्येति ङ ङसेचौत्यालोप। प्रणिमाति पतपददामेति णत्वम्। मेयादिति दामागै इति ङ॥ ६८५॥

स्थानिवदादेश इति न्यायात् ठौपस्य कौपतुल्य[illegible]म। न डाम् न वा वेत्थेत्यादाविम्॥ ६८६॥

ङित्वान्न गुण क्रनु इत्यनेन अस्भुवोरनुप्रयोग

तनोति सनोति॥ ६८८॥

## ६९०। घ्यां सौ र वा दधोः।

घ्या ७।, सौ ७।, र ।१।, वा ।१।, द-धो ६॥ ।

दधो. रेफः स्यात् वा सौ घ्याम्। अवेः अवेत्, अवित्तम् अवित्त। विदाम्बभूव विवेद। [१६२] अस ल भुवि।

## ६९१। लोपोऽस्त्यसोर्ङिद्रसो रघ्याम्।

लोप १।, अस्ति-अ सो ६॥, ङित र सो ७॥, अघ्याम् ७। ।

अस्तेरकारस्य ङिति रे, सस्य च से, लोपः स्यात्, न तु घ्याम्। स्तः सन्ति, असि, एधि, आसीत् आस्ताम् ।

---

अन् उ इत्युभय लुप्तप्रथमैकम्। विदाकुरुतामिति विद ता डामि क्नोऽनु न्योगे गुपि गुणे अकारस्य उ । रामानन्दकाशीश्वरौ तु क्नोऽकारस्य गुणाव्यवहितस्यैव सम्भवादव्यवहितेऽपि स्यादित्याहतु । रामतर्कवागीशो न किमप्याह। केचित्तु अणौ परे रे परे यस्मात् परोऽगुर्भवति तस्मिन् रे परे क्नोऽकार उ स्यादित्याहु । वस्तुतस्तु तथा वक्तव्ये पुम सन् खप्यम्परे इतिवत् क्नोऽणुपरे रे इत्येवाटदिष्यत्। किञ्च नास्ति णयस्य स्थाने सोऽगु तस्मिन् अणाविति रे इत्यस्य ऽर्थप्रसङ्गत्। गुणो गुणाभावादत गुदेव अगुणौ र इत्यर्थ । अविदन्नित्यादि ... दिति उस् वा ॥ ६८९ ॥

अवेरिति शपो लुकि हसाङ्ग्रामिति सेर्लोपे त्यलोपे त्यलक्षणमिति दकारस्य ... विसर्गे । एव रुधिर्धौञ् अरुणरित्यादि एवञ्च गृधिर्युं इत्यस्य यङ् लुकि घ्या सो जरीगृध इत्यस्मात् हसाङ्ग्रामिति सेर्लोपे विराममाश्रित्य भभान्तस्येति गस्य ... त्यलोपे त्यलक्षणमिति न्यायात् गुणे अजरीगर्ध इत्यस्य धकारस्यानेन रेफे ढ्रोढ्रौति पूर्वरेफस्य लोपे तत्पूर्वस्य दीर्घे रेफस्य विसर्गे अजरीघा रीणो रिणिरणि च कृते अजरिघा अजर्घा । एव वृञ् अवरीवा अवरिवा अवर्वा घोऽनित इति दीर्घे तर्द अताता नर्द अनाना स्पर्द्ध अपास्था पचे दधोरेफाभावे तु अवेत् अरुणत् अजरीघत् अवरीवत् अतातत् अपास्तत् इत्यादि ॥ ६९० ॥

अश्च स च असौ अस्तेरसौ अस्त्यसौ तयो । ङिच्चासौ रश्चेति ङिद्र ङिद्रश्च स च ङिद्रसौ तयो स इत्यनुकारान्तग्रहणात् सि से स्व इति त्रयाणां ग्रहण तेन व्यतिसे व्यतिसे व्यतिस्व इत्युभयत्र ङिद्रपरत्वादकारस्य सकारपरत्वात् सस्य च

६६२ । भूरवे ।

भ्र ११ अवे ७१ ।

अस्तेर्भूः स्यात् अवे । अभूत् ।

६६३ । प्रादुर्गीकः सः षोऽच्ये ।

प्रादुर गि इक ५', स ६।, ष १।, अच्-ये ७। ।

प्रादु षन्ति प्रादुःष्यात् निषन्ति । [१६३] मृजू ल ष शुद्धौ ।

६६४ । मृजोऽकङिति त्रि र्वा त्वच्यणौ ।

मृज ६।, अकङिति ७।, त्रि १।, वा ।१।, तु ।१।, अचि ७।, अणौ ७। ।

अकङिति मृजो त्रिः स्यात् अणौ अचि तु वा । मार्ष्टि मृष्ट', मार्जन्ति मृजन्ति । [१६४] वचौ वाचि ।

[६५२] वचस्य खिपतामिति वोच । अवोचत् । उवाच ऊचतु' ।

लोप । ङिद्रस्योरिति लिपिकरप्रमादपाठ । किञ्च अरेर्भू आदेशेनैव बाधितत्वात् ङित्ग्रहणेनैवेष्टसिद्धौरग्रहणं ज्ञापयति कदाचित् अरेर्भू आदेशो न स्यादिति। तेन लावण्य उत्पाद्य इवास यत्न इति कालिदास । एधौति जह्यधीति एधिरादेश अच्या ि आसीत् आस्ता आसन् ॥ ६६१ ॥

विषयसप्तम्या से सम्भावनाया भूरादेश । ठ्यामनुप्रयोगादन्यत्राप्यस्ते भूभाव केचित् नेच्छन्तीति धातुप्रदीप । अतएव लावण्य उत्पाद्य इवास यत्न इति कालिदास । केचित्तु असअदीप्तावित्यस्य रूपम् । आस दिदीपे इत्यर्थ इत्याहु । अभूदिति भूस्थापिवेति सेर्लुक् ॥ ६६२ ॥

गेरिक् गीक् । प्रादुश्च गीक् च प्रादुर्गीक् तस्मात् । प्रादुरो गेरिकश्च परस्य अस्ते. सस्य ष स्यादचि ये च परे । अच्ये कि प्रादु.स्यः निस्य. ॥ ६६३ ॥

कङावितौ यस्य स कङित् न कङित् अकङित् तस्मिन् । मृज इति मृजलूष शुद्धौ मृजुषकितु भूषे चेति द्वयोर्ग्रहणम् । मार्ष्टि मार्जयति मार्जति क्विति मृज्यते ङिति मृष्ट । मृजोऽणौ त्रिरित्युक्तोऽपीष्टसिद्धौ अकङितीति कथमिति चेत् न सनि अनिम्पचे ग्रनानिमीति गुणनिषेधे मिमार्चतीत्यादौ वृद्धेरप्रसङ्गात् वचौ

[१६५] रुदिर् ल घ रोदने।

६९५। रुद्भ्योऽयो हस्रस्येम्।

रुद्भ्य ५॥, अय ६।, हस् रस्य ६।, इम् ।१।।

रुदादेः परस्य अयस्य हसस्य रस्य इम् स्यात्।

रोदिति रुदितः। अय' कि? रुद्यात्।

६९६। दिस्योरम् वा।

दि स्यो ६॥, अम् ।१।, वा ।१।।

रुदादेः परयोः दिस्यो' अम् स्यात् वा। अरोदत् अरोदीत्, अरोद' अरोदीः। [१६६] ञि ष्वपौ घ लु स्वप्ने।

विस्वपिति। [६२५] सवत्वात् न षः विसुष्वाप दु'षुषुपतुः।

[६२५] निर्वत्त्वात् षः [१६७] अन ्घ लु स्वप्ने।

प्राणिति प्रानिति [१६८] श्वस घ लु प्राणने।

श्वसिति अश्वसीत्। [५७६] चणादित्वात् न ञिः।

[१६९] जक्ष च लु घभक्षहासयो'। जक्षिति।

---

इति वच्ची वाचीत्यस्मादन्यस्तीर्न प्रयोग इति वक्तव्यम्। अवोचत् इति वक्ष्यसेति ङ वच्यस्थ्यीति वोच्॥ ६९४॥

बहुवचन गणार्थं गणस्तु रुदादयस्तीत्यवोक्त। न य अय तस्य अय। हस् चासौ रश्चेति हस्र तस्य। अय कि रुद्यात्। हस कि रुदन्ति। अप्राप्तौ विधिरय रोदिष्यतीत्यादौ वसोऽरस्येति इम् स्यादेव॥ ६९५॥

रुदादे परौ दिरिति द्या एव व्यान्तु सिव्यवधानादसम्भव। दिसाहचर्य्यात् सिरपि द्या एव। अन्यथा द्या क्रतस्य सिप्रत्ययस्यापि प्रसज्जेत्। अरोददित्यादि। पचे रुदादयस्तीत्यनेन ईम्। व्यान्तु इरित्त्वात् वा ङ अरुदत् अरोदीत् अरुद अरोदी.। विसुष्वापेत्यत्र दश्वस्यादेरिति नियमात् खेर्न षत्वम्। खिनिमित्तक मूलधातो. षत्व क्विलादित्यनेन स्यादेवेति गोयीचन्द्रादय। दु.षुपुपतुरित्यत्र बलवत्त्वादादौ ञौ क्रते षत्वे च क्रते द्वित्वमिति। प्राणिति इत्यत्र वालननिंसेति णत्व वा॥ ६९६॥

## ६९७। अन्तोऽह्नेः।

अन्त ६।, अत् ।१।, ह्ने ५।।

ह्नेः परस्यान्तोऽत्स्यात्। जह्वति। [५६३] अनुसूसिद्वेः रिति, अजहुः। [१७०] जाग्टच्च लु जागरणे।

## ६९८। गुरुस्यठ्याम्।

गु १।, ङसि ७।, अठ्याम् ७।।

ह्नेरुसि परे गुः स्यात् न तु ठ्याम्। अजागरुः अजागः। अजागरीत्। जागरामास जजागार।

## ६९९। जाग्रोऽणव्वीण्ङिति क्कसुकाने तु वा।

जाग्र ६। अ णप्-वि इण् ङिति ७।, क्कसु-काने ७।, तु ।१।, वा ।१।।

जागर्त्तेर्गुः स्यात् न तु णपि वौ इणि ङिति च, क्कसौ काने तु वा। जजागरतुः। '१७१ दरिद्रा च्च लु दुर्गत्याम्।

## ७००। दरिद्रो ङिर्हस्रेऽणौ ह्यागृभ्योस्तु वा।

दरिद्र ६।, ङि १।, हसरे ७।, अणौ ७।, ह्यागृभ्यो ६॥, तु ।१।, वा ।१।।

दरिद्रातेर्ङिः स्यात् अणौ हसे रे परे, ह्यागृभ्योस्तु वा। दरिद्रितः।

---

अन्त इति षष्ठ्येक हसन्तनिर्देशाद्दन्ति अन्तु इत्यादीनामपि। जह्वति जह्वतु ददति ददतु। चिकीर्षन्तीत्यादौ णपी लोपे स्थानिवत्त्वान्नान्तोऽत्॥ ६९७॥

अजागरुरिति जबादित्वात् ह्निसञ्ज्ञाया अनुसूसिद्वेरिति अन ङसि अनेन गुण। ठ्यान्तु जुहुवु। अजाग इत्यादौ गुणे सेर्लोपे रेफस्य विसर्गः। अजागरी-दित्यत्र अञिञ्चिजागुरित्युक्तेर्न त्रि॥ ६९८॥

जाग्र इत्यत्र सूत्रत्वात् ऋतौ ङो डुर्न स्यात्। णप् च विश्च इण् च ङिच्चेति णव्वीण् ङित् न णव् वीण् ङित् अणव्वीण् ङित् तस्मिन्। ञौ जागरयति घञि जागर णमि जागर जागर यकि जागर्य्यते यपि प्रजागर्य्य ढौपे जागर्य्यात्। णबादौ तु जजागार जागर्टवि अजागारि अजागारिषीष्ट जाग्टत. जाग्रति। क्कसौ जजा-गर्वान् जजाग्टवान्। काने जजागराण. जजाग्राणः॥ ६९९॥

७०१ । आद्योरालोप्योऽणौ हसे त्वाद्‌ः ।

आ द्यो ६॥, आ ।१।, लोप्य १।, अणौ ७।, हसे ७।, तु ।१।, ई ।१।, अद ६।।

आ इत्यस्य द्वेश्च आ लोप्यः स्यात् अणौ हसे तु दावर्जं मो स्यात् । दरिद्रति ।

७०२ । दरिद्र आलोपोऽसनकानेऽरे ष्यान्तु वा ।

दरिद्र ६।, आलोप १।, अ-सन अक अने ७।, अरे ७।, ष्यां ७।, तु ।१।, वा ।१।।

दरिद्र आलोपः स्यात् अरे, न तु सनि अके अने च,ष्यान्तु वा । अदरिद्रीत् अदरिद्रासीत् दरिद्रामास ददरिद्र । ददरिद्रौ इति केचित् । दरिद्र्यात् । [१७२] चकास्ट च तु दौम्रो । [६७१] हुझसोर्हेर्धिः चकाधि । [६४] झप्झसोरिति सस्य दः । चकाद्धि ।

७०३ । ष्यां दौ त सः ।

ष्या ७।, दौ ७।, त ।१।, स ६।।

ष्यां दौ परे मस्य त स्यात् । अचकात् ।

---

दरिद्रित, दरिद्रिय । हसि किं दरिद्रति । अणौ किं दरिद्राति । हाग्भ्योस्तु जह्ति जहीत विभित विभीत ॥ ७०० ॥

ई इत्यनुवर्त्तते तेन यङि आख्यायते इत्यादौ न प्रसङ्गः । यथा क्रीणन्ति क्रीणते जहति मिमते ददति ददते दधति दधते दरिद्रति । हसे तु क्रीणीते जिहीते मिमीते अणौ किं क्रीणाति जहाति । दावर्जनात् दत्ते धत्ते ॥ ७०१ ॥

सन् च अकश्च अनश्चेति सनकान न सनकानम् असनकान तस्मिन् । न नेऽर तस्मिन् । दरिद्र्यात् दरिद्रणीयम् अदरिद्रीत् पक्षे यमरमेति इम्सनौ । एवम् अदरिद्रि अदरिद्रायि । ददरिद्र इति खपि अन्तरङ्गत्वादादौ आकारलोपे आदन्तलाभावात् न डौ । जौमरास्तु डौ आदेश बलवन्त मत्वा ददरिद्रौ इत्युदाहरन्ति । दरिद्रामासेति दरिद्राकाश्चेति वाम् । सनादौ तु दिदरिद्रासति दरिद्रायक दरिद्राणम् । चकाद्धीति हेर्धौ झप्झसोरिति सस्य द. पक्षे धे सलोपो दा चकाधि ॥ ७०२ ॥

सुगमम् ॥ ७०३ ॥

## ७०४ । सौ वा ।

सौ ७।, वा ।१। ।

अचकात् अचकाः । [१७३ शास च्लु शासने ।

## ७०५ । शासुङिद्वस्ङेऽणौ क्नौ त्वाशासश्च ।

शास उङ् ।१।, इत् ।१।, हस्ङे ७।, अणौ ७।, क्नौ ७।, तु ।१।, आशास ६।, च ।१। ।

**शास्तेरुङ इत्यादणौ हसे ङे च, क्नौ तु शास आशासश्च । शिष्टः शाधि अशिषत् ।**

[१७४ चक्ष ङ ल वदे । चष्टे ।

---

सस्य त स्यादा ध्या सौ परे । अचकात् अचका ॥७०४॥

शास उङ् शासुङ् हस् च ङश्चेति हसुङ तस्मिन् । क्नौ त्वाशासश्चेति ग्रहणात् शासु इति शासच्लु शासने इत्यस्यैव ग्रहण तेन आशासु लङ इत्यस्य आशास्ते । शासु यथा शिष्टः शिष्यते शेशिष्यते । क्नौ तु मितशौ आशौ । शिष्ट इति आकारस्य इकारः शासवसघसेति षत्वम् । शाधीति हिसहितस्य शाध्यादेश । अशिषदिति शासलिद्द्युदिति ङ ॥ ७०५ ॥

चक्षिङ् तृतीयस्वरानुबन्धोऽयमिति प्राञ्चः । अस्य इकार उच्चारणार्थ इति केचित् छन्दसि नुणागमार्थ इति केचित् । वेदेषूच्चारणभेदार्थ इति केचित् । वह वस्तु तृतीयस्वरानुबन्धो लिपिकरभ्रमकारित एव किन्तु चतुर्थस्वरानुबन्धोऽय निष्ठाया इन् निषेधार्थं । तेन वर्जनार्थे ख्याञ् क्शाञादेशयोरप्राप्तौ आचष्ट वर्जनमित्याहुः । वस्तुतस्तु अस्येदनुबन्धो गणकृता नित्यत्वज्ञापनाय । तेन वचोऽपि परुषाक्षर न च पदेषु सञ्चते इति शाकुन्तले । पथि यदि विपये वा यत्र यास. कदाचिन्न हि तरुणि रुदीते धिक् पराधीनवृत्तिरिति नैषधे । सन्त. शृणुध्वं हृदये कुरुध्व-मुत्क्षिप्य बाहू परिवारयामीति कण्ठाभरणे । इत्यादौ परस्मैपदिन आत्मनेपदम् । ताले. शिञ्जद्वलयसुभगैर्नर्त्तित. कान्तया मे इति मेघदूते इत्यादावात्मनेपदिन. शतृप्रत्यय. । न विश्वसेत् पूर्वविरोधितस्येति पञ्चतन्त्रे । आश्वसेयुर्निशाचरा इति भट्टौ । अदादेः श्नप्स्विति रित्यादि । चष्ट इति स्कादेः सौ लोप. इति कलोपः ।

७०६ । चच्चः क्साञ् ख्याञ् ऽरेऽत्यागोससने ।

चच ६।, क्साञ्-ख्याञ् ।१।, अरे ७।, अत्यागोससने ७। ।

चच्च' क्साञ् ख्याञ् स्यादरे न तु वर्जने उसि असि अने च। अक्सासीत् अक्सास्त, अख्यत् अख्यत। त्यागे तु समचचिष्ट।

७०७। ठ्यां वा ।

ठ्या ७।, वा ।१। ।

चक्सौ चक्से, चख्यौ चख्ये चचक्षे ।

[१७५] ईड ङ ल स्तुतौ। ईट्टे।

७०८। सध्वो रस्येम् जनोड़ीशः ।

स ध्व ६।, रस्य ६।, इम् ।१।, जन ईड ईश ५। ।

एभ्यः परस्य सस्य ध्वस्य च रस्य इम् स्यात्। ईडिषे ईडिध्वे। [१७६] आस ङ ल उपवेशने।

आस्ते। [५८२ विंजादौत्याम् आसाञ्चक्रे।

[१७७' वस ङ ल आच्छादने। वसिता वस्ता।

[१७८] निसि ङ ल चुम्बने। प्रणिंस्ते प्रनिंस्ते।

---

चच क्साञ्। क्साञ् च ख्याञ् च तत् न रीऽर तस्मिन्। त्यागश्च उस् च अस् च अनश्चेति त्यागोससन न त्यागोससनम् अत्यागोससन तस्मिन्। वर्जनेऽर्थे उसादौ प्रत्यये विषये च न स्यादित्यर्थ। अरे इति विषयसप्तमी। तेन विभक्त्युत्पत्ते पूर्व क्साञ्ख्याञौ। तयोर्ञानुबन्धत्वादुभयपदमिति क्साञ् इति तालव्यमध्य इति पाणिनिक्रमदीश्वरौ। दन्त्यमध्य इति केचित्। तत्र षत्वाभावस्तु दन्त्यवदादेशविधानसामर्थ्यात्। अक्सासीत् इति यमरमेति इम्सनौ। अक्सास्तेति एकाजादत्वात् नेम्। अख्यदिति वत्यसेति ङ उसेचौत्यालोप उसादौ तु अचु. तचचा. विचचण ॥ ७०६ ॥

चच क्साञ् ख्याञ् च स्याद्वा ठ्याम्। विषयसप्तमीयम्। तेन आदावादेशे ञानुबन्धत्वादुभयपदम्। चक्सौ चक्से चख्यौ चख्ये चचक्षे। ईट्टे इति ग्रपी लुक् झप्भ सोरिति डस्य टत्वे ष्टुभिरिति तस्य टत्वम् ॥ ७०७ ॥

[१७९] षू ङ ल प्रसवे। सूते।

७०९। सूतेर्न गु र्याम्।

सूते ६।, न ।१।, गु १।, र्याम् ७।।

सुवै। [१७३] वेमूदितीम् वा। असविष्ट असोष्ट।

[१८०] शी ङ् ल शयने।

७१०। शीङो रे गुः।

शीङ ६।, रे ७।, गु १।।

शेते शयाते।

७११। मान्तो रम् विदस्तु वा।

मान्त ६।, रम् ।१।, विद ५। तु ।१।, वा ।१।।

शीङः परस्य मस्यान्तो रम् स्यात्, वेत्तेस्तु वा।

शेरते। अशयिष्ट। [१८१] अधी ङ् ल अध्ययने। अधीते।

७१२। गीङ् ष्टोथ्योर्वा।

गी ।१।, इङ. ६।, ठी थी ७।।, वा ।१।।

इङो गी स्यात् वा टोथ्योः परयोः। घत्वात् न गुः।

अध्यगीष्ट अध्यैष्ट।

---

जन इति जन्मलि चेत्यस्य ग्रहणम्। जनीत्यस्य श्नना व्यवधानात्। व्यतिजज्ञिष व्यतिजज्ञिध्वम् ईडिषे ईडिध्वे ईशिषे ईशिध्वे। अप्राप्तौ विधिरयं न तु नियम। तेन जनिता ईडिता ईशिता इत्यादौ वसोरसेतीम् स्यादेव वस्ता वसितेति वेमसहेतीम् वा। प्रणिसे इति वालननिसनिन्देति वा णत्वम् ॥७०८॥

सूङल धातोर्गुर्न स्यात् र्याम्। सुवै इति भ्रुध्वोरियुव् ॥ ७०९ ॥

अगुणनिमित्ते गुणनिमित्ते च रे इत्यर्थ ॥ ७१० ॥

मस्यान्त मान्त तस्य। शेरते सविद्रते सविदते। समीगमृच्छेत्यादिना आत्मनेपदम्। शीङ् साहचर्यात् विद इति अदादिक एव। तेन धौ विदङ् मीमासे इत्यस्य विन्दते इत्यस्य न स्यात्। अशयिष्टेति नेमिकाजेत्यत्र शीवर्जनादिम् ॥७११॥

## ७१३। ठ्यां गा आङ्सनोस्तु वा।

ठ्या ७।, गा ।१। आङ्सनी ७॥, तु ।१।, वा ।१। ।

इङो गा स्यात् ठ्या, ञे परे अङि सनि च वा।

अधिगजे अध्यगीष्यत अध्यैष्यत।

[१८२] दीधी ङ चलु देवने दीप्तौ।

## ७१४। दीधीवेव्योन णुः।

दीधी वेव्य ६।, न ।१।, णु १। ।

दीध्यै।

## ७१५। लोप्योऽन्तो य्योः।

लोप्य १।, अन्त' १।, य्यी ७॥।

दीधीवेव्योरन्तो लोप्यः स्यात् यकारिवर्णनोः। अदीधिष्ट एव १८३ वेवी ङ चलु ई ल-वत्। [१८४ द्विषी ञ ल वैरे।

[६७५] द्विषविदातोऽनुस् वा अद्विषु' अद्विषन्। अद्विष्ट। अद्विक्षत्। [१८५] दुही ञल दोहने।

अधुक्षत् अधुक्षत अदुग्ध। एव [१८६] दिही ञल लेपने। प्रणिर्दग्धि अधिक्षत्।

---

र्वत्वान्न णु प्रथमोपस्थितकस्य परित्यज्य दीर्घकरणादित्यर्थ। अध्यैष्टेति भूयोऽसिति पुनरम्॥ ७१२॥

अङ् च सन् च अङ्सनी ञेरङ्सनौ आङ्सनौ तयो। आङ्सनोस्तु अध्यजीगपत् अध्यापिपत् अधिजिगापयिषति अध्यापिपयिषति॥ ७१३॥

दीधी च वेवी चेति समाहारे दीधीवेवी तस्य। दीधीवेव्य इति षष्ठ्येक अन्यथा परसूत्रे यथासंख्य स्यात्। एतयोर्णुर्न स्यात् सर्वत्र दीध्यै एव दीध्यनीय-मित्यादि। वेव्यै इत्यादि॥ ७१४॥

य च इश्च यी तयोः। दीध्यते अधीधिष्ट दीधें तु दीधीत इत्यादौ अन्तलोपा-भावे श्नुध्वोरिति यकारापत्ति स्यात्। एव वेवीङ्। ईलुग्य्योरित्यनेनैवेष्टसिद्धौ

[ १८७ ] ऊर्णुँ जल आच्छादने।

७१६। वोर्णोः पिद्धसे णुः।

वा ।१।, ऊर्णों ६।, पित् हस् रे ७।, णु १।।

ऊर्णोर्णुः स्यात् वा पिति हसे रे। ऊर्णोति ऊर्णौति (६८०) रपिद्धस्युत इति व्रिः।

७१७। ध्याम्।

ध्याम ७।।

ऊर्णोर्णुः स्यात् पिति हसे ध्याम्। और्णोत्।

७१८। णुव्व्रिष्ध्याम्।

णु उव् व्रि १। ध्याम् ७।।

ऊर्णोर्णुः उव् व्रिः एते स्युः ध्याम्। और्णवीत् और्णुवीत् और्णावीत्।

७१९। नाजन्तादेरादिद्विः।

न ।१।, अजन्तादेः ६।, आदि १।, द्वि १।।

अन्तादिस्थिताचो धो-रादिद्विर्न स्यात्।

---

लीध्योऽन्तो ध्योरिति कृत ज्ञापयति दीधीवेव्योर्न क्वापि इद्विरिति तेन णके आदीध्यक. आवीव्यक इति। एतयोर्वैदि[illegible]पि पदसाधन सर्ववर्म्मानुरोधात्। अदिष्टेति लदिषी ञ वेरे ञित्वात् आत्मनेपद स्यात् अद्विचदिति ष्मष इति सक् अधुचत अदुग्धेति गुहदुहदिहेति न सि सक् वा ॥७१५॥

ऊर्णोतेर्णुः स्यात् पिति हसे रे। पिति कि ऊर्णुत। यङ्लुकि। प्रोर्णोनोति प्रोर्णोनौति ॥७१६॥

नित्यार्थं विधानम् ॥७१७॥

णुश्च उव् च व्रिश्च णुव्व्रि.। सूत्वात् पुंस्त्वम् ॥७१८॥

अचो अन्तादौ यस्य सोऽजन्तादिः तस्य। यथा अड्डिटिषति इटिटिषति उचिखिषति इत्यादौ ॥७१९॥

## ७२०। स्थादौ नवद्रोऽये।

स्थादौ ७।, न-व-द-र ७॥, अये ७।।

स्थादौ स्थिता न व दरा द्विर्न स्युर्न तु ये। ऊर्णुनाव।

## ७२१। ङिदिम् वोर्णोः।

ङित् ।१।, इम् ।१।, वा ।१।, ऊर्णो ५।।

ऊर्णोः पर इम् ङित् स्यात् वा। ऊर्णुविता ऊर्णविता।

[१८८ ष्टु ञल स्तुतौ।

## ७२२। पिद्धसस्येम् ब्रुवो यङ्लुग्रुतुस्तो स्तु वा।

पित् हस रस्य ६।, ईम् ।१।, ब्रुव ५।, यङ्-लुक् रु तु स्तो ५।, तु ।१।, वा ।१।।

ब्रुवः परस्य पितो हसो रस्य ईम् स्यात् यङ्लुगादेस्तु वा। स्तवीति स्तौति, अभिष्टौति न्यष्टावीत् न्यस्तावीत्। अस्तोष्ट तुष्टुव। स्तविता स्तोता।

[ १८९ ] टु क्षु ल क्षुते। क्षविता।

[ १९० ] रु ल ध्वनौ। रवीति रौति। रविता रोता।

---

स्थ संयोग तस्यादि संयोगादि तस्मिन् नश्च वश्च दश्च रश्च ते। न य. अय तस्मिन्। संयोगादौ स्थिता नवदरा द्विर्नस्युः। यथा उन्दिदिषति उब्जिजिषति अड्डिडिषति अर्चिचिषति। अये इति यकारे परे ये नवदरा ते यकारेण योगे संयोगादिस्थिता अपि द्वि स्युरेवेत्यर्थ.। यथा ऋ अराय्यते अर्थमाख्यातवान् आरिर्य्यत् इत्यादौ रेफस्यापि द्वित्वम्। अत्रापि अजन्तादेरित्यनुवर्त्तते। तेन अन्तादिस्थिताचो धौ स्वस्यादौ स्थिता ये नवदरास्ते द्विर्न स्युरित्यर्थ। अन्यथा द्राल दद्रौ दिद्रासति इत्यादावपि दकारस्य द्वित्वनिषेधः स्यात्। ऊर्णुनावेति ऊर्णुन्‌आदौना नकार आदौ दन्त्य आसीत् पश्चात् रेफयोगात् मूर्द्धन्य.। तेन रेफ हित्वा ण इत्यस्य द्वित्वे पूर्वनकारस्य तथैव स्थित परनकारस्य तु निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात पुनद[illegible]न।त॥ ७२०॥

ऊर्णुवितेति इमो ङित्वपक्षे गुणो र

[१९१] तु ल वृत्ति-हिंसापूर्त्तिषु।

तौति तवीति। तोता तविता।

[१९२ ब्रू ञ ल उक्तौ। ब्रवीति।

७२३। पञ्चतिप्पञ्चणब्ब्वाहश्च।

पञ्च।१।॥, तिप्।१।॥, पञ्च।१।॥, णप्।१।॥, वा।१। आह १।, च।१।।

ब्रुवः परेषां पञ्चानां तिवादीनां पञ्च णवादयो वा स्युः,
ब्रुवश्चाहः स्यात्। आह आहतुः आहुः।

७२४। हस्त थि।

ह ६।, त।१।, थि ७।।

आहो हस्य तः स्यात् थे परे। आत्थ आहथुः। पञ्चे सुगमम्।

७२५। वचोऽरे।

वच १।, अरे ७।।

ब्रुवो वचः स्यात् अरे। अवोचत् उवाच ऊचे।

---

पिश्चासौ हस् चासौ रश्चेति पिङ्हस तस्य। यङ् लुक् यस्मात् स यङ्लुक् यङ्लुक् च रुश्च तुश्च स्तुश्चेति तस्मात्। बोभवीति बोभोति रवीति रौति तवीति तौति स्तवीति स्तौति। रुतुस्तूना छन्दस्येवेत्येके। अभिष्टौतीति गीक इति षत्वम्। न्यष्टावीदित्यादि सुस्तुधोरितीमि निविपरिस्वनुजेति वा षत्वम्। पे किं अस्तोष्ट इत्यत्र आदौ गुणे क्रस्वपरत्वाभावात् न सिलोप। तुष्टुवेति नेमसुमिति न इम्। स्तोतेत्यादि वेम्सहेतीम् वा चर्‍ितेति नेमेकाजेत्यत्र चुवर्जनादिम्। रोतेत्यादि रुदुसुनोस्त्वख्या इति वेम्। तोतेत्यादि वेम् सहेतोम् वा ॥७२३॥

पञ्चानां तिपां समाहारः पञ्चतिप् पञ्चानां णपां समाहारः पञ्चणप् आहादेशो णवाद्यादेश पञ्च एव। स्थानिवदादेश इति न्यायात् णवादौ न 'वित्व घपस्य नेम् नाप्यतीतकालप्रतीति। तथाच प्राह स्म राम भरतोऽपि धर्मग्रमिति भट्टि' ॥७२३॥

पिङ्हसे स्येमित्यत्र ब्रुव स्वरूपग्रहणात् आत्थ इत्यत्र न इम् ॥७२४॥

अरे इति विषयसप्तमी। तेन क्त्वा वचादेशे सति वक्तस्य स्वेति ङप्रत्ययो

# ह्वादिः ।

---

[१८३] हुलि होमे ।

## ७२६ । ह्वादिः रे द्विः ।

ह्वादि १।, रे ७।, द्वि १। ।

**ह्वादिर्द्विः स्यात् रे परे । जुहोति ।**

## ७२७ । ह्वो वच्यणौ ।

ह ६।, व् ।२।, अचि ७। अणौ ७।, ।

**ह्वोस्कारस्य व् स्यात् अणौ अचि रे । जुह्वति जुहुधि ।**

---

अ.वक्तीति सम्भाव्य डप्रत्ययप्राप्तं पूर्वमेव वचादेशः । अन्यत्र अरप्रत्ययोत्पत्ति-सम्भाव्ये वचादेशः । तत सर्वत्र ब्रूञोञानुबन्धत्वात् उभयपदमिति । यथा अवोचत् अवो,चत उवाच ऊचे ऊच्यात् वक्षीष्ट इत्यादि । विब्रूति' कटके कृताञ्जनैरिति तु अनाहितकार्यस्यानित्यत्वात् । एव कुड्डो कभाव इत्यनेन कप्रत्यये ब्राह्मण ब्रूते ब्र न्मण ब्व । अतएव समनब्राह्मणे दान द्विगुण ब्राह्मणब्रुवे । अधीते शत-म् सम्मनस्य वेदपारगे इति पठन्ति ॥७२५॥

---

ह्वादिर्द्विः स्यात् रे परे । जुहोतीति रपिद्वस्तुत इत्यत द्विवर्जनात् न त्रि । ह्वादिस्तु । हुलि होमि जिलिभी तु भये स्यात् ह्रीलि तु लज्जे पृलि रक्षणे स्यात् । ओंकहालि त्यजने ऋलि गत्या घृलि तु सेके दीपनकृत्याम् । हृलि बलात्करणे निन्नू गत्या भस लि भत् सनकरणे द्युत्याम् । कित लि किर्लि ज्ञाने कथितस्तु निधावनकर्माणि विदित । धन लि धान्ये धिष लि ध्वनने जन्मलि च तु विदिता जनने । निजिरलिञौ शौचे पोषे स्यात् विजिरलिञौ तु पृथग्भावे स्यात् । विविरलिजौ तु ख्यातौ व्याप्त्या दाञ लि दाने धाञ लि धृत्याम् । भृञ लि तु पोषणकर्मणि धृत्या माङलि शब्दे हाङलि गत्याम् । गार्लि स्तुत्या ह्वादौ पठिता विंशतिरिति पञ्च च बुधविदिता इति ॥७२६॥

ह्वोक् ह तस्य । एवो मावर्कोऽयम् । जुह्वति । अणौ कि जुह्वाति रे कि

७२८। पश्चाम् वा भी ह्री भृ ह्वो श्याम्।

पश्चाम् ।१।, वा ।१।, भी ह्री भृ ह्वो ५।, श्याम् ७।

एभ्य पश्चाम् वा स्यात् श्याम्। जुहवामास जुहाव।

[१८४] ञि भी ह्नि भीत्याम्। बिभेति।

[७००] दरिद्रो डिरित्यादि, बिभीतः बिभितः बिभ्यति बिभयामास बिभाय। [१८५] ह्री लि लज्जायाम्।

जिह्रयामास जिह्राय। [१८६] पृ लि पूर्त्तौ।

७२९। पृभ्रादे र्ङिः खे रे।

पृ-ऋ भृ आदे ६।, ङि १।, खे ६।, रे ७।।

पृ-ऋ भृ माङ-ह्वाङा खेर्ङिः स्यात् रे। पिपर्त्तिः।

७३०। पुर्घौ वा।

पु ६।, घं १।, वा ।१।।

पिपूर्त्तः पिपृतः। पपरतुः पप्रतुः।

[५७८] गुणस्त्वात् न एः। [१८७] श्रोहा कलि त्यागे।

जहाति जहितः जहीतः, जहति।

---

जुहवु। ननु ह्वो वचीति क्रतेऽपि गुणविधेर्विशेषत्वेन बलवत्वात् जुहवानीत्यादौ गुणस्यैव प्राप्तौ श्रणाविति सुखार्थमिति काशीश्वर। वस्तुतस्तु हुधातुसम्बन्ध्युकार-स्थानिकत्वादज्भावनिमित्तकत्वाच्च विशेषविधिना ह्वोवचीत्यनेन इङस्थानिक-त्वादज्भस्निमित्तकत्वाच्च सामान्यस्य गुर्णूङश्चेत्यस्य बाधित्वात् जुहवानि इत्यादौ वकारस्यैवापत्तिरिति श्रणाविलुक्तम्॥ ७२७॥

श्चित्वाद्रसञ्ज्ञाया हित्व पित्वाद्गुण। बिभयामास बिभाय जिह्रयामास जिह्राय बिभरामास बभार जुहवामास जुहाव। बिभ्यतीति अन्तोऽद्द ङेः॥ ७२८॥

पृश्च ऋश्च भादिश्च तत्तस्य। भादिस्तु भृप्रभृतिह्वादिगणसमाप्तिपर्य्यन्त इत्यत आह भृ माङ् ह्वाङामिति। पिपर्त्ति इयर्त्ति बिभर्त्ति मिमीते जिहीते। रे किं पपार इत्यादि॥ ७२९॥

पुरिति षष्ठेकम्। खे रे इति च नानुवर्त्ततेऽनिष्टत्वात् पृलि पालने इति

## ७३१ । हाकोऽन्तलोपः ख्याम् ।

हाक ६।, अन्तलोप. १।, ख्याम् ७।

जह्यात् ।

## ७३२ । हौ डा वा ।

हौ ७।, डा ।१।, वा ।१।

हाको डा स्याद्वा हौ । जहाहि जहिहि जहीहि । हेयात् ।

[१९८] ऋलि गत्याम् । इयर्त्ति ।

[१९९] जन मलि ङ जनने । जज्ञिषे जज्ञिध्वे ।

[२००] निजिरौ ञ लि पोषणे शोधने च ।

## ७३३ । निजां खि रे णुः ।

निजा ६।।।, खि ६।, रे ७।, णु १।

**निजविजविषा खेर्णुः स्यात् रे । नेनेक्ति नेनिक्तः ।**

---

ऌस्वान्तस्य दीर्घः स्याद्वा एव सर्वत्र । स्वमते ञिपॄलि तु पालने इति दीर्घान्ते स्थितेऽपि दीर्घविधानमस्य सर्वसम्मतत्वात् । पिपूर्त्त इति दीर्घे कृते ऋदिरणा वित्युरिर्व्यंनच् तयोीति दीर्घं । ऌस्वान्तमेव केचित् दीर्घान्त पठन्ति तेन पृथग् धातु-र्नोयम् । अतएव ऌस्वान्तग्रहणेनैवास्य ग्रहणात् पॄभादेरिति खेर्डि । पपरतुरिति दीर्घपक्षे ऋती ण । जहित इति दरिद्रो डिरिति डि । जहीत इति आद्वो रिति ई । जहतीति अन्तोऽद्द वे ॥ ७३० ॥

हाको ह् ख्यामिति कृतेऽपीष्टसिद्धौ अन्तलोपगौरव ज्ञापयति हाको हसे रे परे आदौ द्वित्व पश्चात् कार्य्यान्तरमिति । तेन जह्यादित्यत्र आदौ द्वित्वे झभख-येति खेराकारस्य अकार । अन्यथा प्रागच्कार्य्यादचि द्विरिति नियमेन पश्चात् द्वित्वे खेरदन्तत्वं न सम्भवतीति । एव जहित' जहीत इत्यादावपि आदौ द्वित्वे पश्चात् दरिद्रो डिरिति डि आद्वोरिति ईश्च इति ॥ ७३१ ॥

जहाहीत्यादि आदौ द्वि. पश्चात् डा डिः ईश्च । इयर्त्तीति ऋलिं गत्या पॄभादेरिति खेर्डिः. खेर्य्वौरिति इय् मूलधातोर्गुण । एव इयृत इय्रति । द्विपि ऐय ऐयृताम् ऐयरुः । जज्ञिषे इत्यादि वैदिकत्वेन व्यत्ययादात्मनेपदे सध्वोरस्ये-तीम् ॥ ७३२ ॥

## ७३४। न ह्वगडोऽचि।

न ।१।, ह्वगड' ६।, अचि ७।।

ह्वेगडो गुर्न स्यादचि रे। नेनिजानि। रे किम्। निनेज।

एवं [२०१] विजिरी ञ लि विवेकि।

[२०२] विषि लिं व्याप्तौ। अविषत् अविक्षत्।

[२०३] डु दा ञ लि दाने।

प्रणिददाति। अट इत्यक्षेरालोपः। दत्ते।

## ७३५। ह्वगो दा-धोर्दे-धे ह्नौ।

ह्वगो ६॥, दा धो ६॥, दे धे ।१॥, ह्नौ ७।।

ह्वेर्दाञो ह्वेर्धाञो दे धे च स्यात् ह्नौ। देहि।

## ७३६। स्था-दोर्ङिष्टौमे नगुः।

स्थादो ६॥, ङि, १।, टौमे ७।, न ।१। गु, ?।।

स्था-दो ङिः स्यात् टौमे, तस्य च न गुः। अदित अदि-षाताम्।

[२०४] डु धा ञ लि धारणे पुष्टौ। प्रणिदधाति।

---

बहुवचन गणार्थं गणश्च ह्वाद्युभयपदिसमापकपर्यन्त इत्यत आह निजविज-विषामिति। किन्तु विजिर्लिं ञौ इति जान्तो यो धातु. स विचिर्लिंञौ इति चान्त. कैश्चित् पठ्यते। तेन विजग्रहणेनैव विच' प्राप्तौ विचोऽपि ह्वेर्गु-रिति बोध्यम्। नेनेक्ति वेवेक्ति वेवेष्टि। रे कि निनेज विवेज विवेच विवेष ॥७३३॥

नेनिजानि वेविजानि वेविचानि वेविषाणि। एव यङ् लुकि लेलिह्नीति मीमुचीति नन्र्तीति। ह्वड. कि जिह्रयाणि जुहवानि पिपवानि यङ् लुकि नेनयीति बोभवीति चर्करीति। रे कि निनेज इत्यादि। अचि कि नेनेक्तीत्यादि। अविषदिति विषिर्लिंञौ शासलिद्द् ग्युदिति ङ । पक्षे ह्नश इति सक् अविक्षत्। प्रणिददातीति गदनदेति णत्वम् ॥७३४॥

दाधोरिति डुदाञलि डुधाञलि इति द्वयोर्ग्रहणम् अन्यथा ह्नौ परे दिला

## ७३७। धो द धोऽन्तलोपे तथि।

ध ६।, द ।१।, ध. १।, अन्तलोपे ७।, त-थि ७।।

धाञो दस्य धः स्यात् तथयोः परयोः, अन्तलोपे सति। धत्ते। धेहि। अधित। [२०५] टु डु भृ ञ लि भृतिपुष्ट्योः। बिभृतः बिभ्रति। बिभरामास बभार। [२०६] मा ङ लि शब्दे। प्रणिमिमीते मिमाते मिमते।

एवं [२०७] ओ हा ङ लि गतौ।

अदादि-पादः।

---

सम्भवात्। देख धेश्र देवे इति लुप्त प्रथमाद्विवचनान्त यथासंख्यार्थम्। देहि धेहि ॥७३५॥

अत दासन्नेव। प्राखित प्राखिषाताम् अदित अदिषाताम् अधित अधिषाता अणिदधातीति गदनदेति बलम् ॥७३६॥

धत्ते इति आद्यौरित्याकारलोपे खेर्दस्य ध.। एवं धत्त धत्थः इत्यादि धत्से धद्धे इत्यादौ तु झभान्तस्येत्यादिना दस्य धः। धो द धोऽणौ तथि इति कृतेऽपीष्ट-सिद्धौ अन्तलोपे इति गौरव कथमिति चेन्न यङ् लुकि दाधीत. दाधीतवान् इत्यत्र दा मा गै इत्यनेन ङी आदेशे कृतेऽपि दस्य धकारापत्तेः। बिभरामासेति बशामि खेङि.। प्रणिमिमीते इति आद्यौरिति ईः खेङिः पतपददामेति बलम्। एवम् आते—, मिमाते अन्ते—, मिमते। एव हाङ लि जिहीते जिहाते जिहते ॥७३७॥

इति अदादिपाद.।

---

## द्वितीयः पादः—दिवादिः ।

[२०८] दिव्यु क्रीडायाम्

**७३८। दिव सु तुद रुध क्र्यादे र्यन् न्वनण्नाः श्वित्ते रे।**

दिव—क्र्यादेः ५।, यन्—नाः १॥, श्वित् ।१॥, घे ७।, रे ७।।

एभ्यो घेऽर्थे यन् नु अ नण् ना एते रे परे क्रमात् स्युः, ते च श्वितः। दीव्यति। [२०९] षिव्यु तन्तुसन्ततौ। निषीव्यति। न्यषेवीत् न्यसेवीत्। [२१०] नृती य नर्त्तने।

**७३९। नृत् क्रत् चृत् कृत् तृदोऽरसोऽसेरिम् वा।**

नृत्—तृद. ५।, अरस: ६।, असे. ६।, इम् ।१।, वा ।१।।

एभ्यः परस्यारस्य सिवर्ज्जस्य सस्य इम् स्यात् वा। नर्त्तिष्यति नर्त्स्यति। सौ तु अनर्त्तीत्। [२११] त्रसी य भये।

---

दिवश्च सुश्च तुदश्च रुधश्च क्रीश्चेति ते आदयो यस्य तस्मात्। यन् च नुश्च अश्च नण् च नाश्च ते। श्वित्करणात् रसज्ञाया अपिद्‌त्वात् ङित्त्वे श्यनादौ परे न गुण। एते शपो बाधकाः। श्नमिति मूर्द्धन्यणकारानुबन्धो रुधादेरन्त्यादचः परो भवन्नपि शपं बाधते। अत्र प्रकृतिप्रत्यययोरर्थाभिधाने साहचर्य्यस्य अनेनैव सिद्धत्वात् शपबाधकानां श्यनादीनां साहचर्य्याच्च श्नोऽनुरोधात् क्र्यादेरित्यस्य षष्ठ्यन्तत्वेन वक्तुमुचितत्वेऽपि श्यनादीनामनुरोधात् पञ्चम्यन्तत्वं विरुद्धधर्म्मसमवाये भूयसा स्यात् सधर्म्मकत्वमिति जैमिनिसूत्रात्। दीव्यति श्यनोङित्वात् गुणाभावे व्यंनच्तयोति दीर्घ.। निषीव्यतीति गीक इति षत्वम्। न्यषेवीदित्यादि निविपरिस्सनूजेत्यादिना षत्वं वा॥ ७३८॥

[१८४] क्रमक्लमेति श्यन् वा, त्रस्यति त्रसति। तत्रास त्रेसतुः तत्रसतुः। [२१२] जॄ इय्यं जरायाम्।

जीर्य्यति। अजरत् अजारीत्। जेरतुः जजरतुः। जरीता जरिता।

[२१३] शो य निशाने।

## ७४०। यन्योशमादिमिदो लोपर्वणु।

यनि ७।, ओ-शमादि-मिदः ६।, लोप-र्व-णु १।।

ओकारस्य लोपः शमादेर्व्वो मिदेर्णः स्यात् यनि। श्यति। अशात् अशासीत्। एवं [२१४] एवं छो य लूनौ।

[२१५] षो य नाशे। प्रणिष्यति। न्यषात् न्यषासीत्। सेयात्

[२१६] दो य छेदने। प्रणयदात् देयात्।

[२१७] राध्यौ ण हिंसे।

रेधतुः रराधतुः। वधार्थः किम्, आरराधतुः।

[२१८] व्यध्यौ ताड़े। विध्यति। विव्याध, विविधतुः।

[२१९] पुष्यौल्ट पोषणे।

[५६५] शासुलिद्युत् पुषादेर्ङ्ष्टौपे इति ङः। अपुषत्।

[२२०] श्लिष्यौ ञिल्ट श्लेषे। अश्लिषत्। आलिङ्गने तु अश्लिक्षत्।

---

नृत् कृत्। नृतीय नर्त्तने कृती ष वेष्टे कृतीश्प छिदि इति द्वयम्। चृत् श हिंसे ग्रन्थे चृत् कि सन्दीपने इति द्वयम्। कृदुञधि देवने छृद कि सन्दीपने इति द्वयम्। तृदुञधिर्नादरे च। नर्त्तिष्यति नर्त्स्यति कर्त्तिष्यति कर्त्स्यति चर्त्तिष्यति चर्त्स्यति छर्दिष्यति छर्त्स्यति तर्दिष्यति तर्त्स्यति सौतु अनर्त्तीदित्यादि। जीर्य्यतीति ऋदिरणाविति इर् व्यनच्तयीति दीर्घः। अजरदित्यादि शासुलिद्युदिति ङे ह्रस्योरिति गुणः। पक्षे सौ पे वृद्धिः। जजरतुरित्यादि ऋतीणः पक्षे खिलोपादि। जरीतेति ह्रती वेम इति दीर्घः॥ ७३९॥

ओश्च शमादिश्च मिद च तत्तस्य। लोपश्च र्वश्च णश्चेति। श्यति द्यति स्यति

[२२१] रध्यू ल्ट पाकहिंसयोः।

७४१। नुण् रधो मुचां नश्मस्जो रभलभोऽनठीमच्ये भस्परठ्यचि।

नुण् ।१।, रध ६।, मुचा ६॥, नश् मस्ज ६।, रभ लभ ६।, अनठीमचि ७।, ए ७।, भसि ७।, अरठ्यचि ७।

रधष्ठोवर्जेम्वर्जेऽचि। मुचादेरत्ये, नश मस्जोर्भसे, रभलभोरठोवर्जेऽचि, नुण् स्यात्। अरन्धत्। रधिता रद्धा। ठ्यान्तु ररन्धिव रेध्व, ररन्धिम रेध्म। [२२२] तृप्यू जिल्ट प्रीणने। अतर्पीत् अत्राप्सीत् अतार्प्सीत् अतृपत्। एव [२२३] दृप्यु दर्जि हर्षाहङ्कारयोः। [२२४] मुह्यू जिल्ट वैचित्त्ये। मोहिता [१७८] मुहा घङ् वाभौ। मोग्धा मोढा।

स्यति शमादिश्च। शमु श्रमू दमुश्चापि चमु तमु भमुश्च क्लमुमदीति च मनीषिभिर्निगदित शमादिर्गण। शाम्यति श्राम्यति दाम्यति चाम्यति ताम्यति भाम्यति क्लाम्यति माद्यति। भिदस्तु मेद्यतीति। अशादित्यादि येश्याक्लासान्नेति सेलुक्। पचे यमरमेति इम् सनौ। प्रणिष्यति इति दामासीहन इति णत्वात् गीक इति षत्वम्। न्यषादित्यादि येश्याच्छासान्नेति से पेलुक् वा अस्यपीति षत्व सेयादिति दामागै इति ङे प्रखदादिति भूस्थापिवेति सेलुक् पतपददामिति णत्वम्। ट्येयादिति दामागै इति ङे। रैधतुरिति अनेकार्थत्वादिह राधेर्वधार्थत्वे विधिबलादातोऽप्येत्वम्। अरराधतुरिति। आराध्यते सेवार्थत्वात्। विध्यतीति ग्रहस्वपाद्योरिति जि। विव्याधेति व्यधग्रहेति जि। विविधतुरिति व्यधग्रहेति खेर्जि ग्रहस्वपाद्योरिति मूलस्य जि.। अश्लिषत् इति पुषादित्वात् ङ। अश्लिक्षदिति हशष इति सक्॥७४०॥

न ठी अठी अठ्या इम् अठीम् नास्ति अठीम् यत्र अनठीम् अनठीम् चासौ अच्चेति अनठीमच् तस्मिन्। अनठीमचि रश्च ठी च रठ्यौ न रठ्यौ अरठ्यौ तयोरच् अरठ्यच् तस्मिन्। अनठीमचीति रध्यते ष्ठीमि सामान्ये अचि च नुण् स्यादित्यर्थः। यथा ररन्धिव ररन्धिम ठ्या अचि ररन्ध अन्याचि रन्धयति अरन्धि रन्धनम्। अठीमिति तु रधादित्वादिमि रधिष्यति रधिता रधितव्यम्। किञ्च ठीमचि

[२२५] नशल्ट य् नाशे ।

## ७४२ । नश नेश वा ङे ।

नश ।१।, नेश ।१।, वा ।१।, ङे ७।

प्राणेशत् प्राणशत् । नशिता प्रनग्धा प्रनंष्टा । [५४८] अशान्तत्वात् न ण' । [२२६] शम् श्य इर् उपशमे । प्रणिशाम्यति । [२२७ क्लम्य् भिर् ग्लानौ । क्लाम्यति क्लामति । [२२८] असु इर् क्षेपे । आस्थत् । [२२९] यसु इर् यत्ने ।

यस्यति यसति, संयस्यति सयसति । अन्यत्र । प्रयस्यति । [२३०] लुभ्य इर् गार्द्धे । लोभिता लोब्धा । [२३१] जीर् य मिदा स्नेहे । [मिद्यति । [ मिदेर्गु: ] [२३२] सू यो ङ सूतौ । असविष्ट असोष्ट । [२३३] ओ दीङ य क्षये ।

---

इत्युक्तेऽपीष्टसिद्धौ अचत्वादेव ठीम प्राप्तौ ठीमो ग्रहणादेव अनिमो वर्जने च तु गौरव ज्ञापयति रध्यते पुषादित्वात् ङे लुपि कृते रुसुङ् न इत्यनेन नस्य लोपो न स्यादिति । तेन अरम्भदित्येव न च नुण्करणसामर्थ्यान् नलोपो न स्यात् इति वाच्य रम्भयतीत्यादौ नुण सामर्थकत्वात् मुचामिति बहुवचन गणार्थम् । गणश्च मुञ्चति लुम्पि लिम्पौ च विन्दि सिञ्चति कृन्ततौ । खिन्दति पु सतिश्चैव मुचादावष्टधातव इति । मुचादेरत्वे इति तुदादित्वात् जाते शप्प्रत्यये परे इत्यर्थ तेन मुञ्चति इत्यादि । अन्यत्र घञि मोक । नशमस्जोर्झसे नष्टा नङ्क्ष्यति मङ्क्ता मङ्क्तु, मङ्क्ष्यति । रभलभोस्तु रम्भयति अरम्भि आरम्भ' लम्भयति अलम्भि आलम्भ रठग् रठोत् रभते रेभे लभते लेभे । अतार्प्सीदित्यादि ञ्णि तृप्यू प्रीणने टि कृषसृपेति सिपक्षे ऋकारस्य वृद्धि । वद्रोऽकिदिति रेफपक्षे अत्राप्सीत् रधादित्वात् इम् गुणपक्षे अतर्पीत् पुषादित्वात् ङे अतृपत् । मोह्वितेति रधादित्वादिम् वा । पक्षे मुहादित्वात् घङि मोग्धावढोऽप्राप्तिपक्षेऽन्तरङ्गत्वात् परत्वाच्चादौ गुणे होढोभाविति हस ढे ढभात्तथोर्धो ध इति तकारस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रि इति ढलोपे पूर्वङ्गस्वाभावान्न दीर्घ मोढा ॥ ७४१ ॥

नश । नश् ल नाशे इत्यस्य नेश् स्याद्वा ङे । प्राणेशत् इत्यादि शान्तनशेति

## ७४३ । दीङ्ख्यां यन् यब्णौ ङा सनि तु वा ।

दीङ ६।, ख्या ७।, यन् ।१।, यप्णौ ७।, ङा ।१।, सनि ७।, तु ।१।, वा ।१। ।

दीङः ख्या यन्, यपि णौ च ङा, सनि तु वा स्यात् । अदास्त दिदीये । [ २३४ ] जनी ख्य ङ प्रादुर्भावे । जायते ।

## ७४४ । जनवधः सेममोऽकमवमाचमो-ञ्णित्क्रिदिणि स्वोऽमयम विश्रमस्तु वा ।

जनवध ६।, सेमम ६।, अ कमवमाचम ६।, ञ्णित् क्रिदिणि ७।, स्व १।, अम-यम-विश्रम ६।, तु ।१।, वा ।१। ।

जनो वधः सेमोऽमन्तस्य च कमवमाचम वर्जस्य स्वः स्यात् ञ्णिति क्रिति इणि च, अम यम विश्रमस्तु वा । अजनि अजनिष्ट जज्ञे । [ २३५ ] दी पी ख्य ऋट दीपने ।

अदीपि अदीपिष्ट । एवं [ २३६ ] पूरी ख्य प्यायने ।

[ २३७ ] पद्यौ ङ गतौ ।

[ ६४२ ] पदस्तनीण् घे इति । प्रत्यपादि अपत्साताम् ।

[ २३८ ] बुध्यौ ङ अवगमने । अबोधि अबुद्ध ।

[२३८] नहौ ञ्य बन्धे । [२३७ नहो घङ्भी । अनात्सीत् अनद्ध ।

इति दिवादिपादः ।

---

घड तस्य टत्वे प्रनष्टा । पचे तुणि मुहादित्वात् घङि ढभादिति तस्य धे झप्-झर्सोरिति घस्य गे नस्यानुस्वारे तस्य च ङकारे प्रनङ्ग्धा अशान्तत्वात् न ष्ण । प्रणिशाम्यति इति वपवहृशमचीति णत्व शमादित्वात् दीर्घ । क्राम्यतीति क्रमक्रमेति श्यनि शमादित्वात् दीर्घ । आस्थदिति असु इर क्षेपे वक्तयस्येति ङे वच्चस्य-श्विपतामिति अस्थ । सीव्या इत्यादि वेमसहेतीम् वा । मेद्यति इति यर्च्यो शमा दीति गुण । असविष्टेति वेमूदितीम् वा ॥ ७४२ ॥

यप् च णश्च यब्णु सूत्वादिकत्व तस्मिन् । दिदीये दिदीयाते । यपि प्रदाय गुरिति गुणसाधनयोग्य' । अदास्त दास्यते दापयति दाता । सनि दिदासते दिदीषते । जायते इति स्यादानेति जा ॥ ७४३ ॥

## तृतीयः पादः—स्वादिः ।

[२४०] षु ञ न वन्धे ।

सुनोति अभिषुणोति सुनुतः सुन्वन्ति । [ ६३२ ] सुस्तु-धोरितीम् । व्यषावीत् । असविष्ट असोष्ट । सुषुविव । विसवि-ष्यति विसोष्यति । ५७२ स्यान्तस्त्वात् न षः ।

[ २४१ डु मि ञ न क्षेपे ।

### ७४५ । मिम्योर्यंब्णौ ङाऽखलालि लियस्तु वा ।

मिम्यो ६॥, यप्णौ ७।, ङा ।१।, अ खल अलि ७।, लिय ६।, तु ।१।, वा ।१। ।

अमासीत् प्रण्यमास्त ।

---

जनश्च वध् च जनवध् तस्य कमश्च वमश्च आचम् च ते, न विद्यन्ते ते यत्र स तस्य । सेम् चासौ अम् चेति सेमम् तस्य । ञ च णच,ञणौ ञ्णावितौ यस्य स ञ्णित् ञ्णिच्चासौ क्षचेति ञ्णित्क्षत् ञ्णित्क्षच्च इण् च ञ्णित्क्षदिन् तस्मिन् । यथा व्यणि जन्य वध्य घञि जन बध णकि जनक इणि अजनि अवधि । सेमोऽमन्तस्य त् । घञादौ श्रम श्रमक अश्रमि । सेम कि गामुक अगामि । कामादेस्तु काम वाम आचाम । आचम कि चम विचम । अमादेस्तु अम आम. यम याम विश्रम विश्राम विश्रमग्रहणात् श्रम प्रश्रम इत्यादिषु नित्यम् । अजनीति पद-स्तनीण् घे इति इण् । पक्षे ध्या सि. अजनिष्ट जज्ञे इति हनगमेल्युङ् लोप । अदीपीति पदस्तनीण् घे इतीण् वा प्रण्यपादीति गदनदपतपदेति णत्वम् । ननु अनुङ्खेत्यादौ सेर्लोपे त्यलक्षणमिति न्यायात् झभान्तस्येत्यादिना वकारस्य भकार. कथ न स्यादिति चेत् सत्य त्यलोपे सति त्यस्वरूपेण विहित कार्य्यं तदेव स्यात् न तु प्रत्ययस्य वर्णविहितम् इति । अनात्सीदिति अनिमत्वात् वृद्धिः अनद्ध इति नद्धी घड् भौ इति घड् ॥ ७४४ ॥

इति दिवादिपाद ।

---

अभिषुणोति इति गीक इति षत्वे ष्,ु,ष्ु इति णत्वम् । सुन्वन्ति श्नु ध्वोरिति व ।

[२४२] चि ञ न चित्याम्।

७४६। चेः किर्वा सन् ठ्योः।

चे ६।, कि' १।, वा।१।, सन् ठ्यो ७॥।

चिकाय चिचाय। चिक्ये चिच्ये। [२४३] स्तॄ ञ न स्तृतौ।

७४७। स्वाद्यृ-ॠ-वृ-रस्कु र्वेम् सन्मढ़ीसिः।

स्वादि-ऋत्-ॠत् वृ ५।, अस्कु ५।, वा।१।, इम्।१।, सन्-मढीसि ६।।

स्कुवर्ज स्वाद्यृदन्तात् ॠदन्ताच्च वृञो वृङश्च सनो मे स्थितयो-ढींस्योश्च इम स्यात् वा। अस्तरिष्ट अस्तृत। स्तरिषीष्ट स्तृषीष्ट। [२४४ वृञ न वृतौ। अवारीत्। अवरीष्ट अवरिष्ट अवृत। ववरिथ ववृव। वरिषीष्ट वृषीष्ट। [२४५] धु ञ न कम्पे। [६२३] सुस्तुधोरितोम्। अधावीत् [२४६] हि न वर्द्धने गतौ। प्रहिणोति।

---

सुषुविव इति रुदुसुनोत्त्वच्या इति इम्‌निषेधात् नेमसुमिति नियमेन नित्यमिम् क्लादिति षत्वे श्रुध्वीरित्युव् ॥ ७४५ ॥

डुमिञ् न क्षेपे मीङ्‌यतु मीञग् वधे मी कि गत्यां विशेषानभिधानात्। एषां यदि गुणसाधनयोग्यप्रत्यये च ङा स्यात्। न तु खलि अलि च। लियस्तु यदि गुणसाधनयोग्ये च ङा स्याद्वा। यथा प्रमाय माता मान मास्यति मापयति। खलत्तोस्तु दुर्मय मय लियस्तु प्रलाय प्रलीय लाता लेता इत्यादि ॥ ७४५ ॥

चे किर्वा स्यात् सनि ठ्याच्च। चिकाय चिचाय चिकीषति चिचीषति ॥७४६॥

स्व आदिर्यस्य स स्वादि स्वादिश्चासावृच्चेति स्वादृत् 'स्वाद्यृच्च ॠच्च वृश्चेति स्वाद्यृॠवृ तस्मात्। नास्ति स्कुर्यत्र सोऽस्कु तस्मात्। ढी च सिश्चेति ढीसि मे ढीसिः मढीसि। सन् च मढीसिश्चेति तस्य सर्वत्र पुस्त्वं सूत्रत्वात्। यथा तिस्तरिषति तिस्तीर्षति स्तरिषीष्ट स्तृषीष्ट अस्तरिष्ट अस्तृत। इगुड्‌गिति कित्वान्न गुणः। तितरिषति तितीर्षति तरिषीष्ट तृषीष्ट अतरिष्ट अतीर्ष्ट। विवरिषति वुवूर्षति विवरिषते वुवूर्षते वरिषीष्ट वृषीष्ट अवरिष्ट अवृत। अस्कु किं सञ्चिकीर्षति सस्कृषीष्ट समस्कृत। अवारीदिति नेमिकाजा इत्यत्र वृवर्जनात् इम्। अवरीष्ट इति वृतो वेंमी घं इति दीर्घ। ववरिथ इति नेम्रत स्थप इत्यत्र वृवर्जनात् इम्।

### ७४८। ह्रेः खेरनङि घिः।

ह्रे ६।, खे ५।, अनङि ७।, घिः १।।

खेः परस्य ह्रेर्घिः स्यात् न तु अङि। जिघाय।

[ २४७ ] क्रवि न क्रतौ हिंसे।

### ७४९। क्रविधिव्योः क्रधी श्नौ।

क्रवि धिव्यो. ६॥, क्र-धी १॥, श्नौ ७।

क्रणोति अक्रखीत् [५६८] अतएवेदितो नुण्। चक्रख। क्रखिता क्रखग्रात्। [२४८] दन्भु न दम्भे। देभतु' ददम्भतुः।

### ७५०। श्रन्थ ग्रन्थ दन्भां थपि न-लोपो वा।

श्रन्थ ग्रन्थ दन्भा ६॥, थपि ७।, नलोप. १।, वा।१।।

देभिथ ददम्भिथ। [२४९] धिवि न प्रीतौ। धिनोति। [२५०] अशू ङ न व्याप्ति संहत्योः। [५८०, स्यान्तादादिति खेरान्। आनशे।

इति स्वादिपादः।

---

वङ्वोत नेमसुम इति नित्य इमो निषध। अधावीदिति सुस्तुधोरिति इम्। प्रहि-णोति इति मीनाहिन्वानिति णत्वम् ॥ ७४७ ॥

जिघाय जिघीषति जेघीयते। अङि तु अजीहयत् ॥ ७४८ ॥

क्रविधिव्योर्विभक्त्युत्पत्ते पूर्वम् इदनुबन्धत्वात् नुणि क्रते तस्यापि धात्ववयवत्वात् श्नौ परे तत्सहितयोरादेश। क्रणोति इति ष्टृ र्ण इति णत्वम्। अक्रखीदित्यादौ नकारस्य दन्त्यत्वेन झसत्वाभावात् तस्मिन् झोर्नुरित्यनेनानुस्वारो न स्यात् ष्टृ र्ण इति णत्वम्। देभतुरिति स्यात् ठग्रपिदिति कित्त्वपक्षे नलोपे दभभागत्वाभात् खि-त्वादि ॥ ७४९ ॥

एभ्यस्थप् कित् वेति क्रतेऽपीष्टसिद्धौ थपि नलोप इति गौरवम् कथमिति चेन्न दम्भिकनीदे इति इदनुबन्धचुरादेर्ञेरनित्यपक्षे देभिथ इत्यत्र थप किद्वेति पक्षे इदि-त्त्वातोर्नलोपनिषेधात् हस्तुङ न इत्यस्याप्राप्तौ चुरादेर्ञेरनित्यत्ववीज चुभ्यौ ञिरित्यत्र इष्ट स्पष्टार्थम्। श्रेथिथ शश्रन्थिथ ग्रेथिथ जग्रन्थिथ देभिथ ददम्भिथ ॥ ७५० ॥

इति स्वादिपाद.।

## चतुर्थः पादः—तुदादिः ।

[२५१] तुदौ ञ श व्यथे । तुदति तुदते ।

[२५२] भ्रस्जौ ञ श पाके । भृज्जति अभ्राक्षीत् ।

### ७५१ । भ्रस्जोऽरे णौ भर्ज वा ।

भ्रस्ज ६।, अरे ७।, णौ ७।, भर्ज ।१।, वा ।१। ।

बभर्ज बभ्रज्ज बभर्ज्जे बभ्रज्जे ।

[२५३] मुच लौ ञ श प मोक्षे ।

[७४१] नुण् रध इति नुण् । मुञ्चति । अमुचत्, अमुक्त ।

[२५४] ञि लिपौ ञ श प लेपने ।

अलिपत् । अलिपत अलिप्त । [२५५] षिचौ ञ श प उक्षणे ।

निषिञ्चति । न्यषिचत्, न्यषिचत न्यषिक्त । निषिषेच ।

[२५६] कृतौ शप छिदि ।

[७३८] नृत्कृदितीम् वा, कर्त्तिष्यति कर्त्स्यति ।

[२५७] यू श चेपे । विधुवति व्यधावीत् ।

[२५८] व्रश्चू श च्छेदे ।

वृश्चति । अव्रश्चीत् अव्राक्षीत् । वव्रश्च वव्रश्चतुः ।

---

तुदतात्यादि शप्रत्ययस्य ङित्वात् न गुण. । भृज्जतीति ग्रहस्वपाद्योरिति जिः अभ्राक्षीदिति स्यादे सलोपे भ्रस्जाजेति षङि षढोः क. सि अनिमत्वाद् वृद्धि ॥७५०॥

भ्रस्जो भर्ज वा स्यात् अरे गुणसाधनयोग्ये । भ्रस्जधातो परेऽप्रत्यये जाते गुणिनो रस्यासम्भवात् एव णौ इत्युक्तेऽपि अरप्राप्तौ अरे इत्युक्त ज्ञापयति क्वचित् अरे गुणिन्यपि भर्जादेशो न स्यादिति तेन ट्याम् अभ्राक्षीदित्यादिकमेव । बभर्ज इति ठ्या एकारस्य स्यात् ठ्यपित् किद् इति कित्वाभावपक्षे गुणसाधनयोग्यत्वे सति भर्जादेश पक्षे बभर्ज्जे कित्वेऽपि ठ्या नवे प्रच्छामिति जेर्निषेध. । मुञ्चतीति मुचादित्वात् नुण् । अमुचदिति ऌदित्वात् ङः । अमुक्तेति आत्मनेपदे ङस्याप्राप्तौ सि. । औदित्वादिमोऽभावे इगुङ्करिति सेः कित्वान्न गुण. तत सेर्लोप ।

[ २५९ ] ऋच्छश गमनमोहकाठिन्येषु।

**७५२। ऋच्छो गुण्ठ्राम्।**

ऋच्छ ६।, गुः १।, ठ्राम् ७।

आनर्च्छ। [ २६० ] कॄश विक्षेपे। [ ६२८ ] ऋदिरणाविति इर्। किरति। चकरतुः। करीता करिता।

**७५३। प्रत्युपोपात्कः सुम् हिंसाच्छेदे।**

प्रति उप उपात् ५।, क ६।, सुम् ।१।, हिंसा च्छेदे ७।

प्रत्युपाद्धिंसायाम् उपाच्छेदे किरतेः सुम् स्यात्। प्रतिस्किरति उपस्किरति।

---

अलिपदिति वक्ष्यस्येति ङ। अलिपत अलिप्तेति लिब्भ्यस्तु मे इति वा ङ। निषिञ्चति इति मुचादित्वात् नुण् गीक इति षत्वम्। न्यषिचतेति लिब्भ्यस्तु मे इति ङी वा निषिषेच दशस्यादेरिति षत्वम्। विषुवति इति गीक इति षत्व ञुव्वोरित्युव्। व्यषावीदिति वेमूदित्यत्र सूतिसूयग्रहणात् अस्मान्नित्यमिम्। व्रश्चीति ग्रहस्वपाद्योरिति जि। अव्राचीदिति इमोऽभावपक्षे शच्छ्राजेति षडि निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायात् चकारनिमित्तकस्य शस्य पुनर्दन्त्यत्वे स्यादे सोलोप षढो क से इति कै क्लिन्नादिति षत्वे अनिमत्वात् वृद्धि। वव्रश्चतुरिति ठ्रा नवेप्रच्छाम् इति जेर्निषेध ॥ ७५१ ॥

ऋच्छो गु स्यात् ठ्राम्। सर्वत्र णपादौ बलवत्त्वादादौ क्वोऽच इति द्विर्भावे लघूङोऽभावात् अतुसादेश्च कित्त्वादप्राप्तौ ठौमात्रविधिरयम्। न च प्रकृते पूर्वं पूर्वं स्यात् अन्तरङ्गतर तथा इति न्यायात् गुणस्यैव बलवत्त्वमिति वाच्यम्। विच्छायति इत्यत्र गुणादपि विशेषत्वेन द्विर्भावस्य बलवत्त्वदर्शनात्। आनर्च्छ आनर्च्छतु आनर्च्छुरित्यादि। चकरतुरिति ऋतो गु कित् ठ्राम् इति गुण। करीतेति वॄतीवेमोर्घोऽठीति वा दीर्घ ॥ ७५२ ॥

प्रतिश्च उपश्च प्रत्युप प्रत्युपश्च उपश्च प्रत्युपोप तस्मात्। हिंसा च छेदश्च हिंसाच्छेदं तस्मिन्। प्रतिस्किरति हिनस्तीत्यर्थ। परि नि वि सेवसुमेति उक्तेर्न ष, उपस्किरति हिनस्ति छिनत्ति वेत्यर्थ, ॥ ७५३ ॥

[ २६१ ] ऋन्प श प्रीणने।

७५४। ऋन्पां न-लुक् वा श-णौ।

ऋन्पा ६॥, न ।१। लुक् ।१।, वा ।१।, श-णौ ७।

ऋन्प तुन्प ऋन्फ तुन्फ रिन्फ गुन्फ ऋन्भ उन्भ शुन्भां नकारस्य लुक् वा स्यात् शे णौ च। ऋपति ऋम्पति [२६२] चृती श प हिंसे। चर्त्तिष्यति चर्त्स्यति। [२६३] प्रच्छौ श ज्ञीप्से। पृच्छति। अप्राक्षीत्। पप्रच्छ पप्रच्छतुः।

[ २६४ ] सृजौ श विसर्गे।

अस्राक्षीत्। ससर्जिथ सस्रष्ठ। [२६५] टु मस्जौ श स्नाने। मज्जति अमाङ्क्षीत्। [ २६६ ] स्पृशौ श स्पर्शे। अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। [ २६७ ] विच्छ श गतौ। विच्छायति विच्छति। अविच्छायीत् अविच्छीत्। [ २६८ ] मृशौ श स्पर्शे। अम्राक्षीत् अमार्क्षीत् अमृक्षत्।

[ २६९ ] इषु श वाञ्छे।

इच्छति [ ६०६ ] वेमसहेतीम् वा, एषिता एष्टा।

---

बहुवचन गणार्थं गणश्च। ऋन्पतिस्ऋन्फतिश्चैव तुन्फतिस्तुम्फतिस्तथा। गुम्फति-ऋन्फतिश्चैव रिन्फति. शुन्भतिस्तथा। उन्भतिश्चैव विज्ञेयस्तृन्पादिर्नवभिर्गण। एषां नस्य लुक् स्याद्वा शप्रत्यये परे गुणसाधनयोग्यप्रत्यये परे च इत्यर्थः। शे यथा ऋपति ऋम्पति ऋफति ऋम्फति तुपति तुम्पति तुफति तुम्फति गुफति गुम्फति ऋफति ऋम्फति रिफति रिम्फति शुभति शुम्भति उभति उम्भति। णौ यथा तर्पयति ऋम्पयति तर्फयति ऋम्फयति तोपयति तुम्पयति गोफयति गुम्फयति दर्फयति ऋम्फयति रेफयति रिम्फयति शोभयति शुम्भयति ओभयति उम्भयति। गवि कर्त्तरि प्रात्तुन्-पते सुम्वक्तव्यः। प्रस्तुम्पति गौ। अन्यत्र प्रतुम्पति अश्व। पृच्छतीति ग्रहस्वपाद्यो-रिति जिः। अप्राक्षीदिति शक्लाजेति षङि षढो कः सि कै अनिमत्वात् वृद्धि। पप्रच्छतुरिति ठ्रा नवेप्रच्छाम् इति जेर्निषेधः। अस्राक्षीदिति सृजदृशोस्तु नित्यमिति ऋद्र.। ततो वृद्धि.। ससर्जिथ इत्यादि सृजदृशेति वेम्। अमाङ्क्षीदिति नुर्ण रध.

[ २७० ] कुट शि कौटिल्ये ।

## ७५५ । कुटां णुव्री ञ्णिति ।

कुटा ६॥, णु-व्री १॥, ञ्णिति ७। ।

**कुटादेर्णुर्व्रिश्च स्यात् ञिति णिति च, नान्यत्र । अकुटीत् चुकोट । [ २७१ ] व्यच शि व्याजे ।**

**विचति । विव्याच, विविचतुः ।**

---

इति नुण् स्यादे सोलोप चुड्डिति कुङि नस्यानुस्वारे जपे ञमौ । असाची-दित्यादि ह्मयन्तक्षणश्वसेति सिचीं वद्दोऽकिदिति व्रद्धी वा सेरप्रासौ सक् । विच्छा-यतीत्यादि विच्छास्तुतिपण इति वाय । आयान्तत्वात् सनञ्ञादिर्धुः पुनर्धातु-सज्ञायां तिप्शपौ आयस्याप्राप्तिपक्षे श एव । तेन विच्छायन्तो कुले स्त्री वा इत्यत्र अपयन इति नुण् । विच्छती विच्छन्ती कुले स्त्री वेत्यत्र आदीपोरिति नुण् वा । असाचीदित्यादि पूर्ववत् इच्छतीति स्यादानेति इच्छादेश ॥ ७५४ ॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य ञ्णित् तस्मिन् । ञित्णितोः परयो' गुणवृद्धी सिद्धौ पुनर्विधान नियमार्थम् । तेन कुटादीनां ञित्णिद्भ्याम् अन्यत्र गुणवृद्धी न स्त. इति नियम । ञित्णितोस्तु गुणसामग्र्या गुणः वृद्धिसामग्र्या वृद्धि स्यादित्यर्थ' । यथा कुट शि कौटिल्ये इत्यादीना अकुटीत् कुटिष्यति कुटन-मित्यादौ न गुण' । नू शि स्तवने इत्यादोनाम् अनुवीदित्यादौ न वृद्धिर्न च गुण । अगुणत्वादुव् च । एव नुविष्यति नुवनमित्यादौ च बोध्यम् । ञित्णितोस्तु कोटयति चुकोट इत्यादौ गुण एव । नावयति नुनाव इत्यादौ वृद्धिरेव । कुटा-दिश्च छुटि घुटि चुटि तुटि पुटति च्छुटयस्तुटि मुटि लुठि कुडति गुडयः घुडि चुडि तुडि थुडि भ्रुडति द्रुडय' स्फुडि वुडि लुडति स्थुडति स्फुडयः । व्यचशि-व्याजे कुचि भुजि हुडयः चुलि गुरति च्छुरति पुडि ब्रुडय' । स्फुरति स्फुलती क्रुड क्रुडि रुफयः । धूगूनूदीर्घा. सकला: कुवतिर्गुवतिर्धुवतिश्चैते ह्रस्वान्ता इति धीरो-ब्रूते । द्वाचत्वारिंशत्सख्याता धातव एव कुटादावुदिता: । लिखतिर्मिलति-र्नोविह कश्चित् व्यस्यातामिति वदति विपश्चित् । तेन लिखितु' विश्वसृजोऽपि अक्तिद्दानिरित्यादि एव लिखन लेखन लिखितव्य लेखितव्यम् इत्यादय: प्रयोगा: । एवं मिलिष्यति । महापातकिन: मयामिलितव्य न ते, सह इत्यादि । एवञ्च

## ७५६ । व्यचो जिरञ्णिदसि ।

व्यच ६।, जि. १।, अञ्णिदसि ७।

विचिता । [ २७२ ] त्रुट शि च्छेदे । त्रुट्यति त्रुटति । [ २७३ ] स्फुर शि स्फूर्त्तौ । निष्फुरति निस्फुरति । एवं [ २७४ ] स्फुल शि स्फूर्त्तिं चलनयोः । [ १७५ ] नू शि स्तवने । अनुवीत् । नुनाव । [ २७६ ] मृ ङ श मृतौ ।

## ७५७ । मृङष्टीढ्ये मम् ।

मृङ ५।, टीढ्ये ७।, मम् १।

व्या व्यामत्ये च मृङो म स्यात् । [ ६२० ] ऋद्रिः शयक् टौपे । म्रियते, अमृत, मृषीष्ट । एषु किम् । ममार, मरिष्यति ।

---

व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीर इति जयदेव । विचतीति ग्रहस्वपाद्योरिति जि विविचतुरिति व्ययग्रहेति खेजिं. ग्रहस्वपाद्योरिति मूलस्य जि' ॥७५५॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् । ञ्णिच्च अस् च ञ्णिदस् तस्मिन् । व्यचो जि. स्यात् न तु ञिति णिति असि च । विचिता विचिष्यति विच्यते विव्याच विविचतु. । ञ्णिदसि तु व्याचयति व्याचक. उरुव्यचा' त्रुट्यतीति क्रमक्लमेति श्यन् वा । निष्फुरति विष्कुभ्नेति षत्वं वा । अनुवीदिति कुटादित्वात् गुणवृद्ध्योर्निषेधेस्नुव्योरित्युव् ॥७५६॥

टी च ढी च अश्च टीढ्यं तस्मिन् विषयसप्तमीयम् । मृङो ङित्त्वेऽपि व्या व्याम् अत्ये च विषये म स्यादिति नियम । म्रियते म्रियेत अमृत मृषीष्ट अन्यत्र ममार मर्त्ता मरिष्यति अमरिष्यत् केचित्तु मृङो ङानुबन्धाभावेऽपि टीढ्ये मविधानादन्यत्र परस्मैपदे सिद्धे ङित्करणादात्मनेपदस्य प्राप्तौ परस्मैपद कुत्रचिद्भवति । आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदिति न्यायो लभ्यते तेन स एवाय नागः सहति कलभेभ्यः परिभवमिति । विद्या धन मनुष्याणा मृतेऽप्यनुगच्छते इत्यादि सिद्धमित्याहु. ॥७५७॥

[ २७७ ] ओ विजी ङ श भी-कम्पे।

७५८। विजेर्णुर्नेमि।

विजि ६।, णु १।, न ।१।, इमि ७।।

विजेर्णुः न स्यात् इमि। अविजिष्ट।

इति तुदादिपादः।

इति प्रथम चतुर्गणाध्यायः।

---

अथ द्वितीय चतुर्गणाध्यायः।

प्रथमः पादः—रुधादिः।

[ २७८ ] रुधिरी ध ञि आवरणे। रुणद्धि।

७५९। नणो न्रेऽणौ।

नण ६।, न् ।१।, रे ७।, अणौ ७।।

नणो नकारः स्यात् अणौ रे। रुन्धः रुन्धन्ति। अरुणत्, अरुणः अरुणत्। अरुधत् अरौत्सीत्। [ २७९ ] छृ दु ञ धिर् दीप्तिदेवने। [ ७३९ ] छर्दिष्यति छर्त्स्यति। एव [२८०] तृदु ञ धिर्नादरे।

---

इति प्रथम चतुर्गणाध्याय।

विजे किटिमित्यनेनैवेष्टसिद्धौ णुर्नेमीति गौरव स्पष्टार्थम्। अविजिष्ट विजिष्यते विजिता ॥७५८॥

इति तुदादिपाद।

---

रुणद्धीति रुध तिप् नण् ढभात्तथोर्गिति तस्य धे झप्झसौरिति धस्य दः ष्रुणे इति णत्वम्।

अरे नणोऽसम्भवात् रे इति स्पष्टार्थम्। रुन्ध इत्यादौ दकारस्य वा लोप। इति पूर्वमुक्त वर्याणामेकवर्ग्याणा मध्यमस्तत्र लुप्यते इति प्रमाणात्। णत्वाभाव-बीजन्तु ष्रुणे इत्यत्र लिखितम्। अरुणदित्यादि हसाङ्गामिति सेर्लोपे झप्झसो-रिति धस्य तो दौ वा। पक्षे ध्यां सौ रवादधोरिति धस्य रेफे रेफस्य विसर्ग.। उभयत्र ष्रुणे इति णत्वम्। अरुधदित्यादि इरित्त्वात् ङी वा। पक्षे ध्या सौ औदित्वान्नेम् अनिमत्त्वात् वृद्धि.। छर्दिष्यतीति वृतक्लृदितीम् वा ॥७५९॥

[ २८१ ] तृह्, ध हिंसे ।

७६० । तृहः इण् पिद्धसे ।

तृह ६।, इण् ।१।, पित् हस् रे ७। ।

तृहो नण इण् स्यात् पिति हसे रे । तृणेढि तृण्ढः तृंहन्ति । अतर्हीत् अतृक्षत् ।

[ २८२ ] हिंसि ध कि हिंसे ।

७६१ । नणो न लोप्यः ।

नण ५।, न ।१।, लोप्य १। ।

हिनस्ति [२८३] अन्जूध जि व्यक्ति गति म्रक्षणे । अनक्ति ।

७६२ । अञ्जः सेरिम्पे ।

अन्ज ५।, से ६।, इम् ।१।, पे ७। ।

अन्जः परस्य से इम् स्यात् पे । आञ्जीत् आनञ्ज ।

[ २८४ ] जि इन्धी ङ ध दीप्तौ । इन्धाञ्चक्रे ।

इति रुधादिपादः ।

---

पिच्चासौ हस् चासौ रश्चेति पिद्धस तस्मिन् । अत्राप्यरे नणोऽसम्भवात् रे इति स्पष्टार्थम् । तृणेढीति तृह हिंसे तिप् नण् अनेन नणोऽन्त्याच्च पर इण् तृणेहि इति स्थिते हो ढो धो ढभात्थो ष्टुभिरिति ढ्रोढ्रींति । तृण्ढ इति नणोर्न्रेऽणो इति नकारे ष्टुभिरिति णत्वम् । अतर्हीदिति नित्यमिम् । अस्योदित्त्व तुदादिष्वेव एव न रुधादिपक्षे अतएव कातन्त्रगणे रुधादौ तृहहिंसि हिंसाया इति तुदादौ तु तृ ह् ङ् तृह तृनह् हिंसार्थां इति । कविकल्पद्रुमे तृहधू तृणह्य हिंसे इति रुधादिपक्षेऽप्यूदनुबन्ध केषाञ्चिदनुरोधात् ॥७६०॥

ननो न परो नकारो लोप्य स्यात् । हिंसि ध कि हिंसे हिनस्ति एव भञ्जधौ भनक्ति उन्दधौ उनत्ति अञ्जूधजि अनक्ति ॥७६१॥

ऊदित्त्वादिमत्वे नित्यार्थं विधानम् आञ्जीत् से अन्यत्र अञ्जिष्यति अङ्क्ष्यति अञ्जिता अङ्क्ता आनञ्जेति स्वान्तादादीति खेरान् । इन्धीजिधङ इन्धे इन्धाञ्चक्रे इति विजादीत्याम् ॥७६२॥

## द्वितीयः पादः—तनादिः ।

[ २८५ ] तनु ञ द विस्तृतौ ।

तनोति तनुतः तन्वन्ति, तन्वः तनुवः तन्मः तनुमः ।

### ७६३ । सेर्लुक् त-थासो स्तन्भ्योऽकुर्वा ।

से ६।, लुक् ।१।, त-थासो ७॥, तन्भ्य ५॥।, अकु ५।, वा ।१। ।

क्ववर्जात् तनादेः सेर्लुक् स्यात् वा त-थासोः परयोः । अतत अतनिष्ट, अतथाः अतनिष्ठाः । [ २८६ ] षनु ञ द दाने ।

सनोति । असात असनिष्ट, असाथाः असनिष्ठाः । सायात् सन्यात् ।

[ २८७ ] क्षणु ञ द वधे । अक्षणीत् ।

[ २८८ ] क्षिणु ञ द हिंसायाम् ।

### ७६४ । नोप्युङो णुर्वाल्वृतः ।

न ।१।, उपि ७।, उङ ६।, णु १।, वा ।१।, तु ।१।, ऋत ६। ।

क्षिणोति । [२८९] ऋणु ञ द गतौ । ऋणोति अर्णोति ।

[ २९० ] डु कृ ञ द करणे । करोति ।

---

तनोति इति तन्भ्य मुमेघे इति मुप् तन्व इत्यादौ नुपोऽस्यस्येति उकार-लोपो वा ।

तश्च थास् च तथासौ तयो । थास् साहचर्य्यात् तकार आत्मनेपदस्यैव ग्राह्य । अन्यथा तकारमात्रप्राप्तौ परस्मैपदस्य ता त त एषु अतानिष्टाम् अतानिष्टम् अतानिष्ट एष्वपि प्रसक्तं । किञ्च तयोरित्युक्तावपि थकारसाहचर्य्यात् आत्मनेपदीयतकारस्यैव प्राप्तौ थास् ग्रहण स्पष्टार्थम् । अतत इत्यादि सेर्लुकि वनतनाद्यनिमा ञम् लोप । लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायात् गुणि सौ परे विहितस्य कार्य्यस्य निषेधेऽगुणिनोस्तथासो परयो. ञम्लोप । अकु. किम् । अकृत अकृथा उभयत्र इगुङ्मंढोसे ञित्त्वात् गुणाभावे झसस्यादिति सेर्लोप । असातेत्यादि सेर्लुकि खनसनजनामिति ङा । पक्षे सेरिम् । अक्षणीदिति ह्मसादेः सेम इत्यत्र क्षणवर्जनात् न त्रिः ॥७६३॥

## ७६५। कुरुव्लोपो म्वेर।

कु ५।, उव्-लोप. १।, म्वेर ७।।

कुर्वं. कुर्मः, कुर्य्यात्। चक्रव।

## ७६६। सम्परेः सुमुपात्तु भूषा-सङ्घ-प्रतियत्नविकृताध्याहारे।

सम्-परे ५।, सुम्।१।, उपात् ५।, तु।१।, भूषा-सङ्घ-प्रतियत्न विकृताध्याहारे ७।।

आभ्या कृञः सुम् स्यात् उपात्तु भूषादावर्थे। संस्करोति, समस्कृषाता, सञ्चस्करिथ, सञ्चस्करिव, संस्क्रियात् सस्कृषीष्ट। परिष्करोति पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् उपस्करोति।

---

उपि परे उङो गर्न्न स्यात् उङ ऋकारस्य तु वा। यथा चिण दु ञ वधे चिणोति ऋतस्तु ऋणदु ञ गतौ ऋणोति अर्णोति घृणदु ञ दीप्तौ घृणोति घर्णोति तृण दुञ भचे तृणोति तर्णोति। उङ. किं करोति॥ ७६४॥

म च व च य च म्वय तस्मिन्। कृञ परस्य उपो लोप. स्यात् मे वे ये च। कुर्व इत्यादि वमयेषु उपो लोप। व्यंनच्‌तयोक इत्यत्र कुर्‌वर्ज्जनात् न दीर्घ.। करोमीत्यत्र स्वरादेशस्य बलवत्त्वात् गुण एव। चक्रवेति नेमसुमिति निषेधात् नेम्॥ ७६५॥

सम् परिभ्या कृञ सुम् स्यात्। अर्थानभिधानेऽपि भूषण एव कातन्त्रसचिन्नसारैकवाक्यत्वात्। भूषणादन्यत्र सकरोति परिकरोति। उपात् तु भूषणादौ भूषणमङ्गलकरण सङ्घ समूह। प्रतियत्नो गुणान्तराधान विकृत स्वरूपस्यान्यथात्वम् अध्याहारो वाक्यस्य श्रुताकाङ्क्षितशब्दोपादानम्। समस्कृषाताम् इति स्यादृद्द्विन्त्यत्र स्कृवर्ज्जनान्न वेम्। इगुङ्कुर्मठौति से किल्वान्न गुण.। सञ्चस्करियेति नेमृतस्थप इत्यत्र स्कृवर्ज्जनादिम्। सस्क्रियादिति स्यादृत्तुंग्रत इत्यत्र स्कृसुष्म्यामेवेति उक्ते गुणनिषेध ऋद्रि श्रयकठौपे इति रि। सस्कृषीष्टेति इगुङ्कुर्मठौति से. किल्वात न गुण। परिष्करोति इति परिनिविसेवेति षत्वम्। पर्य्यष्कार्षीदित्यादि निविपरिस्वन्जेति वा षत्वम्॥ ७६६॥

**७६७। हस्ते पाणौ प्राध्वं जीविकोपनिषदौ व्यस्य कृञि स-स्तिरो मध्ये पदे निवचने मनस्युरस्युपाजेऽन्वाजे साक्षादादेस्तु वा।**

हस्ते उपनिषद ६।, व्यस्य ६।, कृञि ७।, स १।, तिरस्—साक्षादादेः ६।, तु ।१।, वा ।१। ।

**हस्तेकरोति, तिरस्करोति करोति-तिरः।**

**इति तनादि पादः।**

---

## तृतीयः पादः—क्र्यादिः।

---

**[ २८१ ] ड् क्री ञ ग द्रव्यविपर्य्यये।**

**क्रीणाति। [७८१] श्नाद्यगोरिति क्रीणन्ति।**

**[ २८२ ] स्कु, ञ ग न उद्धृतौ।**

---

हस्ते इत्यादिरुपनिषदन्तस्याऽव्ययस्य कृञधातौ परदे नित्य समास स्यात् तिर-प्रभृतेस्तु वा। समासोऽप्येकपदीभावमात्रम्। न तु द्वन्द्वादिरेकतम। समास-करणञ्च पूर्वनिपातनियमार्थं क्त्वाचो यवर्थञ्च। हस्ते पाणौ स्वीकारे। हस्तेकृत्य स्वीकृत्य इत्यर्थ। ता हस्तेकृत्यमास्वसीगिति भट्टि। प्राध्व बन्धनानुकूल्ये प्राध्व कृत्य। जीविकोपनिषदौ उपमायाम्। जीविकाकृत्य जीविकामिव कृत्वा इत्यर्थ। तिरोऽन्तर्द्धाने तिरस्कृत्य। उरसि मनसि मध्ये पदे निवचने इति पञ्चानुपश्लेषे उरसिकृत्य उरसिकृत्वा। अनुपश्लेष इति किम्। उरसिकृत्वा हस्त शेते पदे कृत्वा शिर शेते श्वा। उपाजे अन्वाजे दुर्बलस्य बलाधानार्थे साक्षादादेरभूत तद्भावे। साक्षात्कृत्वा साक्षात्कृत्य। साक्षादादिस्तु साक्षात् मिथ्या आस्था श्रद्धा अन्तर्द्धा प्रभाऽचला चिन्ता प्रमा प्रजा विजा रुजा रुहा सशय्या नमस् आविस् प्रादुस् बहिस् इत्यष्टादश। अग्नौ वशे विकल्पने विहसने प्रपतनेऽर्थे इत्या-दीनामपि वा समासमिच्छन्ति जौमरा.। वशेकृत्य दशग्रीव मोदस्व वरमन्दिरे इति भट्टि॥ ७६७॥

७६८। स्कु स्कन्भु स्कुन्भु स्तन्भु स्तुन्भुभ्यः श्नुश्नौ घे रे।

स्कु—स्तुन्भुभ्य ५॥, श्नु श्नौ १॥, घे ७।, रे।।

एभ्यो घेऽर्थे श्नुः श्ना च स्यात् रे परे। स्कुनोति स्कुनाति, विस्कभ्नोति [॰६२५] विस्कभ्नोति षः विष्कभ्नाति। एव विस्कुभ्नाति विस्कुभ्नोति, विष्टभ्नाति विष्टभ्नोति, व्यष्टभत् व्यष्टभ्नोत् वितष्टम्भ। स्तुभ्नोति स्तुभ्नाति। [२८३] मी ञ ग बधे। [७४५] मिम्योरिति ङा, अमासीत् अमास्त।

[२८४] पू ञ गि शोधने।

७६९। प्वादेः स्वो ने त्र्यादेस्तु वा।

पू आदे ६।, स्व १।, ने ७।, त्री आदे ६।, तु।१।, वा।१।।

प्वादोना स्वः स्यात् ना त्ये परे त्र्यादेस्तु वा। पुनाति।

[२८५] कॄ ञ गि हिंसे।

अकरीष्ट अकरिष्ट अकीर्ष्ट। करिषीष्ट कीर्षीष्ट।

[२८६] धू ञ गि कम्पे। धुनाति। अधावीत् अधीषीत्।

[२८७] ग्रह ञ ग आदाने। गृह्णाति।

---

स्कु ग्र अुडृतौ स्तन्भु स्कन्भु स्कुन्भु ग्र रोधने इति चत्वार सौत्रा। यः पूर्वधातुपाठे न दृश्यते सूत्रे दृश्यते स सौत्र। विस्कभ्नातीत्यादि विस्कभ्नानिर्वेति सूत्रे श्नाप्रत्ययस्य ग्रहणात् विस्कुभ्नोतीत्यत्र न षत्वम्। विष्टभ्नातीत्यादि उभयत्र गोक इति षत्वम्। व्यष्टभदित्यादि। श्वासलिदद्युदिति ङीवा उभयत्राप्यपीति षत्वम्। वितष्टम्भेति दन्त्यस्यादेरिति खिव्यवधाने षत्वम्। प्रमीणातीति णादिद्वन्मीनेति णत्वम् ॥७६८॥

ने श्नाप्रत्यये परे इत्यर्थ। प्वादिस्तु पूञगि शोधे लूञगि छेदे कॄञगि हिंसे, स्तॄञाच्छादे, धूञगि कम्पे, वृगिञ वरणे, शॄगि स्तॄगि व्याप्तौ हनने। मॄगितु धातु कथितौ ह्रुस्वा पॄगितु रचे पूरणकृत्याम्। वॄगि ञौगितु विदितौ ह्रुस्वां दॄगि विदारे

## ७७० । हसान्नानो ह्नौ ।

हसात् ५।, ना ।१।, आन १।, ह्नौ ७ ।

हसात् परो ना आन स्यात् ह्नौ परे । गृहाण । अग्रहीत् । जग्राह जगृहतु जग्रहिथ ।

## ७७१ । ग्रहेरिमो घेंऽव्याम् ।

ग्रहे ५।, इम ६।, घें १।, अव्याम् ७। ।

ग्रहेः परस्य इमो घें स्यात् न तु व्याम् । ग्रहीता ।

[ २९८ ] शॄ ञ गि हिंसे ।

## ७७२ । शॄ पॄ द्रां स्वो वा कित् व्याम् ।

श पॄ द्रा ६।, स्व १।, वा ।१।, कित् व्याम् ७। ।

एषां स्वः स्यात् किति व्या वा । शश्रतु शशरतुः ।

---

नगितु नीत्या भॄगितु भर्त्से जॄ वृद्धत्वे गॄगितु शब्दे ज्यागि जीर्णत्वे रीगि रेषणगत्यो-ऋ गिगत्या लीगि ल्वीगि श्लेषणकृत्या व्रीगगि वरणे ल्वीगगि गत्या भ्रीगगि धातु कथितो भत्याम् । पञ्चाधिकविंशतिरिति गदिता प्वादिगणे धातव इह विदिता । इति । शेषास्त्रयो न प्वादय इति दुर्गसिंह । प्वादय इति जैनेन्द्रा । उभयानुरोधात् त्र्यादेर्विकल्प. । ज्यागि जरायां इत्यस्य प्वादिफलन्तु जीन जीनवानित्यत्र ल्वादित्वात् तस्य न । क्वचिन्नाप्रत्ययस्यापि ह्रस्व इति वररुचि । स्मरणात् पुनते पाप-धारणात् पूर्वसञ्चितम् । दर्शनात् लभते मोक्षमेतद्योगस्य लक्षणमिति प्रयोग । अकरीष्टेत्यादि स्यादृवृद्दॄङ्भ्यविति इम् पक्षे वृतोवेम इति वा दीर्घं । इगु ड्वृगिति ने कित्त्वे ऋकारस्य इर्व्यंनच्तयोति दीर्घं । अधावीदित्यादि वेसूटिटितोम् वा ॥७६९॥

ना आन इति चोभय लुप्तप्रथमैक सूत्रत्वात् सिलुक् । गृहाणेति ग्रहस्वपाद्यो-रति जि । आने कने अकाराद्दीर्घ । एव पुषाण मुषाण इत्यादि । हसात किं जानीहि । अग्रहीदिति हान्तत्वात् न व्रि । जगृहुरिति ग्रहस्वपाद्योरिति र्जि ॥७७०॥

ग्रहीता ग्रहीतुम् । व्यान्तु जग्रहिथ जगृहिव ॥७७१॥

एवं ( २९९-३०० ) अि पॄ गि पालने, दॄ गि विदारे।

( ३०१ ) ज्या गि जरायाम्। जिनाति जिज्यौ।

( ३०२ ) व्री गि वृत्याम्। व्रिणाति व्रीणाति।

( ३०३ ) ज्ञा ग बोधे। जानाति। ( ३०४ ) श्रन्थ ग मोचे।

श्रथ्नाति। श्रेथतु: शश्रन्थतु: श्रेथिथ शश्रन्थिथ।

एव ( ३०५ ) ग्रन्थ ग गर्भे। ( ३०६ ) कुष ग निष्कोषे।

( ५७३ ) वेमूदितीम् वा, निरकोषीत् निरकुचत्।

( ३०७ ) अश ग भोजने। अशिता अष्टा।

( ३०८ ) वृङ ञ ग वरणे।

अवरीष्ट अवरिष्ट अवृत। वव्रुषे। वरिषीष्ट वृषीष्ट।

इति क्र्यादिपाद:।

---

शॄगि हिंसने, अिपॄगि पालने, दॄगि विदारे एषां स्व स्यादा किति व्रास्। शशरतुरिति ऋस्वाभावपक्षे ऋतो णु कित् ठ्ग्रामिति गुण एव पप्रतु पपरतु ददृतु ददरतु.। व्रिणातीत्यादि ग्रादेस्तु वेति वा ह्रस्व। जानातीति ज्ञादानेति जादेश। श्रथ्नातीति हसुङ्न इति न लोप। श्रेथतुरिति स्यात् ठ्ग्रपिदिति कित् पक्षे न लोप. खिलोपादिश्च। श्रेथिथेति श्रन्थग्रन्थदन्भामिति न लोपपक्षे खिलोपादि। निरकुचदिति वेमत्वादनिम् पक्षे हशष इति सक्। अष्टेत्यादि वेमूसहेतीम् वा। अवरीष्टेत्यादि स्याद्वॄदॄदु रिति इम् पक्षे वृतोवेम इति वा दीर्घ। अनिम् पक्षे इगुङुरिति से कित्त्वात् न गुण। वव्रुषे इति नेमसुमिति नेम्। वरिषीष्ट इत्यादि स्याद्वॄदॄदु रिति वेम् इगुङुरिति कित्त्वात् न गुण. ॥ ७७२ ॥

इति क्र्यादिपाद:।

## चतुर्थः पादः—चुरादिः ।

(३०९) चुर कि स्तेये ।

### ७७३ । चुर्भ्यो ञि वा ।

चुर्भ्य ५॥, ञि १।, वा ।१। ।

चुरादे ञिः स्यात् वा स्वार्थे । चोरयति चोरयते । अचूचुरत् । चोरयामास । चोर्य्यात् । पक्षे चोरति इत्यादि ।

---

वाशब्दस्य व्यवस्थावाचित्वात् चुरादिभ्यो ञिर्नित्यश्चुराद्यन्तर्गणाद् युजादेर्ञि र्वा स्यादित्यर्थः । यत्तु चुरधातोरपि पक्षे चोरतीत्याद्युदाहरणं तच्चुरादेर्ञेः कदाचिदनित्यत्वज्ञापनार्थम् । एतदेव काव्यकामधेनौ अक्लिक् लक्ष्मणीत्यत्र स्फुटीचकार वोपदेव । यथा सिद्धे नित्यणिजन्तत्वान्नित्यनुम्त्वे कितामिदित् । ञिजनित्यत्व बोधार्थं न दृष्टोऽनुम् विधिः क्वचिदिति । अस्यार्थः—किता कानुबन्धधातूना नित्य णिजन्तत्वान्नित्यनुमत्वेऽगुणपरत्वाभावान्नलोपाभावे नित्यनकारवत्त्वे सिद्धे इदित् इदनुबन्धकरणं णिचो ञेरनित्यत्वबोधार्थम् । किन्तु अनुम् विधिर्नोकाराभाव क्वचिदपि न दृष्ट इति । अनिर्दिष्टार्था प्रत्यया स्वार्थे भवन्तीति न्यायात् चुरादेः स्वार्थे ञि । चुरादिभ्यो ञेर्ञित्त्वेऽपि उभयपदं न स्यात् अन्यथा स्यमञक् वितर्के इत्यादेर्ञानुबन्धो व्यर्थः स्यात् । तेन ञितश्चुरादेरात्मनेपदं ञितश्चुरादेरुभयपदम् उभयभिन्नचुरादेः परस्मैपदमिति । एवमेव धातुप्रदीपादयः । यत्तु चोरयति चोरयते इत्युभयपदोदाहरणं तच्छात्रपारायणानुरोधार्थं कदाचित् प्रयुक्तस्यात्मनेपदस्य समाधानार्थञ्च यथा नालोकते यथेदानीं मामियं तेन तर्कये इति नैषधे । चोरयतीति चुर ञि गुणः धातुसञ्ज्ञाया तिप् शप् गुणः । अचूचुरदिति चोरि भागात् टौविभक्तेर्ढौ ञिश्रीत्यङ् चोरीत्यस्य द्वित्वे रेर्लोपः झभखथेति खेरोकारस्य उकारे जग्ध्युङः स्व इति मूलधातोरोकारस्य ह्रस्वे खे सन्वदिति खेरुकारस्य दीर्घे ञेर्लोपः । चोरयामासेति विंजादीत्याम् । चोर्य्यादिति क्या ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् गुणः ॥ ७७३ ॥

[ २१० ] कृत क संशब्दे ।

## ७७४ । कीर्त्तः कृतः ।

कीर्त्त १।, कृत ६।।

**कृतः कीर्त्तः स्यात् ञौ । कीर्त्तयति ।**

[ २११ ] गणत् क संख्याने ।

## ७७५ । हसाल्लोपोऽशित्यट् योः ।

हसात् ५।, लोप १।, अशिति ७।, अत्-यो ६॥ ।

**हसात् परयोः अकार-यकारयोर्लोपः स्यादशिति । गणयति ।**

---

कृत क संशब्दे इति धातु कीर्त्तं स्यात् संव । कीर्त्तादेशस्य सार्वविकत्वे कीर्त्तधातुपाठे नैवेष्टसिद्धौ कृतधातु पठित्वा कीर्त्तादेशविधानं ज्ञापयति क्वचित् कीर्त्तादेशो न स्यात् इति । तेन अचीकृतदिति । क्रमदीश्वरोऽप्येवम् ॥७७४॥

अत च य च अट्यौ तयो । अयोरिति लिपिकरप्रमादपाठ । अन्यथा इत् रहितेन अका सवर्णस्यावश्यग्राह्यत्वात् दास्यतीत्यादावाकारस्यापि लोपापत्तिः स्यात् । प्रकरणबलाद्धातुसञ्ज्ञकस्यैव अकार यकारयोर्लोप तेन हसतीत्यादौ न स्यात् । हसात् किं ? वीभूयिता अशिति किं ईर्ष्यति । अरे इत्यनेनैवेष्टसिद्धौ अशितीति गौरव कथमिति चेन्न मव्यवर्न्से इत्यस्य यङ् लुकि स्या याति परे ममव्यात् इत्यत्र यकारलोपानुपपत्ते । गणयतीति अकारलोपे लोपोऽप्यादेश उच्यते इति न्यायेन स्थानिवत्त्वात् न वृद्धि । एवं कुणल्काभाषमन्त्रयोरित्यादीनां कुणयतीत्यादौ न गुण । अतएव अल्लोऽपित्व स्थानिवत्त्व चादन्तत्वप्रयोजनम् । यत्र त्वे ते न विद्येते तत्राल्लोपविकल्पनम् । तद्बलादन्त्यदीर्घश्च पुक् चेत्यज्ञापयत्यत इति वोपदेवः । अस्यार्थं अल्लोपित्व स्थानिवत्त्वञ्चेति उभयमदन्तत्वप्रयोजनम् । यथा अल्लोपित्वेन अजगवेषदित्यादौ न ह्रस्व सन्वद्भावौ स्थानिवत्त्वान्न गुणवृद्धी कुणयति गणयतीत्यादि यत्र तु एते न विद्येते अल्लोपित्वस्थानिवत्त्वयो प्रयोजनं न सम्भवतीति तत्र धातौ तद्बलात् अदन्तत्वस्वीकारबलात् अल्लोपविकल्पनम् अकारस्य स्थितिपक्षे 'दीर्घश्च पुक् च' आदन्तत्वात् पण् च स्यादतोऽज्ञापयतीति सिद्धमिति केचित् । स्वमते तु अल्लोपित्वस्थानिवत्त्वयो. कार्य्यं येषु न स्यात् ते

## ७७६। वेङ्गणकथः खे ञ्‌ाङि।

वा ।१।, ईङ् ।१।, गण कथ ६।, खे ६।, ञ्‌ाङि ७।।

गणकथयोः खेरीङ् स्यात् वा ञ्‌ाङि। अजीगणत् अजगणत्।

[ ६३८ ] अल्लोपित्वात् न इः।

[ ३१२ ] कथत् क वाक्यप्रबन्धे अचीकथत् अचकथत्।

इति चुरादिपादः।

इति द्वितीयचतुर्गणाध्यायः।

---

धातवो हसन्ता एव मन्तव्या। तेन अङ्कापयतीति प्रयोग स्वमतविरुद्ध इति बोध्यम्। न च स्वमतविरुद्धाना कामधेनौ उपन्यासोऽपि विरुद्ध इति वाच्यम्। श्रष्टाना मतान्यालोक्य कर्त्तव्ये परमतोपन्यासेऽपि दोषाभावात्। अन्यथा कैश्चिदमन्यमानस्य कृञ् कृताविति भौवादिकस्यापि पाठो विरुद्ध स्यात्। किञ्च यदि तन्मतैकवाक्यता क्रियते तदा अल्लोपविकल्पोऽन्त्यदीर्घश्च मनीषादित्वात् साध्य। यथा अङ्क ञि अकारलोपे अङ्कि टीविभक्तेर्दि अङ् नकारजावनुस्वारपञ्चमौ झलि धातुषु इति ङस्य न प्रकृतिकत्वे स्यादौ नवद्र इति ङकार हित्वा कि इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारत्वे तस्य च ञत्वे आञ्चिकदिति अत हस्वसन्वद्भावयोरसम्भवात् नाल्लोपित्व गुणवृद्धीरसम्भवान्न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽप्यकारलोपस्य स्थानिवत्त्वं मन्वाना क इत्यस्य द्वित्वे अल्लोपित्वान्न सन्वत्कार्य्यमिति आञ्चकदित्युदाहरन्ति। अन्ये तु ङप्रकृति मन्वाना ङ्कि इत्यस्य द्वित्वे कस्य लोपे आङिङ्कदित्याहु। यकारलोपो यथा पापठ्य वावद्यादि यङन्तेभ्य ञ्स्याद इति ञप्रत्यये आदौ हसाल्लोप इत्यकारलोपे पुनस्तेनैव यकारलोपे पापचा वावदा इत्यादि ॥ ७७५ ॥

गणकथयोः खिः गणकथखिः तस्य ईङ् स्याद्वा ञे. परेऽङि ङित्वा दन्त्यस्य स्थाने ॥ ७७६ ॥

इति चुरादिपादः।

## प्रथमः पादः—ञ्यन्तः।

### ७११। ञिः प्रेरणे।

ञि १।, प्रेरणे ७।।

धो ञि स्यात् प्रेरणेऽर्थे। कुर्वन्तं प्रेरयति कारयति। अचीकरत्। अयायासत्, अडुढौकत्। अशूशवत् अशिश्वयत्। व्यतस्तम्भत्, पर्य्यसोषिवत्। [ ५७२ साङ्त्वात् न षः। अचीचकासत् अचचकासत्। औन्दिदत् औज्जिजत् आड्डिडत् आर्चिचत् अररम्भत् अललम्भत्। अजोहयत्, [७४८] अनङौत्युक्तेर्न घि.। अदिध्वनत् अध्वनयीत्, ऐलयीत् ऐलिलत्, आईयीत् आर्हिदत् औनयीत् औनिनत्।

---

प्रेरण त्वयैतत् क्रियतामिति क्रियासु नियोजनम्। यथा गुरुमन्न भोजयति भृत्य ग्राम गमयति शिशु शाययति। अचेतने तूपचार। यथा भोजनाभावो वायु वर्द्धयतीत्यादि। धोरिति व्याख्यान सर्वधातुप्राप्त्यर्थम्। तेन भवन्त प्रेरयति भावयति कामयमान प्रेरयति कामयति चिकित्सयति चोरयति चिकीर्षय-तीत्यादि। प्रेरण ञे परेऽपि ञि। यथा पिता पुत्रेण शिष्य वेद पाठयति अत एव पाठयतेरेव कर्त्ता न तु पठते तेन पुत्रस्य कर्मत्व न स्यात् ञित्वादुभयपद कारयति कारयते पूर्वसूत्रोक्तान्युदाहरति अचीकरदित्यादि। कुर्वन्त प्रैरिरत् इति ञौ अतएव औ द्वित्वे त्रिरिति वक्ष्यमाणनियमात् द्विर्भावात् पूर्व न हृद्धि। कृ इति स्थित धातुसज्ञाया दि. अमागम. ञिश्रीत्यङि कृ इति वर्णद्वयस्य द्वित्वे खेराद्यच इति इकारस्य लोपे भभखयेति ऋकारस्य अकारे ककारस्य चकारे ञ्चित्यन्ते जुडतीरिति वृद्धौ अद्युड. ख इति आकारस्य ह्रस्वे. खे. सन्वद्दौ इति सन्वत्त्वे स्यसेत्सनीति अकारस्य इकारे घोश्च खेर्हस्वादेर्घश्चेति दीर्घे

**७७८। स्मृदॄत्वरप्रथम्रदस्तॄस्पशोऽङ्खेञ्ञ्राङि चेष्टवेष्टो स्तु वा।**

स्मृ—स्पश' ६।, अङ्।१।, खे' ६।, ञ्राङि ७।, चेष्टवेष्टी' ६॥, तु।१।, वा।१।।

**एषा खेरङ् स्यात् ञ्राङि चेष्टवेष्टोस्तु वा। असस्मरत् अददरत् अतत्वरत् अपप्रथत् अमम्रदत् अतस्तरत् अपस्पशत् अचिचेष्टत् अचचेष्टत् अविवेष्टत् अववेष्टत्।**

---

ञे लोपे दस्य तकारो वा। एवं सर्वत्र। अशशासदिति ञ्राङ्ञ्राङे स्व इत्यत्र शासवर्जनान्न ह्रस्व। अडुढौकदिति ऋदिद्वर्जनात् न ह्रस्व। अशूशवदिति प्रागच्कार्य्यादिति नियमादादौ द्वित्वे श्वे र्जिर्वेत्यत्र वाशब्दस्य व्यवस्थया खेर्मूलस्य च जि ततो ह्रस्वादि पचे न जि। व्यतस्तम्भदिति गुरुधात्वच्चरपरत्वान्न सन्वद्भावादि साङत्वात् न ष। पर्य्यसीषिवदिति साङत्वात्पर्य्यादिनिमित्तक खे षत्व न स्यात् खिनिमित्तक मूलधातो षत्व क्विलादित्यनेन स्यादेवेति श्रीपतिदत्त। एव पर्य्यसीषहदित्यत्रापि बोध्यम्। अचचकासदित्यादि ऋदित्त्वादुङो ह्रस्वाभावे अनेकाचत्वात् सन्वद्भावादि विकल्प। औन्दिददित्यादि उन्दधो क्लेदे उब्ज श्यार्जवे अट्ड अभियोगे अर्चञ्च पूजे इति ञ्रन्ताना चतुर्णाम् उन्दि उब्जि अट्टि अर्चि इति स्थिते नाजन्तादेरिति आद्यच्चर द्वित्वा स्यादौ नवद्र इति न व द राश्च द्वित्वा दि जि डि चि एषा द्वित्वम्। अररम्भदित्यादि तुण् रध इति तुणि गुरुधात्वच्चरपरत्वात् न सन्वद्भावादि। अजीहयददिति ह्वेः खेरनङीत्यत्र अनङीतुक्तो नंषि। अध्वनयीदित्यादि मिध्वन रवे इलश अयी गतौ अर्दञ वधे ऊनत्क परिहाणे ण्यो ञ्रन्तेभ्य श्वि घेट ध्वन्य्यत्यर्दूनेस्तु वेति अङ् वा। पचे न्या सौ अङि श्विजागुन्त्रि रिति निषेधात् न त्रि ॥७७७॥

स्मृ स्मृतौ स्म्ॠ म औत्के इति द्वयम्। दॄयगि विदारे। ञित्वर षमङ स्वरे। प्रथमयङ् चीदे स्तृङगि छादने स्पशञ ग्रन्थवाधयो'। एषां सप्ताना खेरङ् विधानसामर्थ्यात् ख्यसेत्सनीति इ र्न स्यात्। घोश्च खेर्हसादे घंश्चेत्यपि न स्यात्। चेष्टवेष्टोस्तु खेरङोऽप्राप्तिपचे गुर्वच्चरपरत्वात् सन्वद्भावस्याप्राप्तौ तदेकयोगनिर्दिष्ट-त्वात् खेर्दीर्घोऽपि न स्यात् ॥७७८॥

**७७९ । भ्राज भ्रास भास भाष दीप जीव मील पीड़ कण वण भण श्रण लप लुप लुट हेठां वोङः स्वः ।**

भ्राज हेठा ६।॥, वा ।१।, उङ ६।, स्व १। ।

एषाम् उङः स्वः स्यात् वा ञग्डि । अबिभ्रजत् अबभ्राजत् ।

**७८० । वर्ट्टुङो धुः ।**

वा ।१।, ऋदुङ, ६।, धु १। ।

ऋदुङो धोर्धुरेव स्यात् वा ञग्डि । अवीवृतत् अववर्त्तत् ।

**७८१ । स्वपो जिः ।**

स्वप ६।, जि १। ।

स्वपो जि स्यात् ञग्डि । असूषुपत् ।

---

भ्राज ङ ण्ृ टु भासि । भ्रास ङृण्टु भासि दन्त्यान्तस्तालव्यान्तोऽपि । भास्ृ ङ दीप्तौ भाषङ्ऋ वाचि । दीपीङय्ृ दीपने । जीव ऋ प्राणे । मील्ऋ निमेषे । पीड्ृक वाधगाहे । कण्ृ आर्त्तस्वरे । ऋवण शब्दे ऋभण शब्दे । श्रण क दाने । लप भावे। लुप्ृ शप ऌ औ छेदे । ऋलुट्य विलोटविलोडयोः। हेठ्ृ ञ वाधेपोङ्शते । अबिभ्रजत् अबभ्राजत् अबिभ्रसत् अबभासत् अबीभसत् अबभसत् अबीभषत् अबभाषत् अदीदिपत् अदिदीपत् अजीजिवत् अजिजीवत अमीमिलत् अमिमीलत् अपीपिडत् अपिपीडत् अचीकणत् अचकाणत् अवीवणत् अववाणत् अबीभणत् अबभाणत् अशिश्रणत् अशश्राणत् अलीलपत् अललापत् अलूलुपत् अलुलोपत् अलूलुटत् अलुलोटत् अजीहिठत् अजिहेठत् । कविकल्पद्रुमे भ्रासङृण्टु इत्यस्य सप्तमस्वरानुबन्ध. श्रणक दाने इत्यस्य च अष्टमस्वरानुबन्धाभाव कस्यचिदनुरोधात् । हेञै इत्यस्येह सूत्रे पाठ प्रमाणशून्य एव ॥७७९॥

ऋत् उङ् यस्य स ऋदुङ् तस्य । तस्य स्थाने तद्वात्वादेशो ञग्डि वा स्यादित्यर्थ । अवीवृतत् अववर्त्तत् । एव अवीवृधत् अववर्द्धत् अमीमृजत् अममार्जत् अचीक्लिपत् अचकल्पत् इति तु ऋदुङ प्रकृतिकत्वात् । वा ग्रहणात् परत्र दाधिकारनिवृत्त्यर्थम् ॥७८०॥

## १०१२ । शकृत्-स्तम्बात् दृति-नाथात् फले-रजो-मलात् देववातात् कृ-हृ-ग्रहाप इः ।

शकृत्-स्तम्बात् ५।, दृति-नाथात् ५।, फले रजस् मलात् ५।, देववातात् ५।, कृ हृ ग्रह आप ५।, इ १।।

**एभ्यः परेभ्यः क्रमादेतेभ्यः इः स्यात् घे। शकृत्करिः वत्सः, स्तम्बकरिः व्रीहिः, दृतिहरिः श्वा, नाथहरिः पशुः, फलेग्रहिः रजोग्रहिः मलग्रहिः देवापिः वातापिः।**

## १०१३ । कुक्ष्यात्मोदरात् भृः खिः ।

कुक्षि-आत्मन् उदरात् ५।, भृ ५।, खि १।।

**एभ्यः परात् भृञः खि स्यात् घे।**

---

कार वैरकार चाटुकार' सूत्रकार मन्त्रकार ग्रन्थकार. कुम्भकार क्रमकार पदकार' सूपकार' अन्धकार इत्यादि। ढात् परात् हृञोऽवहनेऽन्। अंशहरो दायाद., व्याधिहरम् औषधं, दुःखहरा सम्पत्तिः। वहने तु भारहारो वैतनिक । वयोबोधकवहने च। कवचहरो युवा। आङ्स्ताच्छील्ये। पुष्पाहर कुशाहर । अदण्डसूत्रात् प्रहरणात् धृञ । वज्रधर' चक्रधर गदाधर शूलधर धनुर्द्धर । अदण्डसूत्रादिति किम्? दण्डधार सूत्रधार.। दण्डधर इत्यपि दृश्यते। सूत्र-वर्ज्जनात् प्रहरणभिन्नादपि भूधर जटाधर महीधर गङ्गाधर विद्याधर । दण्डा-दिभ्यो ग्रहो वा। दण्डग्रह' दण्डग्राह' धनुर्ग्रह धनुर्ग्राह । शक्तिलाङ्गूलाङ्कुशयष्टि-तोमरसूत्रघटघटीभ्यो ग्रहोऽन्। शक्ति गृह्णातीति शक्तिग्रह । एव लाङ्गूलग्रह अङ्कुशग्रह' यष्टिग्रह तोमरग्रह सूत्रग्रह घटग्रह घटीग्रह ॥ १०११ ॥

पृथक् पदकरणं यथासंख्यार्थम्। तेन शकृत्स्तम्बाभ्या कृञ दृतिनाथाभ्या हृञ फलेरजोमलेभ्यो ग्रह' देववाताभ्यामाप' पर इ. स्यात् घे इत्यर्थ । शकृत्-करिरित्यादि। शकृत् तालव्यादिर्विष्ठावाचक । शकृत् करोतीति शकृत्करि-र्वत्स'। एव स्तम्बकरिर्व्रीहि'। दृतिसमंता हरतीति दृतिहरि. श्वा। एव नाथहरि पशु'। फल गृह्णातीति फलेग्रहि । फले इत्येकारान्तग्रहणादकारस्य एकारः एवं रजोग्रहि मलग्रहि'। देवम् आप्नोतीति देवापि एव वातापि. ॥ १०१२ ॥

कुक्षिश्च आत्मा च उदरश्चेति तस्मात् ॥ १०१३ ॥

## १०१४। खित्यव्याजरुषो मन्स्वौ ह्रीकान्तत्वं त्वेकाजिचः।

खिति ७, अव्याजरुष ६।, मन्स्वौ १॥, ह्रीकान्तत्व १।, तु, १।, एकाजिच ६।।

व्यवर्जस्याजन्तस्यारुषश्च मन् स्यात् स्वश्च एकाजिचस्तु ह्रीकान्तत्व स्यात् खिदन्ते धौ परे। कुक्षिम्भरिः आत्मम्भरिः उदरम्भरिः।

## १०१५। खश्मेजेः।

खश् ।१।, एजे ५।।

ढात् परात् एजयतेः खश् स्यात् धे। जनमेजयः।

## १०१६। मन्यात् स्वार्थे।

मन्यात् ५।, स्वार्थे ७।।

आत्मान गा मन्यते गामन्यः श्रियमन्या।

---

नास्ति व्य यत्र सोऽव्य अव्यश्चासौ अच्चेति अव्याच् अव्याच्च अरुस् च अव्याजरुस् तस्य ह्री द्वितीया तस्या कम् एकारान्त ह्रीकम् अन्तो यस्य न ह्रीकान्त तस्य भाव ह्रीकान्तत्वम्। एकाच्चासौ इच् इजन्तश्चेति एकाजिच् तस्य। कुक्षि बिभर्त्ति इति कुक्षिम्भरि। पूर्वात् खिप्रत्ययेऽनेन पूर्वस्य मन्। आत्मान बिभर्त्तीति आत्मम्भरि। अत्र त्तौ लुकि विरामे नस्य लुपि नञा निर्दिष्टमनित्यमिति न्यायात् तदादिविधिर्निषेधस्यानित्यत्वे मन् स्यात् एवम् उदरम्भरि ॥१०१४॥

एजेरिति एज् कम्पे इत्यस्य ञ्यन्तस्य ग्रहणम्। जनम् एजयतीति जनमेजय॥ खश् शित्त्वाद्र्त्वे अपि ञेर्लोपाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मन् ॥१०१५॥

ढात् परात् मन्यते खश् स्यात कर्त्तरि स्वार्थे स्वनिमित्तधात्वर्थे। आत्मान गा मन्यते इति गामन्य। अत्र खश शित्त्वाद्र्त्वे दिवमुतुर्दति श्यनि लोपोऽत् इत्यकारलोपे गोशब्दस्य द्वितीयैकवचनान्तत्वम्। एव श्रियमन्या ॥१०१६॥

१०१७। मुञ्ज कूलास्यपुष्पात् धेटः।

मुञ्ज-कूल आस्य पुष्पात् ५।, धेट ५।।

एभ्य परात् धेट' खश् स्यात् घे। मुञ्जन्धयः कूलन्धयः आस्यन्धयः पुष्पन्धयः मुञ्जन्धयी, धेटः टित्त्वादीप्। [२५७]।

१०१८। नाड़ी-शुनी-स्तन-कर-मुष्टि-पाणि-नासिकात् ध्मश्च।

नाडी नासिकात् ५।, ध्म ५।, च।१।

एभ्य. परात् ध्मो धेटश्च खश् स्यात् घे। नाडिन्धम' नाडिन्धयः।

१०१९। घटी-खारी-वाताद् विध्वरुस्तिला-दसूर्य्योग्राल्ललाटा-न्मित-नख मानात् ध्मा-तुद-दृश तप-पचः।

घटी खारी वातात् ५।, विधु अरुम तिलात् ५।,असूर्य्य-उग्रात ५।, ललाटात५।, मित नख मानात् ५।, ध्मा-तुद दृश तप पच ५।।

एभ्य' परेभ्यः ध्मादिभ्य' खश् स्यात् घे। घटिन्धम, खारिन्धमः वातन्धमः विधुन्तुदः, अरुन्तुद' तिलन्तुद' असूर्य्यम्पश्य उग्रम्पश्य ललाटन्तप' मितम्पचः नखम्पचः द्रोणम्पचः।

---

मुञ्ज धयतीति मुञ्जन्धय। अत्र शिति परे एचोऽशित्या इत्यस्याप्राप्तौ एकारस्याय। खिदन्ते परे पूर्वस्य मन्। एव कूलन्धय इत्यादि। धेट टित्त्वादिति यत्र धेटधातोरेकारस्य अयादेश स्यात् तत्रैव टित्त्वादीप् इत्यर्थ। तेन मुञ्जन्धयी। एवं धेटदृशपाघ्रेति शप्रत्यये उद्धयी। नाडीशुनीत्यादिना खश्प्रत्यये नाडीन्धयीत्यादि। अयादेशाभावे तु धातव्या धानीया इत्यादौ न ईप्॥१०१७॥

नाडी च शुनी च स्तनश्च करश्च मुष्टिश्च पाणिश्च नासिका चेति तस्मात्। नाडीं धमतीति नाडीन्धम। खश शित्त्वाद्गत्वे शपि धमादेशे खित्त्वात् पूर्वस्य वन् स्वौ। एव नाडिन्धय इत्यादि॥१०१८॥

पृथक्पदकरण माादिभिर्यथासङ्ख्यार्थम्। तेन घटीखारीवातेभ्यो ध्म. विध्वरु-

१०२०। कूलादुद्रुजुद्वहः।

कूलात् ५।, उद्-रुज उद्-वह ५।।

कूलात् आभ्यां खश् स्यात् घे। कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः।

१०२१। प्रियवशाद्भयर्त्तिमेघात् सर्वकूलाभ्रकरीषात् वद-कृ कषः खः।

प्रियवशात् ५।, भय ऋति मेघात् ५।, सर्व कूल अभ्र करीषात् ५।, वद कृ-कष ५।, ख १।।

एभ्यः परेभ्यः क्रमादेतेभ्यः खः स्यात् घे। प्रियंवदः वशंवदः भयङ्करः ऋतिङ्करः मेघङ्करः सर्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः।

---

लिलिभ स्तुद असूर्योग्राभ्या इश ललाटात्तप तिलखमानेभ्य पच पर खश् स्यात् कर्त्तरि। घटी धमतीति घटिन्धम। खश शित्वात् अपि धमादेशे खित्वात् पूर्वस्य मन् स्त्री। एव खरी गर्गरीं धमतीति खरिन्धम। खारीति पाठे परिमाणविशेष। अरुन्तुदतीति अरुन्तुद अत्र खश शित्वादसञ्ज्ञाया दिवमुतुर्दति अप्रत्यये तस्य ङित्वाद्गुणाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मनि स्यादे सो लोप इति सलोप'। सूर्य्य न पश्यतीति असूर्य्यम्पश्य। मानमिह परिमाणवाचक द्रोणाढकादि, तेन द्रोणम्पच आढकम्पच इत्यादि। अन्यत् सुगमम् ॥१०१९॥

उभयत्र उदो ग्रहण स्पष्टार्थम्। रुजशो भङ्गे। कूलमुद्रुजतीति कूलमुद्रुज। खश शित्वाद्दवे दिवमुतुर्दति अप्रत्यये ङित्वात् गुणाभावे पूर्वस्य मन्। एव कूलमुद्वह ॥१०२०॥

पृथक्पदकरण वदादिभिर्यथासङ्ख्यार्थम्। तेन प्रियवशाभ्या वद भयर्त्तिमेघेभ्य कृञ सर्वकूलाभ्रकरीषेभ्य कष. पर ख स्यात् प्रिय वदति कथयतीति प्रियवद एव वशवद। भय करोतीति भयङ्कर. एवम् ऋतिङ्कर मेघङ्कर.। सर्वं कषति हन्तीति सर्वङ्कष.। एव कूलङ्कष. अभ्रङ्कष. करीषङ्कष. ॥१०२१॥

## १०२२। क्षेमप्रियमद्रात् कुर्वा।

क्षेम प्रिय मद्रात् ५।, कृ ५।, वा ।१।।

एभ्यः कृञः खो वा स्यात् घे। क्षेमङ्करः प्रियङ्करः मद्रङ्करः। पक्षे क्षेमकारः।

## १०२३। भावघे त्वाशिताद्भुवः।

भाव घे ७।, तु ।१।, आशितात् ५।, भुव ५।।

आशिताद्भुवः खः स्यात् भावे घे ( करणे ) वा। आशितम्भव वर्त्तते, आशित भवत्यनेनेति आशितम्भवः ओदनः।

## १०२४। तॄ भृ वृ दॄ जि धृ तप यम दम मद लिह गम सहाजो नाम्नि।

तॄ—अज ५।, नाम्नि ७।

एभ्यः खः स्यात् सञ्ज्ञायाम्। रथेन तरतीति रथन्तरः, विश्वम्भरः, पतिवरा, पुरन्दरः भगन्दरः धनञ्जयः वसुन्धरा, शत्रुन्तपः परन्तपः वाचयमः अरिन्दमः, इरया माद्यतीति इरम्मदो हस्ती, वहंलिहः भुजङ्गमः ( पतङ्गमः प्लवङ्गमः ) सर्वंसहः वातमजः।

---

क्षेमङ्करोतीति क्षेमङ्करः। पक्षे वाशब्दस्य व्यवस्थावाचित्वात् हेतुताच्छील्यानुलोम्यं स्वर्थेषु तदभावेऽपि ढात् पक्ष एव। तेन क्षेमकार इत्यादि ॥१०२२॥

आशितस्तृप्त आशितस्य भवनम् आशितम्भवम् अत्र भावे ख। आशितम्भवत्यनेनेति आशितम्भव ओदन अत्र करणे ख ॥१०२३॥

तॄ तरे भृञ् भृतिपुष्ट्यो वृ न ञ ग वृतौ दॄयगि विदारे जि जये धृ ञच धृत्या तपौ तापैश्वर्य्ययो यमो छ विरतौ दम्भू इर्षमे मदीभिर्षञ्जि हर्षे लिह स्वादे औगम्लृ गत्या सहजड शक्तौ अज क्षेपे गतौ। इत्येतेभ्य ख स्यात् नाम्नि। रथेन तरतीति रथन्तर विश्व बिभर्त्तीति विश्वम्भरः। पति वृणोतीति पतिवरा। पुर दीर्य्यतीति पुरन्दर। एव भगन्दर। धन जयतीति धनञ्जय। वसूनि धरतीति वसुन्धरा। शत्रु तपतीति शत्रुन्तपः एव परन्तप। वाचं यच्छतीति

१०२५। शर्द्धंजहोरङ्गमोरगतुरगतुरङ्गमविहगविहङ्गमभुजगभुजङ्गपतगपतङ्गप्लवगप्लवङ्गाः।

शर्द्धजह—प्लवङ्गा १॥।

एते खान्ता निपात्यन्ते। शर्द्धं जहातीति शर्द्धंजहो माष:, उरसा गच्छतीति उरङ्गम:, उरग: त्वरया गच्छतीति तुरग: तुरङ्गम। विहायसा गच्छतीति विहग:, विहङ्गम:, भुजेन गच्छतीति भुजग: भुजङ्ग:, पतेन गच्छतीति पतग: पतङ्ग:, प्लवेन गच्छतीति प्लवग: प्लवङ्ग:।

१०२६। नग्नपलितप्रियान्धस्थूलसुभगाढ्यात् कु: खनट् धे च्व्यर्थे।

नग—आढ्यात् ५।, कु ५।, खनट् ।१।, धे ७।, च्व्यर्थे ७।।

एभ्य: परात् कृञ: खनट् स्यात् धे च्व्यर्थे। अनग्नो नग्न:

---

वाचयम अव खिति परे पूर्वस्य मन आपोऽपि ह्रस्व। अरीन् दाम्यतीति अरिन्दम। इरा जलम् इरा भूवाक् सुरास्, स्यात् इत्यमरात् इरया माद्यतीति इरम्मदो वज्राग्नि। वह लेढीति वहलिह। खनिर्गदिमदीत्यव इत्, करणज्ञापकादव न गुण:। भुजेन गच्छतीति भुजङ्गम। भुजो शौ वक्रार्थे क्ती कभाव इति भावे कप्रत्यये भुजो वक्रणम्। एव प्लवेन गच्छतीति प्लवङ्गम। सर्वं सहते सर्वंसह। वातमजतीति वातमजो मृगविशेष। खनिगदिमदीत्यव इत्, करणज्ञापकादव मवी आदेश। एषूपदेष्वेव सञ्ज्ञा सम्भवतीति उपपदनियमो बोध्य:। किञ्च कदाचिदनाम्नि च दृश्यते। यथा रिपुञ्जय बलास्ते कुम्भकर्णादय इति महानाटकम्। एव हृणुते हृदयङ्गम सखा इति कालिदास ॥१०२४॥

पृथुज क्लेदने। शर्द्धम् आर्द्रत्व जहातीति शर्द्ध जहो माष:। उरसा गच्छतीति उरङ्गम उरग। त्वरया गच्छतीति तुरग तुरङ्गम। विहायसा गच्छतीति विहग विहङ्गम.। भुजेन गच्छतीति भुजग: भुजङ्ग पत्यतेऽनेनेति पत पच: पतेन गच्छतीति पतग: पतङ्ग। प्लवेन गच्छतीति प्लवग प्लवङ्ग. बहुवचनादन्येऽपि त्वरया गच्छतीति तुरङ्ग, विहायसा गच्छतीति विहङ्ग ॥१०२५॥

क्रियतेऽनेनेति नग्नङ्करणं द्यूतं, पलितङ्करणं प्रियङ्करणम् अन्धङ्करणः शोकः, स्थूलङ्करणं दधि, सुभगङ्करण रूपम्, आढ्यङ्करणं वित्तम्।

## १०२७। भुवो घे खिष्णु-खुकञौ।

भुव ५।, घे ७।, खिष्णु खुकञौ १॥।

नग्नादिभ्यः परात् भुवश्चार्थे एतौ घे स्तः। नग्नम्भविष्णुः नग्नम्भावुकः।

## १०२८। ढात् भज-वह-सहो विण्।

ढात् ५।, भज-वह सह ५।, विण्।१।।

ढात् परेभ्य एभ्यो विण् स्यात्। सुखभाक् प्रष्ठवाट् तुराषाट्।

## १०२९। अनडुच्छ्वेतवाहादिः।

अनडुच्छ्वेतवाहादि १।।

एते विणन्ता निपात्यन्ते। अनो वहतीति अनड्वान् वृषः। श्वेतैरुह्यते श्वेतवाः इन्द्रः। अवयजतीति अवयाः,

---

अनग्नो नग्नः क्रियतेऽनेनेति नग्नङ्करण खित्वात् पूर्वस्य मन्। अप्रिय प्रिय क्रियतेऽनेनेति प्रियङ्करणी सेवा टित्वादीप्। च्व्यर्थे प्रत्ययविधानात् च्विप्रत्ययी न स्यात्। तेन नग्नीकरोत्यनेनेत्यत्र खनट् न स्यात्। अनट् च न स्यादित्येके ॥१०२६॥

अनग्नो नग्नो भवतीति नग्नम्भविष्णुः खित्वात् पूर्वस्य मन्। एव पलितम्भविष्णु प्रियम्भविष्णु. अन्धम्भविष्णुः स्थूलम्भविष्णु. सुभगम्भविष्णु' आढ्यम्भविष्णुः। एव नग्नम्भावुक इत्यादौ खित्वात् पूर्वस्य मन् ञित्वात् वृद्धि ॥१०२७॥

सुख भजतीति सुखभाक् विण् इकार उच्चारणार्थः। णकारो वृद्ध्यर्थे त्यौ वमाव इति वस्य लोप.। प्रष्ठ. पुरोग त वहतीति प्रष्ठवाट्। तुरा वेग. तुरा सहते तुराषाट् अत्र होढोभाविति ढत्वे शासवसघससाढाच्चेति षत्वम्। भजतेरुपसर्गपूर्वकादपि विण्स्यित्येके। प्रभाक् विभाक्। सहि वहिभ्या छन्दस्येव विण्स्यित्येके ॥१०२८॥

उक्तानि शंसतीति उक्थशाः यजमानः। पुरोडाः हविः, पुरोडाशः।

**१०३०। क्रम गम खन सन जनो विट्।**

क्रम—जनः ५।, विट् ।१।।

एभ्यो विट् स्यात् घे।

**१०३१। विड्वनोर्ङा।**

विड्वनी ७॥, ङा ।१।।

धोरन्त्यस्य ङा स्यात् विटि वनि च। उदधिक्राः अग्रेगाः विसखाः गोषाः अब्जाः।

**१०३२। त्वासुसिस् मन् क्वनिप् वनिप् विच् क्विपः।**

त्वासु—क्विप १॥।

धोरेते स्युः के भावे च। नीयते अनेनेति नेत्रं दष्ट्रा

---

श्वेतवाह आदिर्यस्य स श्वेतवाहादि अत्र विरामेऽपि ङसङीऽप्राप्तिः सूत्रत्वात्। अन शकट वहतीति अनड्वान् वृष.। श्वेतैरुह्यते इति श्वेतवा इन्द्र। अत्र कर्त्तु परात् वहेः कर्मणि वाच्ये विण्। अवयजतीत्यवया कर्मपूर्वकत्वाभावेऽपि विण्। उक्तानि शसतीति उक्थशाः यजमान, अत्र तकारस्य थकारे शसतेर्नलोपे वृद्धिश्च। पुर आदौ दाश्यते यत् स पुरोडा हविः, अत्र कर्मणि विणि दकारस्य डकार पुंस्त्वञ्च। पुरोडाश इत्यकारान्तोऽपि तथाच सदा पुरोडाश पवित्रिताधर इति ॥ १०२९ ॥

अग्रे गच्छतीति अग्रेगा इत्यधिकरणादपि विट् स्यात् इत्य॰ ॒ढादिति गीतम् ॥ १०३० ॥

विट् साहचर्य्यात् गुणी वन्नेव ग्राह्यः। तेन सुपीवा प्रातरित्वा इत्यादौ क्वनिपि न प्रसङ्ग। उदधिं क्रामतीति उदधिक्रा. पूर्वेण विट्। गा सनति ददातीति गोषा इति सनधातो सस्य क्षतत्वात् षत्वम् अप्सु जायते अब्जा ॥ १०३१ ॥

**नद्ध्री योत्रम्, उरुव्यचाः नृचक्षाः रजः चक्षुः सर्पिः सुष्ठु ददातीति सुदामा गन्मा।**

## १०३३। हव्-न्न-तेर्नेम्।

हव्-व-ते ६।, न ।१।, इम् ।१।।

**क्तो हवस्य वस्य तेश्च इम् न स्यात्। सुशर्म्मा सुपीवा प्रातरित्वा सुत्वा, भूरिदावा वारिजावा सोमपाः रेट् रोट् ऋुङ् युङ् प्रत्यङ् अचच्चूः मित्रश्रीः आशीः गीः बहुभ्रट् बहुभ्रट् घृतस्पृक् ग्रस्यात् क्रव्यात्।**

---

तश्च अस् च उस् च इस् च मन् च क्वनिप् च विच् क्विप् च ते। पृथग्योगात् सर्वधातुभ्यो विहिता अपि प्रयोगानुसारात् धातुविशेषेभ्य एव कारकविशेषे भावे च स्युरिति बोध्यम्। अन्यथा गन्त्रम् इत्याद्यपप्रयोगापत्तेः। नीयतेऽनेनेति नेत्रम्। दृश्यतेऽनयेति दृष्ट्रा अत्र नस्यानुस्वारे शक्रजेति षङि ष्टुभिरिति तस्य च टत्वे अभिधानात् स्त्रीत्वे आप्। नह्यतेऽनयेति नद्ध्री रज्जुः। अत्र नहो धङ भाविति हस्य ढभात्तथोरिति तस्य धत्वे झप्झसोरिति पूर्वं धस्य दत्वेऽभिधानात स्त्रीत्वे नदादित्वात् ङ्रीप्। यूयतेऽनेनेति योत्रम्। एव युजिर्योत्रं योक्त्र दात्र लूनौ दाव पा पाने पात्रं तुद औश ीत्र मिह्रौ सिचि मेढ्र षिणगञ्ज बन्धे सेत्र सिच पर्शोत्र मेत्र ष्टुञल स्तुतौ स्तोत्र शस बधे शस्त्रम् अस इर् अस्त्र पूञ शौचे पोत्र पतन्तज पत्र भसलि द्युतौ भस्त्रा अमगतौ अन्त्रीत्यादि। एषु ये सेमस्तेभ्यो हव वतेरिति वक्ष्यमाणादिम् निषेध। असमाह। उरु महान्त विचति उरुव्यचा. व्यचोजिरित्यत्र अस् वर्जनात् न जि। नर चष्टे नृचक्षा चक्ष कसात इत्यत्र अस् वर्जनात् न आदेश। रज्यतेऽनेनेति रजः रनजोऽपघकेति न लोप। एव विधश्च विधौ विधर्त।ति वेधाः। उसमाह। चक्षञ्ज वद्दे अनेकार्थत्वात् दर्शनार्थ। चष्टेऽनेनेति चक्षु. चक्ष क्साञ इत्यत्र उस् वर्जनात् न आदेश। एव धन् वे धनु। इसमाह। सर्पतीति सर्पिः एव ह्वयते यजुइवि। मनमाह। सुष्ठु ददातीति सुदामा। गच्छतीति गन्मा। अत्र घोर्मन इति मस्य न॥ १०३२॥

हव इति शषसकारान्तः प्रत्याहार। तेन क्रुशाक् दृशाक् रदभुः दृष्टुः रक्ष यत्र इत्यादौ इम् न स्यात्। न च ह्वकारादेर्भादेश प्रत्ययस्य असम्भवे जकारादे सम्भवेऽपि तस्य इमः असम्भवे वत्र इत्यनेनापीष्टसिद्धौ इति वाच्यम्। तथोक्तौ

बम प्रत्याहारस्य अप्रसिद्धतया वकारमकारयोरेव ग्रहणमिति भमापत्ते'। सुशृणातीति सुशर्म्मा अनेन इम् निषेध। क्वनिपमाह। सुष्ठु पिबतीति सुपीवा अत्र क्वनिप इकार उच्चारणार्थं किच्वात् गुणे दामार्गे इति ङी। प्रातरेति प्रातरित्वा सुनोतीति सुत्वा उभयत्र किच्वात् गुणाभावे पित्वात् स्वस्य तन्। कर्म्मपूर्वकदृशो ऽतीति क्वनिप्। मेरुं दृष्टवान् मेरुदृश्वा एव बहुदृश्वा। राजसहार्थां युधोऽप्यतीने। राजयुद्वा सहयुध्वा एव राजान कृतवान् राजकृत्वा। वनिपमाह। भूरि ददातीति भूरिदावा। वारिणि जायते वारिजावा उभयत्र विड्नोरिति ङा। एव यजते स्म यज्वा अत्र स्वनिगदिमदीव्यत इतुकरणज्ञापकात् नङा आदेश। विचमाह। सोम पिबतीति सोमपा अत्र विच इकार उच्चारणार्थ चकारस्तु प्राचीनमतानुवादार्थो नलव्ययार्थ। व्यो वमाव इति वस्य लोप.। रेषति रोषतीति रेट्, रोट्, विचि गुण। क्रुन्चु गत्या विचि क्रुङ् अस्मात् क्विप् न स्यादनभिधानात्। क्विपमाह। अस्य इकार उच्चारणार्थं क्विप:किच्वात् गुणाभावादि'। पित्वात् स्वस्य तन् व्यो वमाव इति वस्य लोप। युनक्तीति युङ् अत्र क्विपि नलोपेऽपि युजिरोऽसे इति नुण्। प्रत्यञ्चतीति पूजायस्य नलोपाभावे प्रत्यङ्। गत्यर्थस्य तु नकारलोपेऽपि त्रिदचोऽद्वेरिति नुणि प्रत्यङ् अचेर्दीव्यतीति अचयू ङ्यो गूटाविति ङा। मित्र शास्तीति मित्रशी क्वौत्वाशासश्चेत्युक्ते' आकारस्य इकारे शासवसेति षत्वम्। आशासनमाशी इकारे षत्वम्। आशास इति किम्? प्रशा'। ग्टणातीति गी अत्र ऋदिरणाविति इर्। वदतीति वहो घोटकादि। तस्मात् भ्रश्यति वहभ्रट इसुङ न इति न लोपे भ्रज्जादेति षङ्। घृत स्पृशतोति घृतस्पृक् किच्वात् न गुण'। शस्यसत्तीति शस्यात्। एव क्रव्यात्। ईषद्, सो पराद्विहिताभ्यामाभ्याम नखना-भ्याम् असरूपाणा तव्यादीनां बाधदर्शनात् कर्म्मपूर्वकधातो परविहितौ असरूपावपि क्विप् विचौ ढात् षत्विति हनचरेत्यादि स्तकुष्ट इत्येते क्वचित् बाध्येते क्वचिदिति कि क्रव्यात् क्रव्याद अत्र क्विप् षण् च। शत्रुहा शत्रुघ्न अत्र विट् टक् च। कम्मकृत् कर्म्मकार अत्र क्विप् टञ। अग्रे श्विञ सोमात् ञीऽतीते क्विप् अग्नि चितवान् अग्निचित् एव सोमसुत्। सु पुण्य पाप धर्म्म मन्त्र पदेभ्य कृञोऽतीते क्विप। सुष्ठु कृतवान् सुकृत् पापकृत् धर्म्मकृत् मन्त्रकृत् पदकृत्। समाहा णवेष्टसिद्धौ विच् क्विप इति बहुवचन प्रत्ययान्तरप्राप्त्यर्थम्। तेन कुत्साया विक्रीणातेरिणतीते कर्त्तरि। सोमं विक्रीतवान् सोमविक्रयी एवं शुक्रविक्रयी घृतविक्रयी लवण विक्रयी लौहविक्रयी विप्र ॥१०२३॥

## १०३४ । छादि-त्वमन्-कीस्-घे ह्रः ।

छादेः ६।, त्व मन् क्वि-इस घे ७।, ह्र १।।

छादयतेः ह्रः स्यात् त्वे मनि क्वौ इसि घे च । छत्वं छद्म तनुच्छत् छदिः उरश्छदः ।

## १०३५ । दद्दज्जुहू वाक् प्राट् श्री स्रू द्रू ज्वायतस्तू कटप्रू परिव्राट् दिद्युज्जगत् दधृक् स्रगुष्णिहः ।

दद्दत्—उष्णिह १॥।

एते क्विबन्ता निपात्यन्ते । दीर्घ्यतीति दद्दत्, जुहोत्यनयेति जुहू, वक्त्यनयेति वाक्, पृच्छतीति प्राट्, श्रयत्येना श्रीः, स्रवतीति स्रू, द्रवतीति द्रूः जवतीति जूः आयत स्तौति आयतस्तूः कट प्रवते कटप्रूः, परिव्रजतीति परिव्राट्, द्योतते इति दिद्युत्, गच्छतीति जगत्, धृष्णोतीति दधृक्, सृज्यते इति स्रक्, ऊर्द्ध्वं स्निह्यतीति उष्णिक् ।

## १०३६ । जिर्घोऽन्त्यः ।

जि ११, घ १।, अन्त्य १।।

अन्त्ये जिर्घं स्यात् । मित्रं ह्वयतीति मित्रह्वं ।

---

उद्‌के त्र स्फती छाद्यतेऽनेनेति छत्वम् अत्र हववतेरितीम् निषेधे ञ लोपे तेन ह्रस्वे भामभ्रातीरिति दस्य त । छद्म इति मनि ह्रस्व तनुं छादयतीति तनुच्छत अत्र क्विपि ह्रस्व. । छाद्य ऽनेनेति छदि अत्र इसि ह्रस्व. । घे परे ह्रस्वविधानात छाद्यते कर्त्तरि पुंसि सज्ञायां घ प्रत्ययो भवत्य । तेन उरश्छादयतीति उरश्छद एव प्रच्छद दन्तच्छद छद एषु घे परे ह्रस्व ॥१०३४॥

एतेऽष्टौ क्विबन्ता निपात्यन्ते ॥१०३५॥

अन्त्य कृत्प्रत्ययाव्यवहितं वर्त्ती । मित्रह्वरिति क्विपि ग्रहस्वपादीनिति ञौ

## १०३७। वे-ध्याप्यां क्वौ ।

वे-ध्या आप्या ६।॥, क्वौ ७। ।

ऊः धीः आपीः । ध्याप्योः अतएव जिः ।

## १०३८। अमुडो झस्यणौ चातिकि ।

अमुड ६।, झसि ७।, अणौ ७।, च ।१।, अतिकि ७। ।

अमन्तस्योडोर्घः स्यात् अणौ झसे क्वौ च, न तु तिकि । प्रशान् ।

## १०३९। स्रिवाव मव ज्वर त्वरो वूडुडा अमे च ।

स्रिव अव मव ज्वर त्वर ६।, व् ।१।, ऊट् ।१।, उडा ३।, अमे ७।, च ।१। ।

एषां व उडा सह ऊट् स्यात् क्वौ झसि अणौ अमे च । स्रूः ऊः मूः जूः तूः ।

---

अनेन दीर्घः । एवं हत हतवान् हति हत्वा । ज्यागि जरायां जीनं टुओश्वि शून । अन्य किम् इष्टि उष्ट पृष्ट ॥१०३६॥

ऐञ वे स्यूतौ वयतीति ऊ क्विप् ग्रहस्वपाद्योरिति जौ पूर्वेण दीर्घे सिद्धे नियम । तेन अस्य जे क्वावेव दीर्घो नान्यत्र क्वाविति किम् ? उत उति उत्वा ध्यायत्यनया इति धी । आप्यायते आपीश्च । एतयो क्वौ जेरसम्भवेऽपि जे दीर्घविधानात् क्वौ जि ततो दीर्घश्च ॥१०३७॥

अम् असन्तो धातु । तस्य उड् अमुड् तस्य । प्रशाम्यतीति प्रशान् क्विपि उडो दीर्घे धोर्म न इति मस्य न । एवं कनीञि प्रकान अणौ झसे तु शान्त शान्तिः शान्त्वा । झसि किम् ? प्रशम्य । अणौ किम् ? गन्ता । हति हतः हत्वा इत्यादौ तु वनतनेति अम्लोपे अमन्तत्वाभावात् न दीर्घ । अतिकीति किम् ? रन्ति तन्तिरित्यादि ॥१०३८॥

सिव्यु श्रोषे गतौ । सीव्यतीति स्रू अव रक्षादौ अवतीति ऊ । मव नद्धे मवतीति मूः । एषामौकारादौ धोरियुवचीति उवि स्रुवौ उवौ मुवौ इत्यादि । ज्वर्म रोगे ज्वरतीति जूः । ञित्वरषमड त्वरे, त्वरते तुः । अणौ-झसे तु स्रूतः स्रूतिः । ऊतिः मूतिः जूर्त्तिः तूर्त्तिः । अमे तु मनि स्रोमा । अवतेर्मनि मनीषादित्वात् मन. टिलोपे गुणे ओम् ॥१०३९॥

## १०४० । राच्छ्वोर्लोपः ।

रात् ५।, च्छ्वी' ६॥, लोप १। ।

रात् परयोः छकारवकारयोर्लोपः स्यात् क्वौ झस्यणौ ञमे च। मुर्च्छा मूः धुर्वी धू' ।

## १०४१ । आदूटो त्रिः ।

आत् ५।, ऊट' ६।, त्रि १। ।

अवर्णात् परस्य ऊटो त्रिः स्यात्। जनान् अवतीति जनौ' ।

## १०४२ । यम मन-तन गमोऽन्तलोपः क्वौ ।

यम मन तन गम. ६।, अन्तलोप १।, क्वौ ७।

एषाम् अन्तस्य लोपः स्यात् क्वौ। सयत् परिमत् परीतत् सङ्गत् ।

---

मूर्च्छा मोह उच्छ्रये ञस्यौ क्विपि अनेन छलोपेव्यं'नचतयीति दीर्घे मू । अचि तु मुरौ मुर इत्यादौ ञस्वस्थिति । धुर्वी हिंसे ञस्यौ क्विपि वलोपे व्यं'नचतयीति दीर्घे' धू धुरौ धुर । अणौ झसि तु मूर्त्तं मूर्त्तिं धूर्त्तं धूर्त्तिं । अत्र रेफसान्निध्यात् वकारो दन्त्य एव ग्राह्य । तेन घर्वं गतौ मर्वं गतौ इत्यादौ न प्रसङ्ग ॥१०४०॥

जनानवतीति जनौ. अत्र अवर्णान्तकर्म्मोपपदस्य क्विबन्तधातुना समासेऽनेन त्रि.। यवादौ क्विप् तत' समासस्तत्र गुण एव। तेन जनस्य ऊ. जनौ तव ऊ ववो: इति असमासेऽपि गुण एव। एकपदे तु अवविकारे क्विपि च्छ्वो. ऊटाविति ऊटि अनेन वृद्धौ औ श्रावौ श्राव.। धावुञ् जवे धौ धावौ धाव । क्वौ धौतिः। एव धौति धौत्वा ॥१०४१॥

संयच्छतीति सयत्। परिमन्यते परिमत्। परितनोतीति परीतत्। एव सगच्छते सङ्गत्। एषु अम्लोपे खस्य तन्। परीतदिति दीर्घविधानात् क्विबन्ते धातौ उपसर्गादेः क्वचित् दीर्घं' स्यादिति सूचितम्। तेन तनि रुहि नहि हसि इषि व्यधि रुचि सहादिषु क्विबन्तेषु उपसर्गाकारयोर्दीर्घ' इति बोध्यम्। परितनोति परीतत् विरोहतीति वीरुत्। उपनह्यतीति उपानत्। उपवर्त्तते

१०४३। स्नि-विष्वग्देवस्य टेरद्र्यञ्चौ क्वौ।

स्नि विष्वच् देवस्य ६।, टे ६।, अद्रि ।१।, अञ्चौ ७।, क्वौ ७।

स्नेर्विष्वचो देवस्य च टेरद्रिः स्यात् क्विबन्तेऽञ्चतौ। सर्वान् अञ्चतीति सर्वद्र्यङ्, विष्वद्र्यङ्, देवद्र्यङ्।

१०४४। अमुद्र्यङ् अमुमुयङ् अदमुयङ् अदद्र्यङ्।

अमुमञ्चतीत्यर्थे एते निपात्यन्ते।

१०४५। सह-सम्-तिरः सध्रि-समि तिरि।

सह सम् तिर ६।, सध्रि समि तिरि ।१।।

एषां क्रमादेते स्युः क्विबन्तेऽञ्चतौ। सध्र्यङ् सम्यङ् तिर्य्यङ्।

१०४६। वीरुहो धङ् क्वौ।

वीरुह ६।, धङ ।१।, क्वौ ७।

वीरुत्।

१०४७। त्यदादि भवत्-समानान्योपमानात् दृशः टक्-सक्-क्विपो ढे।

त्यदादि—उपमानात् ५।, दृश ५।, टक् सक्-क्विप १।।।, ढे ७।

त्यदादेर्भवतः समानादन्यस्माच्चोपमानात् दृश एते स्युः ढे।

---

उपाहत्। प्रवर्षतीति प्रावृट्। मर्म्म विध्यतीति मर्म्मावित् एव मृगावित्। निरोचने नीरुक्। ऋतिं सहते ऋतीषट् अत्र अत्वठादित्वात् षत्वम्॥ १०४२॥

स्निश्च विष्वक् च देवश्चेति तस्य। विष्वगिति मूर्द्धन्यमध्यं चान्तमव्ययं विष्वगञ्चतीति विष्वद्र्यङ्॥ १०४३॥

सुगमम्॥ १०४४॥

सह अञ्चतीति सध्र्यङ्। समञ्चतीति सम्यङ्। तिरोऽञ्चतीति तिर्य्यङ्॥१०४५॥

विपूर्वस्य रुहो धङ् स्यात् क्वौ। वेर्दीर्घस्य बीज यममनेत्यत्र लिखितम्॥१८६॥

त्यद आदिर्यस्य स त्यदादिः। त्यदादिश्च भवांश्च समानश्च अन्यश्चेति। त्यदादि

## १०४८ । से र्ङ्गी ।

से ६।, र्ङ्गा ।१। ।

से र्ङ्गी स्यात् टगाद्यन्ते दृशि । स इव दृश्यते तादृशः तादृक्षः तादृक्, भवादृशः ।

## १०४९ । समानेदं किमदः सेक्यमू ।

समान इदम् किम्-अद ।६।॥, स-ई की अमू ।१।॥ ।

एषां स्थाने स ई की अमू एते क्रमात् स्युः टगाद्यन्ते दृशि । सदृशः ईदृशः कीदृशः अमूदृशः अन्यादृशः ।

इति ट्टनादिपादः ।

---

भवत्समानान्य तच्च तत् उपमानञ्चेति त्यदादिसमानान्योपमानं तस्मात् । उपमानभूतेभ्य एभ्य परात् दृश एते स्युर्ढे ॥ १०४७ ॥

ङित्वादन्त्यस्य स्थाने । स इव दृश्यते इति टकि कित्वात् गुणाभावे तादृशः टित्वादीपि तादृशी । एव सकि कित्वात् गुणाभावे शङ्क्राजेति षङि षढो क से इति षस्य कत्वे चुड् क्रुडिति शस्य कत्वे वा तादृक्ष । स्त्रियान्तु तादृक्षा । एवञ्च क्विपि कित्वात् गुणाभावे तादृक् एव यादृश एतादृश त्वमिव दृश्यते त्वादृश अहमिव दृश्यते मादृश आवामिव दृश्येते अस्मादृशौ वयमिव दृश्यन्ते अस्मादृशा । त्वमिव दृश्यते त्वादृश युवामिव दृश्येते युष्मादृशौ यूयमिव दृश्यन्ते युष्मादृशा । मुख्ययोर्युष्मदो साचात् द्विवचनाभावे युवावौ न स्यातामिति पूर्वं लिखितम् । एवं भवानिव दृश्यते भवादृश ॥ १०४८ ॥

समानश्च इदम् च किम् च अदस् चेति । सश्च ईश्च कोश्च अमूश्चेति । समान इव दृश्यते सदृश अयमिव दृश्यते ईदृश क इव दृश्यते कीदृश. असाविव दृश्यते अमूदृश । अन्य इव दृश्यते अन्यादृश ॥ १०४९ ॥

इति ट्टनादिपादः ।

## तृतीयः पादः—क्तादिः।

---

### १०५०। क्त-क्तवतू भूते ढभावे घे।

क्त क्तवतू १॥, भूते ७।, ढभावे ७।, घे ७।।

धोरतीतेऽर्थे ढभावे क्तो घे क्तवतु' स्यात्, उकावितौ। स्तुतस्त्वया विष्णुः, स्नातं मया, विष्णुर्विश्वं कृतवान्।

### १०५१। चे घोंऽढे भावदैन्याक्रोशे तु वा।

चे ६।, घं १।, अढे ७।, भावदैन्याक्रोशे ७।, तु ।१।, वा ।१।।

चे घः न तु ढे, भावदैन्याक्रोशे तु वा, तयो' परयो।

### १०५२। सूल्वाद्योदिद्रुचौ-यल् स्यातो न तोऽपूमूर्च्छंख्याध्यामदो दश्च।

सू- लू आदि ओत्-इत् र-च्ची यल्-स्य आत ५।, न ।१।, त ६।, अ पृ-मद ५, द ६।, च ।१।।

स्वादेर्ल्वादेरोकारेतो दान्तात् रेफात् च्चीशब्दात् यलस्थ युक्ताकारान्तात् परयोस्तयोस्तस्य न' स्यात्, पूर्वस्य च दस्य नः, न तु प्रादिभ्यः। चीणः चीणवान्। अढे किम्? चितः कामो मया।

---

टुञल स्तुतौ कर्म्मणि क्त. वेम सहैति वेमत्वेऽपि वृदु श्रीति इमो निषेधे कित्वात् गुणाभावे स्तुत। ष्णाल शौधने भावे क्त. स्नात कृ ञ द डु कर्त्तरि क्तवतु कित्वात् गुणाभावे उदित्वात् ञिदच इति नुणि अलसोधोरिति दीर्घे कृतवान्॥ १०५०॥

अविशेषात् चिनग हिंसाया चि चतैश्वर्य्ययोः चिश वासगत्यो इति वयाणा ग्रहणम्॥ १०५१॥

सूश लूश सूलौ तौ आदी ययोस्तौ सूल्वादी। ओत् इत् यस्य स ओदित्

## १०५३ । वृदुश्विजूर्णौ कितो नेम् ।

वृ ऋ उ श्वि-ऊर्णौ ५।, कित ६।, न ।१।, इम् ।१। ।

वृञो वृङ ऋदन्तात् उवर्णान्तात् श्विज ऊर्णोश्च कित इम् न स्यात् । सूनः सूनवान् दीनः लूनः जीनः रुग्णः भुग्नः प्रहीणः, भिन्नः निर्विण्णः, प्यानः ग्लानः श्राणः । प्रादेस्तु—पूर्त्तः मूर्त्तः स्यातः ध्यातः मत्तः । वृत भूत श्वित भृत ऊर्णुतः ।

---

यलौ यलान्त स चासौ स्यश्चेति यलस्य तेन युक्त आत् यलस्यात् । तत. सूलादौ च ओदिच्च द च रश्च चौश्च यलस्याच्चेति तस्मात् । पृश्च मूर्च्छश्च स्याश्च ध्याश्च मद चेति । न पृमूर्च्छस्याध्यामद चेति तस्मात् । चीण इति अकर्म्मकात् वक्ष्यमाणेन कर्त्तरि क्ते पूर्वेण दीर्घेऽनेन तस्य नकारे षृ्णं इति णत्वम् एवं चीणवान् । अद्धे इति किम् ? चित कामो मया हिंसित इत्यर्थं । चीशब्दोपादानात् चीञ हिंसे इत्यस्मादपि चीण । भावादौ स्वयमुदाहरिष्यति ॥ १०५२ ॥

वृश्च ऋश्च उश्च श्विज च ऊर्णुश्चेति तस्मात् । वृऋतौ स्याद्यृदृद्रिति वेमत्वे श्रयने श्रसृञ श्रि स्वृ इति वेमत्वे नेम् डीश्वीत्यादिना क्तक्तवत्वो रिम् निषेधे सिद्धे इवतर्तेरित्यादिना क्यादीनाञ्च इन् निषेधे सिद्धे एषा वृञादीनामिहोपादान क्तोच इम् निषेधार्थमेव । तेन वृत्वा तीर्त्वा श्वित्वा इति । एव उवर्णान्तत्वेनैव प्राप्तौ ऊर्णो पृथक् ग्रहणम् कथमि[illegible]ति चेत् सत्यम् । असृञश्विस्वृ इत्यत्र ऊर्णोर्वेमत्वे नेम् डीश्वीत्यनेन वेमधातुभ्य क्तक्तवत्वो रिम [illegible] तत्रैव अनेकाचो वर्जनात् ऊर्णो रिम प्रसक्तौ पुनर्निषेधार्थमिहोपादानम् । स्वादिमाह । सून इति सुयोङ सूतौ कर्म्मणि क्त अनेन इम् निषेधे पूर्वेण तस्य न । एवं सूनवान् । ओदीङय क्षये दीनः । ल्वादिमाह । लूञगि छिदि लून । ज्यागि जरायाम् अत्र वक्ष्यमाणेन कर्त्तरि क्ते ग्रहस्वपाद्योरिति जो जीर्वोऽन्त्य इति दीर्घे जीनः । ओदितमाह । भुजो शौ वक्रणे भुग्न अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ चुङ्क्रुङ्गिति जस्य गकारे पश्चात् तस्य न । ओहाङ्लित्यागे प्रहीण अत्र दामा गै इति ङी नीचोऽन्तरेति णत्वम् । दान्तमाह । इर्भिदा वि हने भिन्नः । आदित इति वक्ष्यमाणादिम् निषेधे पूर्वेण तस्य न । निर्विण्ण इति विद्यौङ भावे पूर्वापरक्षायणादित्वात् णत्वम् । निर्विण्णोऽध्ययने जड इत्यर्थः । रान्तस्य तु गुर्डोंशि उद्यमे गूर्णं । चूर्ङषी दहिचूर्णं इत्यादि ज्ञेयम् । एषु नेम्डीश्वीत्यनेन इमो निषेध. । यलस्यात-

१०५४। दिव्यश्च श्वोऽजिगीषाजास्पर्शे न तस्तयोः।

दिवि अच स्य ५।, अजिगीषा-अज अस्पर्शे ७।, न ।१।, त ६।, तयो ६॥ ।

दिवेरजिगीषायामञ्चते' अजे श्यायतेः अस्पर्शे तयोस्तस्य नः स्यात्। आद्यूनः समक्तः।

१०५५। घन स्पर्शे श्यो जिः।

घन स्पर्शे ७।, श्य ६।, जि १।।

घने स्पर्शे चार्थे श्यो जिः स्यात् तयोः। शीनं घृतम्।

---

माह म्लै क्षमे म्लान आल खेदे आण। एव थै न्यक्करणे दान। यत्तस्मात इति धातोरेव न तु उपसर्गस्य। तेन निर्यात निर्वात इत्यादौ न प्रसङ्ग। अत्र मूर्च्छवर्जनात् येन केनापि प्रकारेण यो रान्तस्तस्मादपि तयोस्तस्य न स्यादिति सूचितम्। तेन राक्तोर्लोप इति छवयोर्लोप स्फुर्छ स्फुर्छा तु विस्मृतौ। आदित इति इमो निषेधे स्फूर्ण स्फूर्ण। थुर्व दुर्वी बधे नेम् डीश्वीति इमो निषेधे थूर्ण दूर्ण इति एव कृश विक्षेपे तृतरेऽभिभवे इत्यादीना इरि क्ते कीर्ण तीर्ण. इत्यादि अत्र धूर्वी हिंस इत्यस्य तु वकारलोपेऽपि कितवे वाच्ये मनीषादित्वात् तस्य नो न स्यात्। तेन धूर्त. कितव। अन्यत्र धूर्णो मम सिद्देन इव इत्यर्थ। प्रादेस्तु। त्रिपृ गिलि तु पालने। अस्य त्वादित्वात् प्राप्तौ निषेधे पूर्त. मूर्च्छा मोह उछ्रये आदित इति इमो निषेधे राच्छोरिति छलोपे मूर्त। ख्यात. ध्यात इति यस्य युक्ताकारान्ततया प्राप्तौ निषेध.। मत्त इति मदीभिर्ष्वङ्ग इर्षे दान्तत्वात् प्राप्तौ निषेध वृदुश्रि इत्यस्य उदाहरणमाह। हत इति हनगत्य हड हतौ वृञ्‌ण सम्भक्तौ इति वयाणाम् ॥१०५३॥

दिविश्च अच्चश्च श्याश्चेति तत् तस्मात्। न जिगीषा अजिगीषा। जम् अपादान न जम् अजम् न स्पर्शोऽस्पर्श'। अजिगीषा च अजश्च अस्पर्शश्चेति तस्मिन्। एषु नञ्‌समास स्पष्टार्थ। आद्यून इति आङ्पूर्वात् दिव्यु जिगीषादौ अकर्मकत्वात् कर्त्त'रि क्ते नेम् डीश्वीति इमो निषेधे क्वौ मूटावित्यूटि अनेन तस्य न। समक्त इति अन्चु मतिपूजनयो कर्म्मणि क्ते नेम् डीश्वीति इमो निषेधे इसुङ्‌न इति नलोपे चुङ्गिति कुङ्‍ि अनेन तस्य अनेन तस्य न ॥ १०५४ ॥

घने द्रवद्रव्यस्य घनीभावे इत्यर्थ। श्यैनमिमि श्यैङ गतौ क्ते अनेन जौ

जिगीषादौ तु द्यूतम्। उदक्तमुदकं कूपात्। शीतं जलम्। घनस्पर्शे किम्? सञ्ज्ञानो वृश्चिकः शीतात् सङ्कुचित इत्यर्थः।

१०५६। प्रतेः।

प्रते ५।।

प्रतिपूर्वस्य श्यो जिः स्यात् तयोः। प्रतिशीनः।

१०५७। अभ्यवात् वा।

अभि अवात् ५।, वा।१।।

अभ्यवात् परस्य श्यो जिः स्यात् वा तयोः। अभिशीनः अभिश्यानः, अवशीनः अवश्यानः।

१०५८। षिञो ढघे न तो ग्रासे।

षिञः ५।, ढघे ७।, न।१।, त ६।, ग्रासे ७।।

षिञः परस्य तयोस्तस्य नः स्यात् ढघे, ग्रासे वाच्ये। सिनो ग्रासः स्वयमेव।

१०५९। पूञो नाशे।

पूञ ५।, नाशे ७।।

पूनो नष्टः। अन्यत्र पूतः पवितः।

---

जीर्णोऽन्य पूर्वेण तस्य न.। पूर्वस्य प्रत्युदाहरणमाह। द्यूतमिति भावे क्त जिगीषाया तस्य नो न स्यात्। उदक्तमिति उद्धृतमित्यर्थः। अत्र कूपादिति अपादानप्रयोगात् तस्य नो न स्यात्। शीतमिति स्पर्शार्थे जि स्यात् तस्य नो न स्यात्। सञ्ज्ञान इति घनस्पर्शाभावे जिर्न स्यात् तस्य तु नकारः स्यात्॥१०५५॥

पृथग्योगात् घनस्पर्शयोर्नानुवृत्तिः॥ १०५६॥

सुगमम्॥ १०५७॥

षिञ्‌गञ्‌ बन्धे इत्यस्मात् कर्मकर्त्तरि क्तस्य तस्य नकारः स्यात् ग्रासे वाच्ये। ग्रासः कवलः। सिनो ग्रासः स्वयमेव बद्ध इत्यर्थः। ग्रासे किम्? सितश्चौरः स्वयमेव। वाक्यमध्यवर्त्तित्वादितदादीनां चतुर्णां नित्यता॥ १०५८॥

पूञ् शोधे इत्यस्य अनेकार्थत्वात् नाशार्थे तयोस्तस्य नकारः स्यात्॥ १०५९॥

## १०६०। टुग्वोः घंश्च।

टुग्वी ६॥, घं १।, च ।१। ।

आभ्यां तयोस्तस्य नः स्यात् तयोर्घंश्च। दूनः गूनः।

## १०६१। व्रश्चेः कङ् च।

व्रश्चे ६।, कङ् ।१।, च ।१। ।

व्रश्चेस्तयोस्तस्य नः स्यात् कङ् च। वृक्णः।

## १०६२। क्रीघ्राचोन्दनुदविन्दो वा।

क्री—विन्द ५।, वा ।१। ।

एभ्यस्तयोस्तस्य नः स्यात् वा। क्रीणः क्रीतः, घ्राणः घ्रातः, त्राणः त्रातः, उन्नः उत्तः, नुन्नः नुत्तः, विन्नः वित्तः।

## १०६३। क्षै-शुष् पचो मकवः।

क्षै शुष् पच ५।, म क-व ।१। ।

एभ्यस्तयोस्तस्य मकव एते क्रमात् स्युः। क्षामः शुष्कः पक्वः।

---

टुदुङोऽनुतापे गुश्वि तु विष्ठोत्सर्गे इत्येताभ्यां तयोस्तस्य न स्यात् तयोर्दीर्घश्च। ओदूङश्च खेदे गुश्वि तु विट्सर्गे इति दीर्घान्ताभ्याम् एवेटसिद्धौ एतद्विधानं ह्रस्वान्तयो टुग्वी प्रयोगनिषेधार्थम् ॥१०६०॥

न च चङ्ङित्वेनैवेष्टसिद्धौ इह कङ्विधानं व्यर्थमिति वाच्यम्। अकृतिकि विशेषविधानात् षङः प्राबल्यत्वात्। वृक्ण इति व्रश्चू छेदे कर्म्मणि क्तः नेम डीश्वीति इमो निषेधे ग्रहस्वपादेरिति ञौ अनेन तस्य नत्वं चस्य च कङि नैमित्तिकस्याप्यभाव इति न्यायात् तालव्यशस्य दन्त्यत्वे स्वादे सो लोप ॥१०६१॥

क्रीण इति क्रीञ् क्रये कर्त्तरि क्तो अनेन तस्य न पक्षे क्रीत। घ्रा गन्धग्रहणे कर्म्मणि क्तो घ्राण घ्रात। त्रैङ पालने कर्म्मणि क्तो त्राण त्रात। उन्दी क्लेदे कर्त्तरि क्तो नेम् डीश्वीति इमो निषेधे हसुङ्न इति नलोपे उन्न उत्त। कर्म्मणि क्तो नुन्न नुत्त। वौ विदङ विचारणे कर्म्मणि क्तो विन्न वित्त। सन्नायान्तु देववात इत्येव वाशब्दस्य व्यवस्थावाचित्वात् ॥१०६२॥

क्षै क्षये क्षाम, शुषौङ शोषे शुष्क। उभयत्र अकर्म्मकत्वात् कर्त्तरि क्तः।

१०६४ । प्रस्त्यो म वा जिश्च ।

प्र स्त्य ५।, म ।१।, वा ।१।, जि १।, च ।१। ।

प्रस्त्यस्तयोस्तस्य मः स्यात् वा जिश्च । प्रस्तीमः प्रस्तीतः । प्रात् किं, संस्त्यानः ।

१०६५ । निर्वाण भित्तर्ण वित्त फुल्लोत्फुल्ल सम्फुल्ल प्रफुल्ल च्चीव क्लश परिक्लशोल्लाघाः ।

निर्वाण—उल्लाघा १॥ ।

एते क्तान्ता निपात्यन्ते । निर्वाणः शान्तः निर्वाण मुक्तिः, भित्त खण्डम् ऋणं विशोध्य, वित्तं धनं वित्तः प्रतीतः । फुल्लो विकसितः उत्फुल्ल सम्फुल्लः प्रफुल्लश्च । च्चीवो मत्तः, क्लशस्तनु परिक्लशश्च, उल्लाघो नीरुजः ।

---

हुत्तौष पच पाके कर्मणि क्तः अन्तरङ्गत्वात् निरवकाशत्वाच्च आदौ चूड् ङिति कुडि चशब्देन तकारस्य व पक्व ॥१०६३॥

अत्र वाशब्दस्य मकारेणैव सम्बन्धत्वात् जिर्नित्य । स्त्यै सहतौ ध्वनौ कर्त्तरि क्त प्रस्तीम प्रस्तीत । प्रात् किम् ? स्त्यान संस्त्यान ॥१०६४॥

वा त गमनगन्धनयो निर्वाण शान्त निर्वाण मुक्ति उभयत्र नोऽर्थोऽन्तरेति स्तम । अन्यत्र निर्वात । अधौ भिदिर भित्त खण्डम् अन्यत्र भिन्नम् । ऋणदुज गतौ ऋण विशोध्यम् अन्यत्र ऋतम् । विदलृमतौ वित्त धन वित्त प्रतीत अन्यत्र विदित । फुल्ल विकसने इमोऽभावे तकारस्य लोपेऽकारस्य पूर्वेण योगे फुल्लादि चतुष्टयम् । केवलस्य उत्सम्प्रपूर्वस्य च निपातनादन्यत्र सुफुल्लित इत्यादि । लोमराशु ञिफलाभिदीत्यस्यैव फुलादेश तकारस्य च लकार कृत्वा फुल्लादि चतुष्टय साधयन्ति । तन्मते फुल्लानि विकसने इत्यस्य फुल्लित इति स्यादेवेति विरोध । स्वमते तु फलनिष्पत्तौ फलज गतौ इति दयो. सेमो: फलित फलितवान् इति । ञिफलाभिदीत्यस्य आन्ति इति इमो निषेधे चफलोदुरिति अकारस्य उकारे प्रफुल्लत इति बोपदेवलिखनात् फुल्लो विकसित इति व्याख्यानाच्च फुल्ल विकसने

## १०६६। क्षुधवसपूजार्थाञ्चागार्ध्यार्थलुभः क्त्वश्चेम्।

क्षुध—लुभ ५।, क्त ६।, च ।१।, इम् ।१।।

एभ्यः परयोस्तयोः क्त्वश्च इम् स्यात्। क्षुधितः उषितः अञ्चितः लुभितः। गतौ तु। अक्तः। गार्ध्यार्थे तु लुब्ध.।

## १०६७। पू क्लिश वम जप व्याश्वसस्तयोर्वा।

पू—व्याश्वस ५।, तयो ६॥, वा ।१।।

एभ्यस्तयोः इम् स्यात् वा।

## १०६८। पू शी धृष मिद क्ष्विद स्विद क्षमार्थमृषां सेमोर्णुः।

पू—मृषा ६॥, सेमो ७॥, णु १।।

एषां णु स्यात् तयोः सेमोः। पवितः, पूतः, क्लिशितः

---

इत्यस्यैव निपातन प्रतीम। चीवृङ् दर्पे चीवो मत्त। सोपसर्गस्य तु प्रचीवित। क्रुशिर्यत्त कार्श्ये। कृशस्तनु एव परिकृश। अन्यत्र परिकृशित। लाघृङ् शक्तौ। उल्लाघो रोगान्मुक्त, केवलस्य छदौ ग्रहणात् प्रोल्लाघित प्रलाघित शक्त. इत्यादौ न निपात॥ १०६५॥

गार्ध्यं लिप्सा। गार्ध्यमर्थो यस्य स गार्ध्यार्थ न गार्ध्यार्थ अगार्ध्यार्थ स चासौ लुभ चेति अगार्ध्यार्थलुभ तत क्षुधश्चेत्यादि द्वन्द्वे तस्मात्। क्षुध वसौ औदित्वात् पूजार्थाञ्चोरुदित्वेन क्त्वाचो वेमत्वे अगार्ध्यार्थलुभस्य वेम् सहेत्यादिना वेमत्वे नेम् डीश्वीति निषेधादप्राप्तौ विधिरयम्। क्षुधित इत्यादि सुगमम्। लुभित इति लुभ विमोहने। गार्ध्ये तु लुभ्यगार्ध्ये क्त। नेम् डीश्वीति इमो निषेधे ढभात्तथोरिति तस्य धे भाप्भसोरिति भस्य व'। क्त्वाचस्तु क्षुधित्वा उषित्वा अञ्चित्वा, लुभस्तु अनेन इमि व्युञोगी ह्वसादेरिति कित्त्वविकल्पे लुभित्वा लोभित्वा॥१०६६॥

पूङ पूञी वृदुश्रीत्यादिना निषेधात क्लिशू उपतापे क्लिशूगतु विबाधे इत्येतयोर्वेमतया नेम् डीश्वीत्यनेन निषेधादप्राप्तौ यमादीना नित्यप्राप्तौ विभाषेयम्॥ १०६७॥

क्षमार्थश्चासौ मृष चेति क्षमार्थ मृष। तत पूश्च शीश्च धृषश्च मिदश्च क्ष्विदश्च

क्लिष्टः, वमितः वान्तः, जपितः जप्तः, विश्वसितः विश्वस्तः, आश्वसितः आश्वस्तः । शयितं धर्षितं मेदितं चेदितं स्वेदितं मर्षितम् । क्षमार्थः किम् ? अपमृषित वाक्यम ।

## १०६९ । भावादिढ़े वोदुङोऽब्वतः ।

भाव आदिढे ७।, वा ।१।, उत् उङ ६।, अप्वत ६। ।

विहिताप उदुङो भावादिढयो र्गुर्वा स्यात् तयोः सेमो. । द्योतित द्युतित तेन । अनपस्तु क्षुधितम् ।

## १०७० । लोपो ञेः ।

लोप १।, ञि ६। ।

ञेर्लोप. स्यात् तयोः सेमो । भावित भावितवान् ।

---

.क्विदश्च क्षमार्थस्य च तेषाम् । सह इमा वर्त्तने यौ तौ सेमौ तयो । पवित इति पुवण इमि अनेन गुण । ञिधृषान् प्रागल्भ्ये भावे क्ते भावादिढे वेति इम् पक्षे ऽनेन गुणे धर्षितमिति । एवम् इमित्या ख्रेहने ष्विदञि मोचे एषामपि साध्यम् । मर्षितमिति मृष्यञ चान्तौ वसोऽरखेति इमि अनेन गुण । अन्यत्र अपमृषित निन्दित वाक्यमित्यर्थ ॥१०६८॥

आदिढ क्रियारम्भ । अपप्रपौ विधाने उपचारात् । अप् अन्त्यस्य अब्वान् तस्य । इयत आह विहिताप इति । विहित कृतोऽप् यस्मात् स विहिताप् तस्य । भ्वादेरदादेश्चेत्यर्थ । अदादे शपोऽख्याविनेऽपि तद्विधानमेतदयम् । भ्वादिस्तु द्युतृलङ द्युत्या भावे क्त वसोऽरखेति इमि अनेन वा गुणे द्योतित द्युतित तेन । एव शुभलङ शोभित शुभितम् । अदादिस्तु लविर रुद रोदे रोदित रुदितम् । तुरत्विर्वेगे तोरित तुरितम् । आदिढे तु घे चादिढे इति वक्ष्यमाणान् कर्त्तरि क्ते प्रद्योतित प्रद्युतित स इत्यादि बोध्यम् । भ्वाद्यदादिभ्यामन्यस्य तु । क्षुधयौ क्षुधि क्षुधित प्रक्षुधित स । एव कुषश उपकर्षे कुषित प्रकुषित स । भावादिढयो किम् ? अकर्म्मकत्वात् कर्त्तरि क्ते द्युतित । सेमोः किम् ? गुप्त दुग्धम् । भावादिढयो क्तवतोरसम्भवेऽपि तयोरित्यस्यानुवर्त्तन परेषु साधकम् ॥१०६९॥

भावित इति ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् वृद्धि. । एव जिमुदक,

१०७१। नेम् डीङ्श्वीदिद्वेमोऽपत्यनेकाज्निष्कुषः।

न ।१।, इम् ।१।, डी श्वि ईदित वेम ५।, अ पति-अनेकाच्-निष्कुष ५।।

डीङ श्वयतेः ईकारेतो विकल्पितेमश्च पत्यादिवर्जात् तयोः इम् न स्यात्। डीनः शूनः दीप्तः गूढः स्तनः ततः। पत्यादेस्तु पतितः दरिद्रितः निष्कुषितः।

१०७२। आदितः।

आदित ५।।

आकारेतस्तयोः इम् न स्यात्। मिन्नः मिन्नवान्।

---

मोदितः मोदितवान्। ञिधृष्ट्वद्धः वद्धितः इत्यादौ गुणः। भन्जो घौ भन्जितः इत्यादौ अगुणनिमित्तकौ नलोपो न स्यात् ॥१०७०॥

ईत् इत् यस्य स ईदित्। वा इम् येभ्य ते वेम। तत डीश्च श्विश्च ईदिच्च वेमश्चेति तस्मात्। पतिश्च अनेकाच्च निष्कुष् च ते, न विद्यन्ते ते यत्र सोऽपत्य-नेकाज् निष्कुष तस्मात्। डीन इति ओङीङय गतौ अनेन इमो निषेधे ओदि-त्त्वात् तस्य न। अविशेषात् डीङच नभोगतौ इत्यस्मादपि इमो निषेधे डीन इति। शून इति टु ओश्वि क्ते ग्रहस्वपाद्योरिति जौ जोर्घोऽन्त्य इति दीर्घे ओदित्त्वात् तस्य न। ईदितमाह। दीपीङ्य् दीपने दीप्तः। वेममाह। गुहञ् सङ्कृतौ क्तः वेमूदिदित्यनेन वेमत्वादिमो निषेधे ह्रोढोभावित्यादि कार्य्ये गूढ। स्तन ध्वनौ वेमूदिदित्यनेन वेमत्वात् इम् निषेधे स्तनः। तनदुञ विस्तृतौ पूर्क्ति मुदित इति वेमत्वात् इम् निषेधे वनतनेति न लोपे ततः। एवं षहजङ शक्तौ वेमन्तहेति वेमत्वात् इमो निषेधे सोढः। नृत्य नर्त्ते नृतृक्रत् इत्यादिना वेमत्वात् इमो निषेधे नृत्तः। पतित दरिद्रितः इत्युभयत्र भसज श्रिस्वृ इत्यनेन वेमत्वेऽपि निष्कुषित इत्यत्र वेमूदिदित्यनेन वेमत्वेऽपि पत्यनेकाज् निष्कुषा वर्जनात् इम् स्यात् ॥१०७१॥

आत् इत् यस्य स आदित् तस्मात्। इञिमिंदा स्नेहने अकर्म्मकत्वात् कर्त्तरि क्तो अनेन इम् निषेधे सूक्ष्माद्योदीति तस्य दस्य च ने मिन्नः। एव मिन्न-वान् ॥१०७२॥

## १०७३ । भावादिढे वा ।

भाव आदिढे ७।, वा ।१। ।

भिन्नं भेदितं तेन । प्रभिन्नः प्रभेदितः सः ।

## १०७४ । शकेर्ढे ।

शके ५।, ढे ७। ।

शकितोऽर्च्चितुं शिवस्तेन, शक्तः ।

## १०७५ । क्षुब्ध वाढ़ स्वान्त ध्वान्त फाण्ट कष्ट घुष्ट लग्न क्लिष्ट विरिब्ध धृष्ट विशस्त परिवृढ़ दृढ़ शृत वृत्ताभ्यर्णाः ।

क्षुब्ध—अभ्यर्णा १।।। ।

एते क्तान्ता निपात्यन्ते । क्षुब्धो मन्थः, वाढं भृशं, स्वान्तं मनः, ध्वान्तं तमः, फाण्टं कषायभेदः, कष्टं कृच्छ्रं, घुष्टं शब्दितं लग्नं सक्तं क्लिष्टम् अस्पष्टं विरिब्धः स्वरः, धृष्टः प्रगल्भः, विशस्तश्च, परिवृढः, प्रभुः, दृढो बली, शृतं पक्वं, वृत्तो गुणः छात्रेण, अभ्यर्णं समीपम् ।

---

आदिढ क्रियारम्भः । भावश्च आदिढश्चेति तस्मिन् । आकारेती धातोर्भावे आदि कर्म्मणि च विहितयोस्तयो इम् न स्यात् वा । भावादिढयो क्तवतोरसम्भवात् क्तस्यैव । इम्निषेधे भिन्नं पक्षे पूर्व्वोद्दृषेति गुणे भेदितं तेन एवं प्रभिन्नः प्रभेदितः स । अत्र वक्ष्यमाणात् कर्त्तरि क्तः ॥१०७३॥

शके. कर्म्मणि विहितयो. इम् न स्यात् वा । कर्म्मणि तु क्तवतोरसम्भवेऽपि तयोरित्यस्यानुवर्त्तनं नेम् सन्निव्यद्दं इत्यादौ सार्थकम् । ढे कि तेन शक्तम् अत्र वेमत्वात् नेम् डीश्वीति नेम् ॥१०७४॥

क्षुभलङ सञ्चले । क्षुब्धो मन्थः आलोडित इति यावत् । अन्यत्र क्षुभित । वाहृङ यत्ने वाढं भृशम् । अन्यत्र वाहितम् । स्वन ण शब्दे स्वान्तं मनः । अन्यत्र

## १०७६ । नेम् संनिव्यर्दः ।

न ।१।, इम् ।१।, स-नि वि अर्द ५। ।

सनिविपूर्वात् अर्दतेस्तयोः इम् न स्यात् । समर्णः न्यर्णः व्यर्णः ।

## १०७७ । वा रुषाम ह्रष त्वर सङ्घुषास्वनः ।

वा ।१।, रुष अम-ह्रष त्वर सङ्घुष आस्वन ५। ।

एभ्यस्तयोः इम् न स्यात् वा । रुष्टः रुषितः, आन्तः अमितः, ह्रष्टः ह्रषितः तूर्णः त्वरितः, सघुष्ट सघुषितम्, आस्वान्तम् आस्वनितम् ।

---

स्वनितम् । मिध्वन रवे ध्वान्तं तम । अन्यत्र ध्वनितम् । फण ण निर्वृ हे निर्वृ ही-ऽनायासेनोत्पत्ति । तस्य प्रेरणञौ फाण्टम् अनायासकृत कषायभेद इत्यर्थ । अनायासकृत फाण्टमित्यमरात् । अन्यत्र फाणितम् । कष वधे कष्ट कृच्छ्रम् । अन्यत्र कषितम् । घुष कि इर्नुतौ विशब्दे घुष्टं शब्दित स्वार्थे निपात्यम् । लग्ने सङ्गे लग्न सक्त स्वार्थे निपात्यम् । म्लेच्छ कि देश्योक्तौ म्लिष्टम् अस्पष्टम् । अन्यत्र म्लेच्छितम् । ङ रेभृशब्दे विरिब्ध स्वर अन्यत्र रेभितम् । ञिधृषा न प्रागल्भ्ये । धृष्ट प्रगल्भ । स्वार्थे निपात्य । किञ्च आदित इति इम् निषेधादेवेष्टसिद्धौ निपातनम् आदि कर्मणि कर्त्तरि क्ते भावादिढे वेति पाक्षिकस्य इमो निषेधार्थम् । शस वधे विशस्त प्रगल्भ क्वावेमतया नेम् डीश्वीत्यनेन इम् निषेधादेवेष्टसिद्धौ प्रगल्भात् अन्यत्र विशसित इत्यत्र इम् प्राप्त्यर्थं निपातनम् । इहि इद्धौ । परिवृढ प्रभु अन्यत्र परिवृहितम् । इहि इद्धौ दृढो बली अन्यत्र दृंहितम् । श्राञ पाके केवलस्य ज्यन्तस्य च शृत पक्वम् । एतच्च क्षीरे हविषि च वाच्ये निपातनम् । अन्यत्र श्राणा श्रपिता यवागू । वृतङुवत्त्व वर्त्तने । ज्यन्तस्य वृत गुणो ग्रन्थविशेषस्क्षाचेष्व अधीत इत्यर्थ । अन्यत्र वर्त्तित । अर्द यातनागतियाचने अभ्यर्णं समीपम् । अन्यत्र अभ्यर्द्दित ॥ १०७५ ॥

अर्द यातनादौ अनेन इम् निषेधे तस्य दस्य च ने समर्णः न्यत्र इमर्णवान् । एभ्य किम् ? अर्द्दित प्रार्द्दित अर्द्दितवान् ॥ १०७६ ॥

रुष्येञिं क्रुधि रुष्ट, रुषित । अस्य वेमस्येति वेमत्वेऽपि नेम् डीश्वीति निषेधा-द्मप्राप्तौ विभाषा, अम गतौ आन्तः ञमुङम्भस्स्वाविति दीर्घ. । पक्षे अमितः

## १०७८। दान्त शान्त पूर्ण दस्त स्पष्ट छन्न-ज्ञप्ता वा।

दान्त-ज्ञप्ता १॥, वा ।१। ।

एते ञ्यन्ताः क्तान्ता निपात्यन्ते वा। पक्षे दमितः शमितः पूरितः दासितः स्पाशितः छादितः ज्ञपितः।

## १०७९। स्फायः स्फी वा।

स्फायः ६।, स्फी ।१।, वा ।१। ।

स्फीतः स्फीतवान्, स्फातः स्फातवान्।

## १०८०। प्यायोऽगेः प्यस्वाङ्गे तु वा।

प्याय ६।, अगे ६।, पी ।१।, अस्वाङ्गे ७, तु ।१।, वा ।१। ।

अगेः प्यायः पी स्यात्, स्वाङ्गात् अन्यत्र तु वा तयोः।

पीनं मुखं, प्यानः पीनः स्वेदः।

---

हृष्यु इर तुष्टौ। हृष्ट हृषित। अस्य क्ताच वेमत्वात् नेम् डीश्वीति निषेधादप्राप्तौ विभाषा। ञित्वरषमङ् स्वरे। स्विवावमवेति ऊटि सूत्वाद्यीदिदिति तस्य ने तूर्णं। पक्षे त्वरित। घुष कि इर्नुतौ वि शब्दे। सङ्घुष्ट सङ्घुषितम्। स्वन ण शब्दे। आस्वान्तम् आस्वनितम्॥ १०७७॥

दमादीना ञ्यन्तानाम् एते क्तान्ता वा निपात्यन्ते। दम्भु इशमे शमुभिर्यशमे प्रेरणञौ कर्म्मणि क्ते दान्तः शान्त इति। पक्षे घटादीति ह्रस्वे वसोऽरस्येति इमि लोपो ञेरिति ञेर्लोपे दमित शमित इति। पूरी यङ पूर्त्तौ प्रेरणञौ पूर्णं। पक्षे इमि ञेर्लोपे पूरित। दसु इर् तु उत्क्षेपणे प्रेरणञौ दस्तः। पक्षे दासित। स्पशंञ ग्रन्थबाधयोः प्रेरणञौ स्पष्ट.। पक्षे स्पाशित। छद किञ सहतौ। स्वार्थञौ छन्नः। पक्षे छादित.। ज्ञप क्म तु ज्ञमौ स्वार्थञौ ज्ञप्त। पक्षे ज्ञपित॥ १०७८॥

स्फायीङ सहद्धौ ईदित्वात् इमो निषेधे स्फीतः स्फीतवान्। पक्षे युोर्लोप इति यलोपे स्फातः स्फातवान्॥ १०७९॥

ओ प्यायीङ वृद्धौ क्ते ईदित्वात् इमो निषेधे ओदित्वात् तस्य ने पीन मुखम्।

## १०८१। आङोऽन्धूधसोः।

आङ ५।, अन्धु उधसोः ७॥।

आङः परस्य प्यायः पी स्यात् तयोः, अन्धूधसोः। आपीनोऽन्धुः, आपीनम् ऊधः।

## १०८२। ह्लादेः ह्नः क्तौ च।

ह्लादे ६।, ह्न १।, क्तौ ७।, च।१।।

ह्लादेः ह्नः स्यात् तयोः क्तौ च। प्रह्लन्नः।

## १०८३। दो-षो-मा-स्थां ङिस्त्यणौ।

दो—स्थां ६॥, ङि १।, ति ७।, अणौ ७।।

एषां ङिः स्यात् अणौ तकारे परे। दितः सितः मितः स्थितः।

## १०८४। छाशोर्वा।

छा शो ६॥, वा।१।।

छितः छातः शितः शातः।

---

अणौ किम्? प्रप्याय मुखम्। य्वोर्लोप इति यलोपः। अस्वाङ्गे तु प्यानः पीनः स्वेद ॥१०८०॥

आङ परस्य प्यायः पी स्यात् तयोः परयोः अन्धौ उधसि च वाच्ये। अन्धु कूप उधो गवादेः स्तन ॥१०८१॥

ह्लादीङ मोदने कर्त्तरि क्ते ईदित्त्वात् इमो निषेधे अनेन ह्रस्वे दान्तत्वात् तस्य दस्य च ने प्रह्लन्नः ह्लन्नवान् क्तौ ह्लत्ति ॥१०८२॥

दो य छेदे दितः। षो य नाशे सितः। मा इति स्वरूपात् मेङ प्रतिदाने माङलि शब्दे माल च माने माङ्य च माने इत्येतेषां मितः। ष्ठा स्थाने स्थितः एवं दितवान् दितिः दित्वा। अणौ किम्? दाता दातुं दावमित्यादि ॥१०८३॥

छाशोर्ङिः स्यात् वा अणौ तकारे। छो य लूनौ एचोऽशित्या छितः छातः एवं शो य निशाने शितः शातः ॥१०८४॥

## १०८५। शो व्रते नित्यम्।

श ६।, व्रते ७।, नित्यम् १।।

सशितं व्रतम्।

## १०८६। धाञो हिः।

धाञ ६।, हि १।।

धाञो हिः स्यात् अणौ ते परे। हितः।

## १०८७। चरफलोऽदुः।

चर फल ६।, अत् ।१।, उ १।।

अनयोः अकार उः स्यात् अणौ ते। चरितं प्रफुल्तः।

## १०८८। दद्दोऽधः।

दत ।१।, द ६।, अध ६।।

दासंज्ञकस्य धावर्जस्य दत् स्यात् अणौ ते। दत्तः। अधः किम्?, धीतः।

---

शो य निशाने इत्यस्य नित्यं ङि स्यात अणौ तकारे व्रते वाच्ये। संशित व्रतम्। अव्रत वाच्ये तस्यैव प्रयोग ॥१०८५॥

हित हितवान् हिति हित्वा हितिमम् ॥१०८६॥

चर गमनेऽदने आचारे अस्मात् क्तक्तवत्वो क्ताचश्च वसोऽरस्येति इमि अव्यवहिततकाराभावादुकाराभावे चरित चरितवान् चरित्वा। क्तौ तु इवततेरिति इमो निषेधे अनेनाकारस्य उकारे व्यंनचतयीति दीर्घे चूर्त्तिरिति। ञिफला भिदि आदित इति इमो निषेधेऽनेनाकारस्य उकारे प्रफुल्त एव फुल्तवान् फुल्ति ॥१०८७॥

दाप लूनौ, दा तु दाने डुदाञ्लि च दैङ पालने इति चतुर्णां दत्तं एवं दत्तवान् दत्ति. दत्त्वा। डुदाञलि दाने इत्यस्य तु दत्तिमम् इत्यपि। अध. किम्? धेट पाने क्ते दामागे ह्राकेति ङी धीतः इत्यादि ॥१०८८॥

## १०८९। ग्यचस्त वा।

गि अच ५।, त ।१।, वा ।१।।

गेरचः परस्य अधो दासंज्ञकस्य वा तः स्यात् अणौ ते। प्रत्तः प्रदत्तः।

## १०९०। र्घौ दा-ते गीचः।

र्घ १।, दा-ते ७।, गीच ६।।

नीत्तम्। इचः किम्? प्रत्त निर्दत्तम्।

## १०९१। जग्धोऽदो यपि च।

जग्ध १।, अद ६।, यपि ७।, च ।१।।

अदो जग्ध स्यात् अणौ ते यपि च। जग्धम्।

## १०९२। घे चादि-ढे क्तः।

घे ७।, च ।१।, आदिढे ७।, क्त १।।

आदिढे विहितः क्तो घे स्यात् ढभावयोश्च। प्रकृतः कटं सः, प्रकृतः कटस्तेन। [१०५१] चे र्घ इति प्रचीणः सः।

---

प्रत्त प्रत्तवान् प्रत्ति। कुदाञ्जलि इत्यस्य तु प्रत्तिममित्यपि। पक्षे प्रदत्तः इत्यादि। अघ॰ किम्? धेट पाने प्रधीत। अच किम्? निर्दत्त॰ ॥१०८९॥

बाहयमध्यवर्त्तित्वादेतदाद्यष्टाना नित्यत्वम्। गे इचो दीर्घ स्यात् दास्थानजाते तकारे परे। नीत्तमिति पूर्वेण दा स्थाने तकारेऽनेन नेर्दीर्घ एव नीत्तवान् नीत्ति॰ परीत्तम् अनुत्तम्, इच किम् प्रत्तम् ॥१०९०॥

अद्लौ क्त अनेन जग्धादेशे पश्चात् यबादेशेऽपीष्टसिद्धौ यप पृथग् ग्रहण ज्ञापयति यबादेशादादौ प्रकृते किमपि कार्य्यं न स्यादिति। तेन विमुच्य इत्यादौ न कुङ् प्रविश्य इत्यादौ न षड् प्रपृच्छ्य इत्यादौ न षङ् प्रविश्य इत्यादौ न ढ। आपृच्छ्य प्रदीव्य अत्र शकार ऊटौ न स्त। एव क्तौ परे रुढौ जग्धादेशो न स्यादित्यपि। तेन अन्नं खिन्नतण्डुले रूढम्। यत्र क्रियापदत्वेन प्रयुज्यते तत्र तु स्यादेव। जग्ध फल तेन खादितमित्यर्थ. ॥१०९१॥

प्रक्षीणं प्रक्षितं तेन, क्षीणः क्षितोऽयं तपस्वी, क्षीणायुः क्षितायुः शत्रुः ।

१०९३ । गत्यर्थाढ़शीस्थासवसजनजॄश्लिषरुहः ।

गत्यर्थ—रुह ५ । ।

एभ्यो षे क्तः स्यात् ढभावयोश्च । गङ्गां गतः कृष्णः प्राप्तः, शयितः, शेषमधिशयितो विष्णुः, वैकुण्ठमधिष्ठितः, शिवमुपासितः, हरिदिनमुपोषितः, राममनुजातोऽच्युतः, विश्वमनुजीर्णोऽनन्तः लक्ष्मीमाश्लिष्टो मुकुन्दः, गरुडमधिरूढो गोविन्दः ।

---

कर्म्मशब्दः क्रियाव्याप्यवाची क्रियामात्रवाची च कर्म्म क्रिया तत् सातत्ये इत्यमरात् । तेन क्रियाव्याप्यकर्म्मणी ढसञ्ज्ञाविधानेन क्रियाया अपि ढे सञ्ज्ञासिद्धिः । ततश्च आदिढम् आदिक्रिया क्रियारम्भ इति यावत् । प्रकृतः कटः स, कटं कर्त्तुमारब्धवान् इत्यर्थः । प्रकृतं कटस्तेन कटं कर्त्तुमारब्धं इत्यर्थः । अत्र प्रशब्दः आदिकर्म्मद्योतकः । कदाचित् प्रशब्दाभावेऽपि आदिकर्म्म प्रयोगो दृश्यते । यथा वृत्रघ्नाचलविट्शूद्रैः साङ्गोपाङ्गैरिहोदिता इत्यमरः । धातवः पठिताः पाठः सूत्रलोकागमस्थिता इति वोपदेवश्च । प्रक्षीणः स इति कर्त्तरि क्ते क्षेर्द इति दीर्घे सूत्वाद्योदिदिति तस्य नकारे षृर्ण इति णत्वम् । प्रक्षीणं प्रक्षितं तेन । अत्र भावे क्ते दीर्घपक्षे प्रक्षीणं तदभावे प्रक्षितम् । दैन्ये तु क्षीणः क्षितोऽयम् तपस्वी । अत्राकर्म्मकत्वात् कर्त्तरि क्त उपपन्न इत्यर्थः । आक्रोशे तु क्षीणायुः क्षितायुः शत्रुः अत्रापि कर्त्तरि क्तः ॥१०९२॥

नास्ति ढं येषां ते अढाः । गत्यर्थाश्च अढाश्चेत्यादिसमाहारे तस्मात् । षे च क्त इति त्रयमनुवर्त्तते । गङ्गां गत इति श्रौगमॢ गत्या कर्त्तरि क्ते वनतनेति नलोपः । गत्यर्थप्राप्त्यर्थयोरैक्यं दर्शयन्नाह । कृष्णः प्राप्त इति आप्लृनौ कि व्यापने । एवं लभ डुौ ङष प्राप्तौ धनं लब्ध. । परसूत्रेणैवेष्टसिद्धेरेव गत्यर्थ ग्रहणं ज्ञापयति । गत्यर्थप्राप्त्यर्थयोरैक्यात् ताभ्यां कर्त्तरि क्तः स्यात् । अधिकरणे तु गत्यर्थादेव क्तो न तु प्राप्त्यर्थादिति । शीङ्लजि स्वप्ने अकर्म्मकत्वात् कर्त्तरि क्ते वसोऽरस्येति इमि पूशी ङ्षेति गुणे शयितः । अकर्म्मकत्वादेव प्राप्तौ शीस्थादीनां ग्रहणं सकर्म्मकत्वेऽपि प्राप्त्यर्थम् । तेन अधिकरणस्य कर्म्मत्वेऽपि शेष-

## १०९४ । ध्रौव्यगत्यदनार्थात् डे च ।

ध्रौव्य-गति अदनार्थात् ५।, डे ७।, च ।१।।

**निश्चलार्थात् गत्यर्थात् भोजनार्थाच्च क्तो डे स्यात् ढभावे घे च ।**

**मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।**
**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥**

---

मधिशयित । ञिष्ठा स्थाने अधिकरणस्य कर्मत्वेऽपि कर्त्तरि क्ते दीपीमास्थामिति डौ वैकुण्ठमधिष्ठित । ञिव्ला सङ उपवेशे उपपूर्वत्वेन आराधनार्थत्वात् सकर्म्मकत्वेऽपि शिवमुपासित । अधिकरणस्य कर्म्मत्वेऽपि पीठमध्यासित । वसै औ निवासे देशाध्वकालेत्यादिना कालस्य कर्म्मत्वेऽपि कर्त्तरि क्ते चुवबसेति इमि ग्रहस्वपाद्योरिति जौ शासवसेति षत्वे हरिदिनमुपोषित । जनीम्यङ जनौ । जॄङ्रवस्यच इत्येतयो कर्म्मासम्भवेऽपि पृथक् ग्रहणं ज्ञापयति । अनुपूर्वयोरेतयो प्रयोगे यस्य पश्चात् जननं यस्य पश्चात् जरणञ्च तस्य कर्म्मत्व स्यादिति । तेन राममनुजातोऽच्युत अत्र नेमडोश्वीति इमो निषध खनसनेति ङा । विश्वमनुजीर्णोऽनन्त । अत्र वॄदुश्वीति इमो निषेधे ऋदिरणाविति इरि र्व्यंनचतयोति दीर्घे सूत्वादोदिदिति तस्य न । श्लिषौषन्दूजि ङ्कि षे आलिङ्गनार्थे सकर्म्मकत्वेऽपि लक्ष्मीमाश्लिष्टो मुकुन्द । ञिज रुहौ जन्याम् । आरोहणार्थे सकर्मकत्वेऽपि कर्त्तरि क्ते । औदित्वादिमोऽभावे ह्रोढोभावित्यादिकार्य्ये गरुडमधिरूढ. । एव वृषमारूढः शिव ॥१०९३॥

ध्रुवो निश्चलस्तस्य भावो ध्रौव्यम् । मुकुन्दस्येत्यादि मुकुन्द दिदृक्षवो गोप्य इत्यूचु । तत् किमित्याह मुकुन्दस्येद कुञ्जमासितम् । ञिलासङ उपवेशे । उपवेशनार्थत्वेन निश्चलार्थत्वात् अधिकरणे क्ते आसितम् । अत्र इदमित्यधिकरणमुक्तम् । रमापतेरिद कुञ्ज यातम् । या ल गतौ अधिकरणे क्ते यातम् अत्र इदमित्यधिकरणमुक्तम् । अनन्तस्य एतत् तरुतल भुक्त भुजो घौ चार्ण भक्षे अधिकरणे क्ते भुक्तम् अत्र एतदिति अधिकरणमुक्तम् । सर्वत्र कामुकसङ्गेत्यादिना कर्त्तरि षष्ठी । चकारात् ढभावघेषु चेति । कर्म्मणि यथा मुकुन्देन पीठमध्यासितम् । मुकुन्देन मथुरा याता मुकुन्देन याज्ञिकान्न भुक्तमिति । भावे तु मुकुन्देन आसित यातं भुक्तमिति, कर्त्तरि तु मुकुन्द पीठे आसित. मथुरा यात याज्ञिकान्नं भुक्त इति ॥ १०९४ ॥

## १०९५ । ज्ञार्चेच्छार्थञोच्छीलादेः सति ।

ज्ञा अर्चा इच्छार्थ ञि इत् शीलादेः ५।, सति ७। ।

**एभ्यो वर्त्तमाने क्तः स्यात् तेषु । विदितः, पूजितः वाञ्छितः, इद्धः, शीलितः, शिवोऽनुवर्त्तते ।**

## १०९६ । ठी-प-म-वत् क्वसु कानौ ।

ठी-पम वत् ।१॥, क्वसु कानौ १॥ ।

**धोरेतौ क्रमात् ठ्याः प-म-वत् स्तः । बभञ्वान्, जजागवान् जजागृवान्, दुद्यूवान्, दिदिवान्, विविश्वान् विविच्छान् ।**

---

ज्ञा ज्ञानम् । ज्ञाश्च अर्चा च इच्छा च ज्ञार्चेच्छा । ज्ञार्चेच्छा अर्था येषा ते ज्ञार्चेच्छार्था । ञिरित् यस्य स ञीत् । ज्ञार्चेच्छार्थाश्च ञीच्च शीलादिश्चेति तस्मात् । पूर्वतश्चकारोऽनुवर्त्तते । तेन एभ्यो वर्त्तमाने क्त. स्यात् चकारात् अतीते च । एतत् तु कालमात्रविधायक, कर्म्मभावकर्त्तृषु तु यथासम्भव स्यादित्यर्थ । विदल मतौ विदित ज्ञायते इत्यर्थ । पूज क पूजे पूजित लोपो ञेरिति ञेर्लोप । पूज्यते इत्यर्थ । वाछि कामे वाञ्छित वाञ्छ्यते इत्यर्थ । एष कर्म्मणि क्त । इन्धीञिधङ द्युतौ अकर्म्मकत्वात् कर्त्तरि क्त नेम् ङीश्चेति इमो निषेधे इसुङ्क्ष इति न लोपे ढभात्तथोरिति तस्य धे झपक्षसोरिति धस्य दकारे इद्ध दीप्यते इत्यर्थ । ञिशील स्यात् समाधौ कर्म्मणि क्त शीलित ध्यायत इत्यर्थ । आदिशब्द ञि रच पालने रचित इत्यादि । स्वमते तु शीङादयोऽपि ञिकारानुबन्धा । शिवोऽनुवर्त्तते इति प्रतिपदेन शिव इति पद योक्तव्यमित्यर्थ. न च विशेषविधानादेभ्यो वर्त्तमाने एव क्त स्यात् नलसीत इति वाच्यम् अतीते बहुतरप्रयोगदर्शनात् । यथा परस्परेण विज्ञात तेषूपायनपाणिषु । राज्ञा हिमवत सारो राज्ञ सारो हिमाद्रिणेति रघौ कालिदास । ज्ञातो लङ्केश्वर कृच्छादाञ्जनेयेन तत् व्रत इति दण्डी । जनैरविदितविभवो भवानीपतिरिति भारवि. । स पुण्यकर्म्मा भुवि पूजितो नृपैरित्यादि सुश्रुत न च एष्वपि वर्त्तमाने क्त इति वाच्य वर्त्तमाने क्ते कामुकसङ्के इति कर्त्तरि षष्ठ्यापत्ते ॥१०९५॥

ठीपमे इव ठीपमवत् । तेनातीते काले कर्त्तरि वाच्ये परस्मैपदिभ्य क्वसु,

## १०९७। वसोर्घसेकाज्विनात इम्।

वसो. ६।, घस एकाच् ऋ इन-आत' ५।, इम् ।१।।

**घस एकाचोऽर्त्तेरिन आदन्ताच्च वसोरिम् स्यात् नान्यतः।**
**जच्चिवात् आदिवान् आरिवान् ईयिवान् ददिवान्।**

---

आत्मनेपदिभ्य कानः उभयपदिभ्यो इय स्यात्। एवमतीते काले कर्म्मणि सर्व-धातुभ्य. भावे त्वकर्म्मकेभ्य कान स्यात् इत्यर्थ। ठीपमत्वेनैव कित्त्वसिद्धे एतयो पुन कित्करण स्यात् ठग्पिदिति विभाषाबाधनार्थं तेन भन्ज धौ मोटने क्वसौ ह्ववतेरिति इम् निषेधे हमुङ्क् इति न लोपे दित्वादौ वभज्वस् इति लिङ्गस्य उदित्वात् त्रिदच इति नुगि नतुम्महन्न इति दीर्घे सयोगान्तलोपे वभज्वान्। एवम् उदित्वादीपि वभञ्जुषी। जाग्ट च्यु, जागरे क्वसौ जाग्रोऽणव्वीति गुणविकल्पे जजागृवान्। दिव्यु जिगीषादौ क्वसौ क्वौ शूटाविति ऊटि दित्वे दुद्यूवान्। पचे य्वोर्लोप इजि वर्लोपे दिदिवान्। एव विछ्य गतौ छकारस्य शकारविकल्पे विविश्वान् विविच्छ्वान्॥ १०९६॥

घस च एकाच ऋश्च इन् च आच्चेति तस्मात्। घस पृथग्ग्रहणात् एकाजिति दित्वे क्वतेऽपि य एकाच् स एव ग्राह्य। नेमसुमित्यनेन असुम् क्वादिभिन्नधातुभ्य ठग्रा इम. प्राप्तावपि ह्ववतेरिति निषेधादप्राप्तौ पुनरिह हसन्ताना मध्ये घसते-र्द्वित्वेऽप्येकाच आदन्तानाम् ऋ इति द्वाभ्याञ्च परस्य वसोरिम् स्यादिति घसादे र्विधौ सुतरामन्यतोऽप्राप्तौ नान्यत इति ज्ञापयति कदाचिदन्यतोऽपि स्यादिति। तेन चवाय साधु. चचिय. इत्यादौ कारकविधावव्यकारकात् प्रत्ययो ज्ञात। जच्चि-वानिति। अद्लृ क्वसौ व्या वेति घसादेशे अनेन इमि दित्वादिकार्य्ये हनगमेति भप्भसोरिति घस कले शासवसेति षत्वम्। पचे अदो दित्वे दग्र लोपे सन्धौ एकाचत्वात् इमि आदिवान्। एवम् ईड ईडिवान्। एवञ्च यज खेर्मूलस्यापि जौ ईजिवान् घस ऊषिवान् इत्यादि। एवञ्च डुत्रौष पच पाके तृफलेति खेर्लोपे पेचिवान् भन्ज जौ भेजिवानित्यादि। ऋर्जिगत्याम् ऋ प्रापे च इति द्वयो. क्वसौ दित्वे खेर्ऋकारस्य अत्वे स्याद्यत्र्यत इति गुणे सन्धौ इमि आरिवान्। स्वरूपग्रह-णात् ऋन हिंसे इत्यस्य तु स्याद्यत्र्य त अतिग्रहणात् गुणाभावे आदिगेचो-र्रिति गुणे आरिवान्। इन ग ौ कितिर्घ इति दीर्घे इमि यिणौ-र्घ्याविति मूलस्य यकारे ईयिवान्। दाग्रहणात् क्वसौ दित्वे इमि आद्योरिदि

## १०९८। हन गम दृश विश विन्दो वा।

हन—विन्द ५।, वा ।१। ।

एभ्यो वसोरिम् स्यात् वा। जघ्निवान् जघन्वान् जग्मिवान् जगन्वान्, ददृशिवान् ददृश्वान्, विविशिवान् विविश्वान्, विविदिवान् विविद्वान्।

## १०९९। दाश्वान् साह्वान् मीढ्वान्।

दाश्वान् साह्वान् मीढ्वान् ।१॥।

एते वस्वन्ता निपात्यन्ते। चक्राण', जजागराण:, जजाग्राण:, अनूचान:।

## ११००। क्वी-प-म-वत् शतृ शानौ।

क्वी प म वत् ।१॥, शतृ शानौ १॥।

धोरितौ क्रमात् क्वा: प म वत् स्त:। पचन्।

---

आलोपे दिदिवान्। एवं व्या चव्यिवान् इत्यादि। एभ्य किम्? चिती ज्ञाने चिचित्वान्। इगताविति भौवादिकस्य ईवान्॥ १०९७॥

हनलौ क्वसौ इमि द्वित्वे हनगमेति उङ् लोपे हनो घ्नौ इति घ्नादेशे जघ्निवान्। पक्षे ह्विहोंघ इति हस्य घे जघन्वान्। औगम्लृ क्वसौ इमि उङ् लोपे जग्मिवान्। पक्षे धोमं न इति मस्य नकारे जगन्वान्। इरदृशौ क्वसौ इमि ददृशिवान् पक्षे ददृश्वान्। औविश क्वसौ इमि विविशिवान् पक्षे विविश्वान्। विद लृ ञलञौ लाभे क्वसौ इमि विविदिवान् पक्षे विविद्वान्॥ १०९८॥

दाशृङ दाने तालव्यान्त दाश्वान्। दन्त्यान्त इत्येके। सह्यकि शक्तौ साह्वान्। मिहौ सिचि मीढ्वान्। क्वानमुदाहरति। कृञदङु च उभयपदित्वात् कर्त्तरि क्वाने चक्राण कुम्भ कुम्भकार। एव कर्मणि क्वाने कुम्भकारैण कुम्भश्चक्राण। भावे तु क्वानेन जजाग्राणम्। जागृल्लु जागरे क्वानस्य कर्म्मत्वात् सकर्म्मकत्वे कर्मणि क्वाने जाग्रोऽणव्वीति विभाषया गुणे पान्ये न मासी जजाग्राण जजागराण इत्यर्थ। अनुपूर्व ब्रूञ्जुतौ क्वामि वचादेशे द्वित्वे खेर्मूलस्य च ञौ अनूचान॥१०९९॥

क्वी पमे इञ क्वीपमवत्। एतेन वर्त्तमानकाले कर्त्तरि परस्मैपदिभ्य: शतृ

## ११०१। शानेऽतो मन्।

शाने ७।, अत ६।, मन् ।१।

अकारस्य मन् स्यात् शाने। पचमानः।

## ११०२। या सोऽस्य।

ई ।१।, आ ।१।, आस ५।, अस्य ६।।

आसः परस्यास्य (शानस्य) आ ई स्यात्। आसीनः।

## ११०३। वेत्तेः शतुः क्वसुर्वा।

वेत्ते ५।, शतुः ६।, क्वसु १।, वा ।१।।

विदः परस्य शतुः क्वसुः स्यात् वा। विद्वान् विदन्।

---

आत्मनेपदिभ्य शानः उभयपदिभ्यो द्वय स्यात्। एव वर्त्तमाने कर्म्मणि सकर्म्मकेभ्य भावे त्वकर्म्मकेभ्य शान. स्यात् इत्यर्थ। शित्त्वाद्रसञ्ज्ञाया शवादौ गच्छन् दीव्यन् खनन् तुदन् इत्यादि। एव पित्त्वाभावाच्च ङित्वे रुल ध्वनौ रुवन् टुनुल स्तुतौ स्तुवन् इत्यादौ गुणाभावे नुध्वोरित्युव्। एवञ्च ऋर्लि गत्या शतृशानयो शित्त्वाद्दच्छादेशे इयृच्छत् समियृच्छानः। कातन्त्रास्तु। शतृशानयो. प्रथमान्तेन सामान्याधिकरणाभावे आमन्त्रणे शतृशानौ न स्त। तेन हे पचन् छात्र' हे पचमान छात्र। इति स्यात्। हे पचन्। हे पचमान। इत्यादि न स्यात् इत्याहु। एतयो प्रयोगे क्रियासमाप्तिर्नास्तीति बोध्यम्। पचन्निति डुपचौष श पच पाके शतृ वे शप्रे लोपोऽत इत्यकारलोपे ऋदित्त्वात् न्रिदच इति नुमि स्यान्तस्य लुप् स्त्रियाम् इपि पचन्ती ॥११००॥

पचमान इति कर्त्तरि शान। कर्त्तरि विप्र ओदनं पचमान आस्ते कर्म्मणि विप्रेण पच्यमान ओदन शोभते। भावे तु विप्रेण दीव्यमानम् ॥११०१॥

ई आ इत्युभय लुप्तप्रथमैकम्। आस. परस्य शानस्य आकार ईकार स्यात् इत्यर्थ। जिलासङ् कर्त्तरि शाने शप् तस्य लुकि अनेन आकारस्य ईकारे आसीनः ॥११०२॥

वेत्ते परस्य शतु' क्वसु. स्यात् वा। शतृस्थानजातत्वेन ङित्वम् अतीतबोधकत्वञ्च न स्यात्। विदल मतौ शतृ तस्य स्थानेऽनेन क्वसौ विद्वान्। पक्षे विदन् ॥११०३॥

## ११०४। शक्तिवयस्ताच्छील्ये शतुः शानः।

वक्ति वयस ताच्छील्ये ७।, शतु ६।, शानः १।।

शत्रुं निघ्नानः, कवच बिभ्राणः, भोगं भुञ्जानः।

## ११०५। तौ-प-म-वत् स्यट्-स्यमानौ।

तौ प म-वत् ।१॥, स्यट्-स्यमानौ १॥।

धोः एतौ क्रमात् त्याः प म-वत् स्तः। करिष्यन् करिष्यमाणः।

इति क्तादिपादः।

---

एष्वर्थेषु शतुः स्थाने शान स्यात्। शत्रु निघ्नान इति हनलौ गतौ शट शक्त्यर्थे ऽनेन शतु स्थाने शाने शपो लुकि हनगमित्युड लोपे हनो ञ्णो घ्न इति घ्नादेश। कवच विभ्राण इति भृञि ट्टु शट यौवनवयस्यर्थेऽनेन शतु स्थाने शाने शपो लुकि ह्वादीरेद्विरिति द्वित्वे खेर्भकारस्य वकारे पृभ्रादेरिति ञौ ष्‌ र्‌णं इति णत्वम्। भोग भुञ्जान इति भुजघो वाघे शट ताच्छील्ये शतु स्थाने शाने रुधादित्वा न्नणि नणोर्न्न इति नणो नकारे तस्य ञकार.। ष्टञङ स्थितौ इत्यस्य प्रेरणे ञौ धारि। एवम् अधीङल अध्ययने इत्येताभ्यामकृच्छ्रे शट एव स्यात् न तु शान इति वक्तव्यम्। धारयन्नुपनिषदम् अधीयन् तर्कम्। कृच्छ्रे तु धारयमाण अधीयान. ॥११०४॥

तेन भविष्यत्काले कर्त्तरि परस्मैपदिभ्य स्यट आत्मनेपदिभ्य. स्यमानः उभयपदिभ्यो द्वय स्यात्। एव भविष्यत्काले कर्मणि सकर्मकेभ्यो भावे त्वकर्मकेभ्यः स्यमान. स्यादित्यर्थ. ॥११०५॥

इति क्तादिपाद।

---

## चतुर्थः पादः—इष्ण्वादिः ।

**११९६ । ञि भ्राज भू सह रुच चर वृध वृत प्रजनापत्रपालंकृ निराकृन्मद पत पच इष्णु र्घे ।**

ञि—पच ५।, इष्णु १।, घे ७। ।

एभ्य इष्णुः स्यात् घे । कारयिष्णुः, भ्राजिष्णुः भविष्णुः सहिष्णुः रोचिष्णुः चरिष्णुः वर्द्धिष्णुः वर्त्तिष्णुः प्रजनिष्णुः अपत्रपिष्णुः अलङ्करिष्णुः निराकरिष्णुः उन्मदिष्णुः उत्पतिष्णुः उत्पचिष्णुः ।

**११०७ । ष्णुक् भू-जेः ।**

ष्णुक् ।१।, भू-जि ५। ।

आभ्यां ष्णुक् स्यात् घे । भूष्णुः जिष्णुः ।

**११०८ । ग्ला म्ला स्था क्षि पच परिमृजः स्नुः ।**

ग्ला—परिमृज: ५।, स्नु: १। ।

एभ्यः स्नुः स्यात् घे । ग्लास्नुः म्लास्नुः स्थास्नु क्षेष्णुः पक्ष्णुः परिमार्क्ष्णुः ।

---

प्रात् जन प्रजन अपात्रप अपत्रप अलम् कृ अलङ्कृ । निर् आ निरा तस्मात् कृ निराकृ । मद च पत च पच चेति मदपतपच उदो मदपतपच उन्मदपतपच । ततो ञिश्च भ्राजश्चेत्यादि तस्मात् । ञिर्ञ्यन्त । मण्डूकप्लुताधिकारात् शक्तिवय-स्ताच्छील्ये इत्यस्मात् ताच्छील्यमनुवर्त्तते तस्य च स्वय श्रविस प्रादिति पर्य्यन्तेष्वधिकार । तेन कारयितु शीलमस्येत्यादिवाक्ये कारयिष्णुरित्यादि ॥ ११०६ ॥

भूष्णु अत्र कित्वात् इदुश्चीति इम् न स्यात् गुणाभावश्च ॥ ११०७ ॥

**११०९ । क्षिप त्रस गृध धृषः क्नुः ।**

क्षिप—धृष ५।, क्नु १।।

एभ्यः क्नुः स्यात् घे । क्षिप्नुः त्रस्नुः गृध्नुः धृष्णुः ।

**१११० । शॄ स्था भू कम गम हन लष वृष पत पदो ञुकः ।**

शॄ—पद' ५।, ञुक' १।।

एभ्यो ञुकः स्यात् घे । शारुकः स्थायुकः भावुकः कामुकः गामुकः घातुकः लाषुकः वर्षुकः पातुकः पादुकः ।

**११११ । भिक्ष जल्प कुट्ट लुण्टवृञः षाकः ।**

भिक्ष—वृञ' ५।, षाक १।।

एभ्यः षाकः स्यात् घे । भिक्षाकी जल्पाकी कुट्टाकी लुण्टाकी वराकी ।

---

ग्लास्नुरित्यादि त्रय सुगमम् । चेष्णुरिति एकाजिवर्णान्तत्वात् इमो निषेधे गुणे षत्वम् । पक्ष्णुरिति औदित्वात् नेम् चुडिति कुडि षत्वम् । परिमार्ष्णुरिति मृजलूष शुद्धौ ऊदित्वात् अनिम् पक्षे मृजोऽकडिति वृद्धौ शक्राजेति षड्ं षढो कः से इति षस्य कत्वे क्लिलादिति षत्वम् । अस्य इम् पक्षे न प्रयोगः ॥ ११०८ ॥

क्षिप शञी क्षिप्यौ क्षिप्नु कित्वात् न गुण । त्रस त्रसीण भये त्रस्नु, । गृधिर्मु च लिप्से गृध्नु । ञिधृषा न प्रागल्भ्ये धृष्णु. ॥ ११०९ ॥

शृगि हिंसे ञिष्ठा स्थाने , भूस्वरूपम् । कमुङ स्पृहि । औगम् लृ गत्याम् । हनली गतौ । लष्य लषञ स्पृहि । वृषु सेचने । पत्लृज गत्याम् । पद्यौङ गतौ । एभ्यो ञुकः स्यात् घे । ञित्वात् वृद्धि. । स्थायुक इत्यत्र यनञ्णित् क्रादिष्वीति यन् । घातुक इत्यत्र खेर्हों घ इति हस्य घे हनस्तडिति तङ् ॥ १११० ॥

भिक्षङ लाभादौ । जल्पवाचि । कुट्टकङ प्रतापने कुट्टक कुत्साक्छिदोरिति द्वयम् । लुण्टक्यवज्ञा चौर्ये वृङग सम्भक्तौ । एभ्य. षाकः स्यात् घे । षित्वादीपि ॥ ११११ ॥

## ११११२ । पति स्पृहि स्पृहि शीङ आलुः ।

पति—शीङ ५।, आलु १।।

एभ्यः आलुः स्यात् घे । पतयालुः स्पृहयालुः स्पृहयालुः शयालुः ।

## १११३ । शत सद सि धे दो रुः ।

शत—द ५।, रु १।।

एभ्यो रुः स्यात् घे । शत्रुः सद्रुः सेरुः धारुः दारुः ।

## १११४ । घसस्वदः क्मरः ।

घस-स्व अद ५।, क्मर १।।

एभ्य' क्मरः स्यात् घे । घस्मर' स्मरः अद्मरः ।

## १११५ । मिद भासभन्जो घुरः ।

मिद भास भन्ज ५।, घुर. १।।

एभ्यो घुरः स्यात् घे । मेदुरः भासुरः भङ्गुरः ।

## १११६ । छिदभिदविदः कुरः ।

छिद-भिद-विद' ५।, कुरः १।।

एभ्यः कुरः स्यात् घे । छिदुरः भिदुरः विदुरः ।

---

पतत् कैश्वगत्यौ. । स्पृहत् काङग्रहे । स्पृहत्क्रोसे । वयोऽदन्तचुरादय । शीङ्लजि स्वप्ने । एभ्यः आलुः स्यात् घे । ञेर्लोप इत्यत्र आलुवर्जनात् न ञेर्लोप ॥१११२॥

शदलृजौ शाते। षदलृजौश विषादे । षिनगञ बन्धे । धेट पाने । धेटः पृथग् ग्रहणात् दा इति स्वरूपम् । तेन दाल लूनौ दाञ दाने डुदाञिलृच देङ पालने दैप शोधने दोषच्छेदे इति षणां ग्रहणम् एभ्यो रुः स्यात् घे ॥१११३॥

लृघसौ भक्षे । स्पृगतौ । अदृौ भक्षे । एभ्य' क्मर. स्यात् घे कित्त्वात् न गुण ॥१११४॥

ञिमिदा स्नेहने । भासङ दीप्तौ । भन्जधौ मोटने । एभ्यो घुर' स्यात् घे । भन्ज धातोरनेकार्थत्वात् वक्रीभावे घुरे कृते घिति जस्य गकारे भङ्गुरं काष्ठ वक्रमित्यर्थः । यत्र पर भनक्ति तत्र तु भङ्क्ता इत्येव ॥१११५॥

**१११७। जागृ यङन्त यज जप वद दन्श ऊकः।**

जागृ—दन्श ५।, ऊक १।।

एभ्यः ऊकः स्यात् घे। जागरूकः यायजूकः जञ्जपूकः वावदूकः दन्दशूकः।

**१११८। यङन्त-चल पत सह वहः किः।**

यङन्त-वह ५।, कि १।।

एभ्य किः स्यात् घे। चाचलिः पापतिः सासहिः वावहिः।

**१११९। द्विश्चादृङ्लोपिनः।**

द्वि. १।, च।१। आत् ऋ उङ् लोपिन ५।।

आदन्तात् ऋवर्णान्तात् उङ्लोपिनश्च किः स्यात् घे तेषाञ्च द्वित्वम्। ददिः चक्रिः जज्ञिः।

---

छिनत्तीति छिदुर। भिनत्तीति भिदुरः। वेत्तीति विदुर। एषु कित्त्वात् न गुण। छिद्भिदी कर्म्मकर्त्तरीति केचित्। तद्धेयम्। हस्ती विप्रचच्छिदुर इति दोषात्यकार भिदुर इत्यादिदर्शनात् ॥१११६॥

यजश्च जपश्च वदश्च दन्श चेति। यङन्तश्चासौ यज जप वद दन्श चेति पश्चात् जागृश्च यङन्त यज जप वद दन्श चेति तस्मात्। जागर्त्तीति जागरूक। पुनः पुनरतिशयेन वा यजतीति यङ् यायज्य भागात् ऊके हसात् लोप इत्यकारयकारयोर्लोपे यायजूक। एव जञ्जप्यते इति जञ्जपूक। वदेवाचि वावद्यते इति वावदूकः। दन्दश्यते इति दन्दशूकः ॥१११७॥

चलज गतौ। पत्यङ्ने। सह्यकि शक्तौ सह अङ्च इति द्वयम्। वहैञौ प्रापणे। यङन्तेभ्य एभ्य कि स्यात् घे। पापतिरिति नीन वन्च इत्यत्र पतल न गत्याम् इत्यस्य ग्रहणात् पत्यङ्ने इत्यस्मात्। यङि खेर्नीनीऽप्राप्तौ घौं नित इति दीर्घे पापत्यभागात् कौ हसात् लोप इत्यकारयकारयोर्लोप ॥१११८॥

आत् च ऋश्च उङ् लोपी चेति तस्मात्। ददातीति ददि कौ द्वित्वे कित्त्वाद्ध गुणे उस्येचीत्याकारलोप। करोति किरति इति द्वयोश्चक्रि.। जायते इति जज्ञिः। अत्र कौ कृते हनगमित्युङ् लोप. स्तुश्चुभिरिति नस्य ञकारः। एवं हनधौ जघ्नि. औगमल्र जग्मि, खनञ चख्निः वृघसी जक्षि. ॥१११९॥

११२०। यायाय भास कस स्थेश पिश प्रमदो वरः।

यायाय—प्रमद ५।, वर १।।

एभ्यो वरः स्यात् घे। यायावरः भास्वरः कस्वरः स्थावरः ईश्वरः पेश्वरः प्रमद्वरः।

११२१। क्वरप् सृ जीन्नश गमस्त मश्च।

क्वरप्।१।, सृ जि-इन् नश गम ५।, त।१।, म' ६।, च।१।।

एभ्य' क्वरप् स्यात् घे, मस्य च तः। सृत्वरी जित्वरी इत्वरी नश्वरी गत्वरी।

११२२। हिंस दीप कम्पाजस स्मिङ कम नमो रः।

हिंस—नम ५।, र १।।

एभ्यो रः स्यात् घे। हिंस्रः दीप्रः कम्प्रः अजस्रः स्मेरः कम्रः नम्रः।

---

वक्र यातीति यङि यायाय भासृङ्न दीप्तौ। कसज गतौ ष्ठिा स्थाने। ईशलङ ऐश्वर्ये। पिश शपावयवे। प्रपूर्वमदीभिर्यङि हर्षे। एभ्यो वर. स्यात् घे। यायावर. इति यायाय भागात् वरे इववतेरिति इम् निषेधे ह्रसात् लोप इत्यकारलोपे य्वोर्लोप इति यलोप। ईश्वर इति वरस्य प्रत्ययत्वेन दन्त्यादित्वात् झसत्वाभावे शक्वाजेति न षङ्॥ ११२०॥

सरतीति सृत्वरी कित्वात् गुणाभावे स्वस्य तन्निति तनि पित्वादीप्। एव जयतीति जित्वरी एतीति इत्वरी नश्यतीति नश्वरी। अत्र इववतेरिति इम् निषेधे प्रत्ययवकारस्य दन्त्यत्वात् झसत्वाभावे सुहादित्वात् घङ् शक्वाजेति षङ् च न स्यात् गच्छतीति गत्वरी अनेन मस्य त॥ ११२१॥

हिनस्तीति हिंस्र. इत्यादौ इववतेरिति इम् निषेध.। एव दीप्यते इति दीप्र। कम्पते इति कम्प्र। अजस इति नञ पूर्वजसुङर्य मोचे। न जस्यतीति अजस्र। स्मयते इति स्मेरः। कमुकङ स्पृहि। वारे इति ञितोऽप्राप्तिपचे कम्र.। नमतीति नम्र.॥ ११२२॥

## ११२३। सन् भिक्षाशंस उः।

सन्-भिक्ष आशस' ५।, उ १।।

एभ्यो उः स्यात् घे। रिप्सुः भिक्षुः आशसुः।

## ११२४। विन्दिच्छू।

विन्दिच्छू १॥।

एतौ निपात्यौ। वेत्तीति विन्दु', इच्छतीति इच्छुः।

## ११२५। स्वप तृष धृषो ङ्नज्।

स्वप तृष धृष. ५।, ङ्नज्।१।।

एभ्यो ङ्नज् स्यात् घे। स्वप्नक् तृष्णक् धृष्णक्।

## ११२६। शॄ वन्द आरुः।

शॄ-वन्द ५।, आरु १।।

आभ्यामारुः स्यात् घे। शरारुः वन्दारुः।

## ११२७। क्रु क्लुकौ भियः।

क्रु क्लुकौ १॥, भिय ५।।

भीरुः भीलुकः।

---

रभीङ राभस्ये। रब्धुमिच्छतीति सनि मिमीमादेति खेर्लोपे अकारस्य इसि स्यादे सीलोप इति सलोपे झपृझसीरिति भस्य पत्वे रिप्सभागात् अनेन उप्रत्यये हसात् लोप इति अकारलोपे रिप्सु। भिक्षते भिक्षु' आशसते आशसु ॥११२३॥

सुगमम् ॥ ११२४ ॥

स्वपितीति स्वप्नक्। तृष्यतीति तृष्णक् धृष्णोतीति धृष्णक् इति उभयत्र ङव-वतेरिति इम् निषेधे ङित्वात् न गुणः॥ ११२५ ॥

श्रृणातीति शरारु। वन्दते इति वन्दारु.॥ ११२६ ॥

भिय एतौ स्याता घे। बिभेतीति भीरु. भीलुक., उभयत्र कित्वात् न गुण. ॥ ११२७ ॥

## ११२८ । स्पृहि गृहि श्रु द्रु जेराय्यः ।

स्पृहि—जे ५।, आय्य १।।

एभ्यः आय्यः स्यात् घे । स्पृहयाय्यः गृहयाय्यः श्रवाय्यः द्रवाय्यः जयाय्यः ।

## ११२९ । गण्डि मण्डि जि जनि नन्दिभ्योऽन्तः ।

गण्डि—नन्दिभ्य ५॥ अन्त १।।

एभ्योऽन्तः स्यात् घे । गण्डयन्तः मण्डयन्तः जयन्तः जनयन्तः नन्दयन्तः ।

## ११३० । स्तनि गदि मदि ह्रदि दूषि रित्नुः ।

स्तनि—दूषे' ५।, इत्नु १।।

एभ्यः इत्नु' स्यात् घे । स्तनयित्नुः गदयित्नुः मदयित्नुः ह्रदयित्नुः दूषयित्नुः ।

---

स्पृहि गृहि स्पृशत् केप्से । गृहत् कड ग्रहे । द्वावदन्तचुरा॰ श्रुन गतौ श्रुतौ । द्रुड श्रादरे । जि जये । एभ्य आय्य. स्यात् घे । स्पृहयाय्य गृहयाय्य इत्यु भयत ञेर्लोप इत्यादौ आय्यवर्जनात् न ञेर्लोप. ॥११२८॥

गडि गण्डे । किमडि भूषे । जि जये । जनीम्यङ जनौ । टुनदि सम्बधि अत्र जिवर्जा' सर्वे ञ्यन्ता गण्डयन्त इत्यादिषु ञेर्लोप इत्यादौ अन्तवर्जनात् न ञेर्लोप' ॥११२९॥

स्तनत्काभ्रशब्दे । गदत्काभ्रध्वनौ । द्वावदन्तचुरादी । मदीभिर्यञ्जि हर्षे अस्य गर्वे स्लेपने वा मानुबन्धत्वात् ञौ ह्रस्वे मदि । ह्रन्मन । ह्रत्करोत्याचष्टे वा इति ञौ ह्रदिरिति । इदुंष्यौं वैकृते । अस्य ञौ गुणे, दुषेरोदूरिति ऊकारे दूषि. । एभ्य इत्नु. स्यात् घे । स्तनयित्नुरित्यादिषु ञेर्लोप इत्यादौ इत्नुवर्जनात् न ञेर्लोप' । अत्र त्नु इति कृतेऽपि इमा एवेष्टसिद्धौ ञेर्लोप इत्यत्र इत्नुवर्जनेऽप्य-वक्तव्ये इत्नुकरण ज्ञापयति क्वचिद्विहितोऽपि न स्यादिति तेन वहलिह इत्यत्र न गुण । वातमज इत्यत्र वौ आदेशो न स्यात् ॥११३०॥

## ११३१। कॄ-गॄ-जागुः क्विः।

कॄ गॄ जागु ५।, क्वि १।।

एभ्यः क्विः स्यात् घे। कीर्विः गीर्विः जागृविः।

## ११३२। स्वयं शं वि सं प्राद्भुवो डुः।

स्वय—प्रात् ५।, भुव ५।, डु १।।

एभ्यो भुवो डुः स्यात् घे। स्वयम्भुः शम्भुः विभुः सम्भुः प्रभुः।

## ११३३। लू-ऋ-धू-खन-सू-चर-पू-सह-वह इत्रो घे।

लू ऋ-धू खन सू-चर पू सह वह ५।, इत्र १।, घे ७।।

एभ्यः इत्रः स्यात् घे। लवित्रम् अरित्रं धवित्रं खनित्रं सवित्रं चरित्रं पवित्रं सहित्रं वहित्रम्।

## ११३४। घञलनटोऽघे।

घञ् अल् अनट १।।, अघे ७।।

घोरिते स्युर्न तु घे। प्राकारः पादः दासः उपाध्यायः प्रासादः। समाजः, शमः कामः वामः आचामः श्रमः आमः यमः यामः विभ्रमः विश्रामः।

---

कॄश विदेपे गॄश निगरणे गॄगि शब्दे इति वय जागृच्चलु जागरे। एभ्य क्वि स्यात् घे। क्विरजोरिति कीर्विः अव क्वित्वात् इवततेरिति इत्मी निषेधे ऋदिरणाविति इरि र्व्यञ्चलयीति दीर्घः। गिरति गृणाति वा गीर्विः। जागृविरिति जागीऽरणश्चीत्यव विवर्जनात् न गुण ॥११३१॥

एभ्य परात् भवतेर्डु स्यात् घे। डित्वात् टिलोप। स्वयम्भुरित्यादि सम्भुश्च इति वय कातन्त्रसम्मतम्। एतत्पर्यन्तेषु ताच्छील्याधिकार ॥११३२॥

लूञगि छिदि। ऋ प्रापे च। धू नगिञ कम्पे। खनुञ विदारे। सूङल सूतौ। चरगमनेऽदने आचारे। पूञगि शौचे। सह्यकि शक्तौ सह षडच। वहेञौ प्रापणे। एभ्य इत्र स्यात् करणे। लूयतेऽनेनेति लवित्रम् एवम् अरित्र धवित्र खनित्र सवित्रं चरित्रं पवित्र सहित्र वहित्रम् ॥११३३॥

अर्थानुक्तावपि घस्य वर्जनात् क्रुडौ कभाव इत्युक्ते कारकभावयोः प्राप्तौ

## ११३५ । क-भावेऽमी ।

क भावे ७।, अमी १।॥ ।

**प्रघसः वधः धरः करः निलयः समजः मयः लयः । घ्रानं मानं दानं प्रवेपनं वपनं वयनम् अजनं दरिद्राणं शयनम् ।**

---

धीरैते सु कर्त्तृभिन्नकारकेषु भावे च इत्यर्थः । घञी घकारञ्जी कगार्थ । ञकारो वृद्ध्यर्थः । यथा पाक भाग इत्यादि । अली लकारष्टाविभक्तेष्टकारवत् प्राचीनमतानुवादार्थः । अनटष्टकार ईवर्थः । भूष्यतेऽनेयेति भूपणी । डुकृञ् प्रकर्षेण क्रियतेऽसौ इति कर्मणि घञि ञित्वात् वृद्धौ प्राकार । प्रस्य दीर्घविधानात् घञन्तधातौ परे क्वचिदुपसर्गस्य दीर्घं स्यादिति सूचितम् । तेन प्रासादः नीशार, नीहार नीवार व्यतीपात परीरम्भ परीवाद प्रतीकार अतीसारः इत्यादि । करणे पद्यौङ गतौ पद्यतेऽनेनेति पाद । सम्प्रदाने दासृञ दाने दास्यतेऽस्मै इति दासो विप्र । अपादाने उपेत्य अधीयते अस्मादिति उपाध्याय । अधिकरणे प्रसीदन्ति मनांसि अस्मिन्निति प्रासाद । भावे तु समजनं समाज समूहः अव व्यजोऽरे वेत्यव घञवर्जनात् न वी । शमुभिर्यं शमे घञि वृद्धौ जनवध इति ऋस्वे शम । कमुङ स्पृहि वारे इति ञिङोऽप्राप्तिपक्षे घङि वृद्धौ कमवमचमा वर्जनात् ऋस्वाभावे काम, एवं वाम आचाम, । असग्रमविश्रमा वा ऋस्वे श्रम श्राम यम याम विश्रम विश्राम । ननु भावो भूधातोरर्थस्तत्र सर्वधातुभ्य कथ भावे प्रत्यया स्युरिति चेत् सत्यम् । भाव इह क्रियामात्रवाची । अतएव धात्वर्थं केवलो भाव इति । एव कृभ्वस्तय क्रियासामान्यवचना इति प्राञ्च । एवञ्च अवस्थे द्वे क्रियाया स्त साध्यता सिद्धतापि च । साध्यता त्यादिवाच्या स्यात् सिद्धता द्रव्यवत् भवेत् । द्रव्यवत्त्वे घञादि स्यात् योगलिङ्गेन सख्ययेति । तेन पाक पाकौ पाका ॥ ११३४ ॥

घञादय कर्त्तरि न स्युरित्युक्तापि अमी सर्वकारकेषु भावे च स्युरित्युक्तवता प्रयोगानुसारेण संज्ञाया क्वचित् कर्त्तर्य्यपि स्युरिति सूचितम् । घञि यथा रुजतीति रोग । उच्यतीति ओक सरति कालान्तर सार स्थिरो भाग, अतिसरतीति अतीसारी व्याधि । अत्ति प्राप्तोति प्रघस । विशति चित्त वेश । स्पृशति देहं स्पर्शः । चयतीति चयो व्याधि । धरतीति धर पर्वतभेद ।

## ११३६ । ष्ठीवन-सीवने वा ।

ष्ठीवन सीवने १॥, वा ।१। ।

**एते निपात्ये वा । पक्षे ष्ठेवनं सेवनम् ।**

---

अनटि एक वक्तीति एकवचनम् एव द्विवचन बहुवचनम् । क्वचिदिति किम् ? नदतीति नद अत्र सञ्ज्ञायामपि पचादित्वादन्नेव । प्रघस इत्यादि । अदो भक्षे कर्त्तर्य्यलि घस्लद इति घसादेश । हनन वध भावे अलि हनो वधादेश' । धरतीति धर कर्त्तर्य्यल् । क्रियतेऽनेनेति करणेऽलि कर । निलीयतेऽस्मिन्निति अधिकरणेऽलि निलय । मिभ्योरित्यत्र अल् वर्ज्जनात् नडा । समजन समज पशूना समूह भावेऽलि व्यजोऽरे वेत्यत्र अल्वर्ज्जनात् न वी । डुमिञन क्षेपे मीञग बधे इति द्वाभ्या भावेऽलि मय । मिस्योरित्यत्र अल्वर्ज्जनात् न ङा । लीगि श्लिषि भावेऽलि लय । मास्वरूपाणा मिभ्योरित्यपि भावेऽनटि मिभ्योरिति डादेशे मान प्रक्षेपनमिति मोऽचोऽन्तरित्यत्र वेपवर्ज्जनात् न णत्वम् । अज क्षेपे गतौ भावेऽनटि व्यजोऽरे इत्यत्र वी आदेशे वयन पक्षे अजनम् । दरिद्रातेर्भावेऽनटि दरिद्र आलोप इत्यत्र अल्वर्ज्जनादालोपाभावे दरिद्राण शीङ लञि भावेऽनटि शयनम् । कारके तु छिद्यतेऽनेनेति छेदन खड्ग राजभोजना शाल्य । साधनी जन्वनी रज्जुरित्यादि ॥ ११३५ ॥

ष्ठीवन । ष्ठिवु निरासे सिवु तन्तुसन्ततौ एतयोर्भावेऽनटि दीर्घौ वा निपात्यते । पक्षे गुण । अत्र ष्ठीव निरासे इति दीर्घवता एवेष्टसिद्धौ निपातनं दीर्घवत कातन्त्राद्यसम्मतत्वात् । वाशब्दस्य अव्ययत्वेन अनेकार्थत्वात् इद विवृणोमि । यथा व्युपाभ्या शीङ. पर्य्याये घञ् । तव राजविशाय राजोपशाय । राज्ञ सम्बन्धे शयितु पर्य्याय इत्यथ । उन्निभ्या गिर । उद्गार निगार । किरतेर्धान्ये । उत्कार निकार धान्यस्य । धान्ये किम् ? पुष्पनिकर. पुष्पोत्कर' । अत्र अलेव । वे स्त्रोऽशब्दे विस्तीर्णे । पटस्य विस्तार, शब्दे तु वाक्यस्य विस्तर । गेरदोऽल् । प्रघस । गे किम् ? घास । नेणश्च । ने. परादत्तेर्णोऽल् च स्यात् । न्याद निघस:। प्रसम्भ्या मदोहर्षेऽल् । प्रमद सम्मद । हर्षे किम् ? प्रमाद । अगेर्व्यधजपमदे । व्यध जप मद । गेस्तु आव्याध्य उपजाप उन्माद । स्वनहसाभ्या वा । स्वन' स्वान हस हास । गेस्तु प्रस्वान प्रहास । यम' समुन्निव्युपेभ्यश्च । एभ्य परात् केवलाच्च यमोऽल् स्याद्वा । संयम संयाम नियम.

## ११३७ । मुण् लभोऽनेक टुः सोर्गे खल-घञोः ।

मुण् ।१।, लभ ६।, अन् एक टु-सो ५।, खल् घञो' ७॥ ।

केवलटुसुवर्जात् गे' परस्य लभो मुण् स्यात् खलि घञि

---

नियाम विषम विषाम उपयम उपयाम यम याम । लेर्गदनदपठस्वनिह्-सिभ्य । निगद निगादः निनद निनाद निपठ निपाठ निस्वन निस्वान· निह्स' निहास । ले किम् ? पाठ । अगेश्च क्वणो वीणायाम् । क्वण क्वाण प्रक्वण प्रक्वाण निक्वण निक्वाण । आङो रुप्लुभ्याम् । आरव आराव· आप्लव आप्लाव' अवादृग्रहो वृष्टिविघाते । अवग्रह' अवग्राह । प्रात् रज्जौ । प्रग्रह प्रग्राह रज्जु । परेर्भुवोऽवज्ञायाम् । परिभव परिभाव । पण' परिमाणे नित्यमल् । पण । परिमाणे किम् ? दास्या पाण । ग्लहोऽच्चविषये । ग्लह । सरतेर्गर्भग्रहणे गवामुपसर । अन्यत्र उपसार । अभ्युपनिविभ्यो ह्वो हुश्च । एभ्य परात् ह्वयतेरल् स्यात् तस्य हुरादेशश्च । अभिहव उपहव । निहव विहव । एभ्य किम् ? प्रह्वाय । आङो युद्धे । आह्वयन्ते योद्धारोऽस्मिन्निति आहवो युद्धम् । अन्यत्र तु आह्वयन्ते पानाय गावोऽत्र स आह्वावो जलाशय । अत्र घञि हुरादेशो निपात्य' । काठिन्ये हन्तेर्घनादेशश्च । दध्नो घन घन दधि इति तु अभेदात् । प्रादृग्टहैकदेशे हनो घञ् च । ग्टहैकदेशे वाच्ये प्राद्धन्तेर्घञन्तौ स्तो हन्तेर्घनादेशश्च । प्रघाण. प्रघण उभयत्र णत्व निपात्यम् । अयो विद्रुभ्यो हन्तेरल् करणे घनादेशश्च । अयो हन्यतेऽनेनेति अयोघन । एव विघन द्रुघण । परेर्डश्च । परिपूर्वाद्धन्तेर्ड स्यात् करणे घनादेशश्च । परिहन्यतेऽनेनेति परिघ । परे किम् ? विघात समुद्गा गणप्रशसयोर्हन्तेर्डो घनादेशश्च । समो हन्तेर्ड स्यात् गणे उदो हन्तेर्ड. स्यात् प्रशसायाम् । उभयत्र घनादेश सहनन सहन्यते-ऽस्मिन्निति वा सङ्घ समूह । उत्कृष्ट' हन्यते ज्ञायते इति उद्घ प्रशस्त इत्यर्थ । उपात्क आश्रये । उपाद्धन्ते क स्यात् आश्रये । कित्त्वाद्धनगमित्युलोपे हनो ह्नो घ्न घ्नादेश उपघ्न आश्रय । स्तम्बात् करणे क स्तम्बो हन्यतेऽनेनेति के कित्त्वात् हनगमित्युड् लोपे हनो ह्नो घ्ने स्तम्बघ्नो दण्ड । उद्घनान्तर्घनौ अलन्तौ निपात्यौ । ऊर्ध्व हन्यतेऽस्मिन्निति उद्घन, अन्तर्हन्यतेऽस्मिन्निति अन्तर्घनो देशः ॥ ११३६ ॥

च। प्रलम्भः। अन्यत्र दुर्लभः। एकेति किम्?, अति-दुर्लम्भः।

**११३८। स्यदैधावोद हिमश्रथ प्रश्रथ स्फारस्फाल राग काय निकायाकायाः।**

स्यद—काया, १॥।

एते घञन्ता निपात्यन्ते। स्यदो वेगः। एधः इध्मम् अवोदः अवक्लेदः। हिमश्रथः हिमश्रन्थनम्। प्रश्रथः प्रश्रथन्थनं स्फारः स्फोरणम्। स्फालःस्फोलनम्। रज्यतेऽनेनेति रागः। कायो देह। निकायो निवासः। आकायश्चितिः।

**११३९। खनो ड डरे केकवकाः।**

खन ५।, ड डर-इक इकवका १॥।

आखः आखरः आखनिकः आखनिकवकः।

---

एको अद्वितीयो च तौ दुसू चेति एकदुसू न विद्यते तौ यत्र सोऽनेकदुसु तस्मात्। यथा खलि अगिदुर्लम्भ अतिसुलम्भ घञि प्रलम्भ। नुण्रध इत्यनेनैवेष्टसिद्धौ एतद्विधानं नियमार्थम्। तेन खलि दुर्लभ सुलभ। घञि लाभः दुर्लाभ सुलाभ। एषु पूर्वेणापि नुण् न स्यात्॥ ११३७॥

स्यन्दङ्व्लृ स्रुतौ स्यदो वेग अन्यत्र स्यन्द। इन्धीञिधङ् द्युतौ। एधः काष्ठम् अन्यत्र इन्ध। अवपूर्व उन्दधौ क्लेदे अवोद अवक्लेद। अवादन्यत्र इन्द ओन्द। श्रन्थग मोचे। हिमस्य श्रन्थन हिमश्रथ। प्रश्रन्थम प्रश्रथ। अन्यत्र श्रन्थ परिश्रन्थः। स्फुरश्चि स्फूर्त्तौ आन्तस्य स्फार। कौ जौ ड इत्यनेन उकारस्याकारेणैवेष्टसिद्धौ निपातन पक्षे स्फोर इत्यनिष्टपदनिरासार्थम्। स्फुल श्चि स्फूर्त्तौ। आन्तस्य स्फाल। स्फल श चाले इत्यनेनैवेष्टसिद्धौ निपातन स्फोल इत्यनिष्टनिवारणार्थम्। रन्जौञ रागे भावे करणे वा घञि राग अन्यत्र रङ्ग। चिन चिञि चित्यां कायो देह। अन्यत्र चाय। एवं निकायो निवास। अन्यत्र निचाय। आकायश्चिति अत्र ककार एव निपातफलम्॥ ११३८॥

डस्य डरस्य इकस्य इकवकस्य ते॥ ११३९॥

**११४० । व्याप्तौ भावे णिनः ।**

व्याप्तौ ७।, भावे ७।, णिनः १। ।

धोर्भावे णिनः स्यात् व्याप्तौ सत्याम् । णिनान्तात् स्वार्थे णः । साराविणं वर्त्तते ।

**११४१ । व्यतीहारे णन् स्त्री ।**

व्यतीहारे ७।, णन् ।१।, स्त्री ।१। ।

धोर्भावे णन् स्यात् व्यतीहारे, णनन्तात् स्वार्थे णः, तदन्तश्च स्त्रियाम् । व्यवहारी ।

**११४२ । ट्वितोऽथुर्भावे ।**

ट्वित. ५।, अथु १।, भावे ७। ।

टुकारितो धोरथुः स्यात् भावे । वेपथुः ।

**११४३ । ड्वितस्त्रजे त्रिमक् ।**

ड्वित. ६।, तज्जे ७।, त्रिमक् ।१। ।

डुकारितस्त्रिमक् स्यात् ध्वर्थान्निष्पन्ने । करणाज्जातं कृत्रिमम् ।

---

सम्पूर्वंरुल ध्वनौ भावे णिने णित्वात् वृद्धौ सराविण इति स्थिते स्वार्थे णे णित्ते ञिराद्यच इति वृद्धौ यथोर्लोप इत्यकारलोपे साराविण इद्रस्य । सम्यक् शब्दो व्याप्त इत्यर्थ ॥११४०॥

णन प्रथमणकारो वृद्ध्यर्थः । शेषो दन्त्य नकारस्तु य्वोर्युमदान्ते इत्यत्र दुनीभूज्वलाद्येति विहितस्य णप्रत्ययस्य अप्राप्तये विशेषणार्थं । व्यवपूर्वंहृञ हृत्यामनेन णनि वृद्धौ व्यवहार इति स्थिते स्वार्थे णे य्वोर्युम इत्यत्र णनन्तवर्जनात् यकारस्य इमोऽप्राप्तौ णित्ते ञिरिति वृद्धौ यथोर्लोप इत्यकारलोपे णित्वादीपि व्यवहारी । अन्योन्यव्यवहरणमित्यर्थं । एवम् अन्योन्याक्रोशन व्याक्रोशीत्यादि ॥११४१॥

टुरित् यस्य स ट्वित् तस्मात् पृथग्योगात् व्यतीहारस्य स्त्री इत्यस्य च नानुवृत्ति । टुवेप चले । वेपनं वेपथु । एवं याचथुरित्यादि ॥ ११४२॥

डुरित् यस्य स ड्वित् तस्मात् । तस्मात् धात्वर्थात् जातमिति इनजनात् इति

**११४४ । स्वप रक्ष यत प्रच्छ विच्छ याच यजो नङ् भावे न जिः ।**

स्वप—यज ५।, नङ् ।१। भावे ७।, न ।१।, जि १। ।

**एभ्यो नङ् स्यात् भावे, न च जिः । स्वप्नः रक्ष्णः यत्नः प्रश्नः विश्नः याच्ञा यज्ञः ।**

**११४५ । किर्दोऽन्तर्गेः ।**

कि १।, द ५।, अन्तर् गे ५। ।

**अन्तरो गेश्च परात् दा-संज्ञकात् किः स्यात् भावे । अन्तर्द्धिः आदिः ।**

**११४६ । ढाड्डे ।**

ढात् ५।, डे ७। ।

**ढात् परात् दः किः स्यात् डे । वारिधिः पयोनिधिः ।**

**११४७ । क्तिः स्त्र्यघे ।**

क्ति' १।, स्त्री ।१।, अघे ७। ।

**धोः क्तिः स्यात् न तु घे, तदन्तश्च स्त्रियाम् ।**

---

डप्रत्यये तञ्च तस्मिन् । डुकृञ विमके कित्वात् गुणाभावे कृत्रिमम् । एव डुधाञ ध्रित्रिमम् । एव डुदाञ दत्रिममित्यादि ॥११४३॥

स्वप्नौ घु ञि शये, स्वप्न । ञि रक्ष पालने रक्ष्ण । यतीङ यत्ने यत्न । प्रच्छौ श ज्ञीप्से प्रश्न. अत्र न जिरिति निषेधात् ग्रहस्वपाद्योरिति जिर्न स्यात् । छ्वौ' शूटा विति छस्य शः विच्छश गतौ विश्न छस्य श । टुडु याचृञ याचने नङि स्तुश्चुभिरिति नस्य ञकारे अभिधानात् स्त्रीत्वे आपि याच्ञा यजे ञौ यज्ञ. । रक्ष यत विच्छ याच एभ्यो ह्वक्तेरिति इम् निषेध ॥११४४॥

अन्तर्द्धानम् अन्तर्द्धि. कित्त्वात् गुणे ङस्येचीति आलोप । आदिरिति । आङ्-पूर्वाणां दातु दाने इत्यादि दास्वरूपाणा कौ आदिः ॥११४५॥

डु धा ञखि धारणे । वारि धीयतेऽस्मिन् इति वारिधिः । एव पयो निधौ;

कृतिः बुद्धिः मतिः स्मृतिः प्रकृतिः ।

[१०८२] ह्लादेः ख क्तौ च । प्रह्लत्तिः भूतिः फुल्तिः ।

१११४८ । कॄ गॄ ज्या ग्ला हा ल्वादेर्निः ।

कॄ—ल्वादे ५।, नि १। ।

एभ्यः परस्याः क्तेः निः स्यात् । कीर्णिः गीर्णिः ज्यानिः ग्लानिः हानिः लूनिः पूर्णिः ।

---

यस्य वर्जनात् कर्तृभिन्नकारकेषु भावे च स्यादित्यर्थः । डु कृञ् क्रियते असाविति कर्मणि करणमिति भावे च कृतिः । बुधौ ङ वेदने । बुध्यतेऽनया बोधनमिति वा बुद्धिः । अत्र ढभात्तथोरिति तस्य धे झपूझसीरिति धस्य द । स्मरण स्मृतिः । ह्लादीङ मोदने क्तौ ह्ववतेरिति इमो निषेधे ह्लादेः ख इति ह्रस्वे झपूझसीरिति दस्य ते प्रह्लत्तिः । भूयतेऽनया इति भूतिः सम्पत्तिः भवनमिति वा भूतिः । अत्र वृदुश्रीति इम् निषेध । ञिफला भिदि ह्ववतेरिति इम् निषेधे चरफलो टुरित्यकारस्य उकारे फुल्तिः ॥११४७॥

कॄश्च गॄश्च ज्याश्च ग्लाश्च हाश्च लूश्च ते, ते आदयो यस्य स तस्मात् । क्र्यादिस्तु ह्रादिभिन्नदीर्घॠदन्ता । यथा कॄश विक्षेपे, गॄश निगरणे, जॄर्ष्यस्य च, भॄष्य च, तॄतरे, दॄभये दॄणि विदारे, नॄस नीतौ, पॄलि पालने । दर्शते । चुरादेर्नित्य-ञ्यन्तत्वात् ॠदन्तत्व नास्तीति । कीर्णिरिति । अनेन क्तेः स्थाने नौ कृते स्थानि-वत्त्वात् ने कित्वे वृदुश्रीति इमो निषेधे ॠदिरणाविति इरि व्यंनचतयोति दीर्घ । एव गीर्णिरित्यादि । ज्या इत्यस्य ल्वादित्वादेव प्राप्तौ पृथग्ग्रहणं ज्ञापयति । ल्वादेः परस्य नि आदेशस्य स्थानिवत्त्व नास्तीति । तेनास्य कित्वाभावात् ज्यानिरित्यत्र न जि । एव सञ्ज्ञाविशेषे ज्यादित्वात् क्तेर्नि आदेशे श्रेणिर्नितम्व ... पङ्क्तिरित्यादौ गुण । ग्लादिस्तु ग्लै क्लमे ग्लानिः एवं म्लै म्लानि । हादिस्तु ओहाकृञि त्यागे हानिः । अत्र दा मा गै इत्यत्र गौरवज्ञापकात् नडौ । हादेः पृथग्विधान ज्ञापयति किं । स्थवे इत्यत्र अघ इति नञोऽल्पार्थत्वात् वहप्रभृति-भ्यो कर्त्तरि क्तौ तस्य नि आदेशे स्थानिवत्त्वाभावात् जेरभावे वहतीति वह्निः एवं अग्निः । नास्ति किम् ? ऊढिः । ल्वादिस्तु लूञगि छिदि लूनिः अत्र वृदुश्रीति

**११४९। साति हेति यूति जूति।**

स्यति हिनोति यौति जवतीनाम् एते क्त्यन्ता निपात्यन्ते।

**११५०। शी व्रज यज विद स्वास मन चर भृअटाट्येन समज निपत निसदः क्यप्।**

शी—निसद ५।, क्यप् ।१।।

**एभ्यो भावे क्यप् स्यात् तदन्तश्च स्त्रियाम्। शय्या व्रज्या इज्या विद्या सुत्या आस्या मन्या चर्य्या भृत्या अटाट्या इत्या समज्या निपत्या निषद्या।**

---

इमी निषेध। जि पॄ गिलि तु पालने पृदुर्षीति इमी निषेधे ऋदिरणाविति ऊरि व्यंनचयतीति दीर्घे पूर्णं। पूर्त्तिरिति तु पूरीषङ् पूर्त्तौ इत्यस्य। जौमरास्तु ज्वरत्वरचरहुर्च्छां, धुर्वीतुर्वीत्येतान् वर्जयित्वा रेफान्तादपि क्तौ निरित्याहुः। तन्मते ईर मड कम्पगत्योरित्यादेरपि ईर्णिरित्यादि ॥११४८॥

षोध नाशे निपातनात् द्रो सो मा स्यामिति क्तिनं स्यात् हिनोतेर्गुण युल मिश्रणे जुरहसि इत्येतयोर्दीर्घ. ॥११४९॥

अत्र सूत्रे भावे इति नोक्ता वृत्तौ भावे इति व्याख्यानादत्र प्रयोगानुसारेण भावे कर्त्तृभिन्नकारके च स्यात्। परसूत्रेषु तु भावस्यैवानुवृत्तिः कदाचित् कारकस्येति ज्ञापनार्थम्। यथा शीञलिञि स्वप्ने शेतेऽस्यामिति क्यपि शीङोऽयेणाविति ङयि स्त्रीत्वादापि शय्या खट्वादिः। व्रज गतौ व्रजन व्रज्या। यजै औ यजनं इज्या ग्रहस्वपाद्योरिति जि.। विदल सतौ विदन्त्यनया इति विद्या सवन सूत्या क्यपि कित्त्वात् गुणाभावे स्वस्य तन्। ञिलासङ आसन आस्या। मन यौङ बोधे। मन्यतेऽस्यामिति। चर्गमनेऽदने आचारे चरण चर्य्या। भृ लिटुर्ञी भरण भृत्या। अट गतौ यङि अटाट्यभावात् भावे क्यपि हसाल्लोप इत्यकारलोपे पुनस्तेनैव यकारलोपे अटाट्या। इन गतौ एत्यनया अयन वा इत्या। अज क्षेपे गतौ समजन्त्यस्यामिति समज्या सभा। अत्र व्यजोऽरे वेत्यत्र क्यप्वर्जनात् न वी। पतॢज गत्या निपतन्त्यस्यामिति निपत्या युद्धभूमिः। सदॢजौश विषादादौ।

## ११५१ । कृ: शश्च ।

कृ ५।, श १।, च ।१। ।

करोते: श: स्यात् क्यप् च भावे स च स्त्रियाम् । क्रिया, कृत्या ।

## ११५२ । सृ-जागुर्य: ।

सृ जागृ ५।, य १। ।

आभ्या य: स्यात् भावे, स च स्त्रियाम् । परिसर्य्या जागर्य्या ।

## ११५३ । शंस्त्यात्‌ट: ।

शस्-त्यात् ५।, अ १। ।

आभ्याम: स्यात् भावे स च स्त्रियाम् । प्रशंसा दिदृक्षा अटाटा कण्डूया ।

## ११५४ । सेमक्तात् सरो: ।

सेमक्तात् ५।, सरो ५। ।

यस्मात् क्तो विहित: सेम् स सेमक्त:, तस्मात् स्मतो धो:

---

डुकृञ भावे शप्रत्यये रतनोर्यगिणाविति षकि ऋद्रि' शयगिति ऋकारस्य रिकारे क्रिया । क्यपि तु गुणाभावे स्वस्येति तनि कृत्या । अत्र चकारेण क्तेरपि समुच्चयात् कृतिरपि । एव चकारात् मृगयतेरपि शप्रत्यये मृगया ॥११५१॥

परिसरण परिसर्य्या, परिपूर्वस्यैव प्रयोग' । जागरण जागर्य्या ॥११५२॥

शनृस च त्यश्चेति शस्त्य तस्मात् । शनृसु हिंसास्तुत्यो । प्रशसन प्रशसा । त्य प्रत्ययान्त.। दृहं शौ प्रेचे सनि शकृजेति षङ्कि षढो क. से इति षस्य ककारे दिदृक्षभागादनेन भावे अप्रत्यये लोपोऽत इति सनोऽकारलोपे स्त्रीत्वादापि दिदृक्षा । एव स्वार्थे सनन्तादपि चिकित्सा इत्यादि । अट गतौ यङि अटाट्य भागादप्रत्यये हसाल्लोप इत्यकारलोपे पुनस्तथैव यकारलोपेऽपि अटाटा । कण्डू-शब्दात् क्ये कृते कण्डूयभागादप्रत्यये कण्डूया । एव पुत्रकाम्या ग्रानीया इत्यादि । कम ऋतेति ईयादौ ऋतीया गोपाया ॥११५३॥

सह इमा वर्त्तते य स.सेम् । सेम् क्तो यस्मात् स सेमक्त तस्मात् । यस्मात् धातो. परस्य क्तस्य इम् सम्भवति स सेमक्त.। सेमक्तात् गुरवं चरवतो धातो र.

ञः स्यात् भावे स च स्त्रियाम्। ईहा जागरा। सेमत्तात् किम् ?, नीतिः राद्धिः। रुमतः किम् ?, पत्तिः।

**११५५। तुलेच्छारा तारा धारा कारा हारा गोधा लेखा रेखा चूडाः।**

तुला—चूडा' १॥।

एते आन्ता निपात्यन्ते। चोदना चूडा।

**११५६। भीषि चिन्ति पूजि कथि कुम्बि चर्च्चि स्पृहि तोलि दोलि षिड्भिदाद्यात्वर्घटादेर्ङः।**

भीषि—आत्वर् घटादे ५।, ङ' १।।

एभ्यो भावे ङः स्यात् स च स्त्रियाम्। भीषा चिन्ता पूजा

---

स्यादित्यर्थः। ईहङ चेष्टे ईहा जागृच् लु जागरे। सेमत्तात् किं नीञ प्रापणे नीति। राध्यौ सिद्धौ राद्धि। रुमत कि पट गतौ पत्ति ॥११५४॥

तुल कि उन्मितौ। तोलयत्यनयेति तुला परिमाणदण्ड। इषुश वाञ्छे इच्छा। ऋट गतौ आरा छुरिका। तॄतरे तारा। धृञ धारा। गुध्य वेष्टे गोधा। हृञ हारा। कृञ कारा। लिखश लेखा। लकारस्य रेफे रेखा च चुदकनुदि चूडा। चूडा इति बहुवचनादन्येऽपि निपात्यन्ते। यथा भिदादेर्भावे णक. स्त्री। भेदन भेदिका अतएव चिकीर्षा यस्य भेदिकेति स्वयमुक्तम्। एव विशेषेण भीषणा विभीषिका। रोगाख्यायाम्। प्रवाहिका प्रच्छर्दिका विचर्चिका। सञ्ज्ञायाम् उद्यानपुष्पाणि भज्यन्तेऽस्यामिति उद्यानपुष्पभञ्जिका क्रीडा। ऋणार्ह-पर्य्यायेषु च ऋणे पायसभोजिका मे धारयसि। अर्हे इक्षुभक्षिका भवान् अर्हति। पर्य्याये अद्य तव शायिका। एवम् आसिका आसनमित्यर्थ.। एवञ्च समादेः पद्यतेर्भावे क्विप् स्त्रियाम्। पद्यौङ गतौ सम्पत् आपत् विपत् प्रतिपत्। एवं टुक्षुल क्षुते। क्षवण क्षुत्। प्रतिश्रुत् प्रतिध्वनि. विपाशा विपाट्। क्षुधा क्षुत् इत्यादय. ॥ ११५५ ॥

कथा कुम्बा चर्चा स्पृहा तोला दोला पचा भिदा छिदा गुहा विदा च्चिपा जना पीड़ा सरा वसा रुजा घटा व्यथा त्वरा ।

## ११५७ । आतोऽन्तः श्रङ्गे ।

आत ५।, अन्तर्-श्रत् गे ५। ।

एभ्यः परादादन्तात् ङः स्यात् स च स्त्रियाम् । अन्तर्द्धा श्रद्धा, सञ्ज्ञा प्रमा ।

---

ष इत् यस्य स षित् । भिद आदिर्यस्य स भिदादि । आत्वर् त्वरपर्य्यन्त । स चासौ घटादिश्चेति आत्वर्घटादि । ततो भीषिश्च चिन्तिश्चेत्यादि समाहारस्तस्मात । ञिभीत्ति भीत्या णौ भीषादेशपक्षे भीषि । चिति क स्मृतौ । पूजक पूजे । कथत् क वाक्यप्रबन्धे । कुविकि स्तृयाम् । चर्च्च कैड सम । स्पृहत्केप्से । तुन्तकि उन्मितौ । दुलक्षुत् चेपे । नवैते अग्रन्ता । एभ्यो णीषि अन्यीत्यादिना प्राप्तव्यम् अन बाधित्वा अनेन डप्रत्यये ञेर्लोपे स्त्रीत्वादापि भीषा इत्यादि । षितन्तु डुञौष पच पाके पचा । एव चिनगण चिया । स्रजलुष गुद्धौ स्रजूषकि भूषे च इति द्वयो स्रजा । लभङ्डिङष लभा । चमुडञिश. चमा इ॰ । भिदादिस्तु । भिदिर भिदा । छिदिर छिदा । गुहञ गुहा । विदल मर्जौ विदा । च्चिपषञौ चिपा । एषु ङित्वात् न गुण । जनीव्यङ जनौ हनगमेत्यत्र ङवर्जनात् न लोप । पीडृक पीडा अत्र अग्रन्तत्वादन प्राप्तौ ड. । स गतौ सरा । ङ वरे दृश्योरिति ग्र । श्रौवसं निवासे वसा । रुजीश्रौ रुजा अत्र ङित्वात् न गुण । इत्यादिराकृतिगण रुजौ विसर्गे रुजा इत्यपि केचित् । आत्वर्घटादिस्तु । घटषमङ चेष्टने । जूइर्षस्य ज्यानौ । चजि चजष मङ त्यागे गतौ । प्रथ षमङ ख्यातौ व्यथषमङ दुःखे । कद क्रद क्लदषमङ वैक्लव्यविकलत्वयो । स्रम्भषङ चोदने स्वम्भङष विदारे क्रपषमङ कृपाया स्यात् । क्लवषङ तु भये । दचषङ हिंसने । त्रपूषमिङ लज्जायाम् । प्रस्नषञ प्रसवे ततौ, ञित्वर्षमङ वेगे स्यादमी आत्वर्घटा द्य । घटा व्यथा इत्यादय ॥ ११५६ ॥

अन्तर्द्धानम् अन्तर्द्धा । एव श्रद्धा श्रदित्यव्ययम् । सञ्ज्ञायतेऽनया सञ्ज्ञा नाम । प्रमीयतेऽनया प्रमाणमिति वा प्रमा । एषु उस्येचीत्याकारलोपे स्त्रीत्वादाप् ११५७॥

११५८। ञी षि श्रन्थि ग्रन्थि वेत्ति वन्दासोऽनः।

ञि—आस ५।, अन १।।

एभ्योऽनः स्यात् स च स्त्रियाम्। कारणा ईषणा श्रन्थना ग्रन्थना वेदना वन्दना आसना।

११५९। प्रश्नाख्याने णिः।

प्रश्न—आख्याने ७।, णि १।।

प्रश्ने आख्याने च धोर्णिः स्यात् स च स्त्रियाम्। काङ्कारिमकार्षीः सर्वाङ्कारिमकार्षम्।

११६०। नञोऽन्याक्रोशे स्त्री।

नञ ३।, अनि ।१।, आक्रोशे ७।, स्त्री ।१।।

नञः पराद्धोरनिः स्यात् आक्रोशे, स च स्त्रियाम्। अजीवनिस्तस्य भूयात् अप्रयाणिः।

११६१। ईषद्दुःसोः खल् भावे ढे।

ईषत् दुर् सोः ५।, खल् ।१।, भावे ७।, ढे ७।।

एभ्यः पराद्धोः खल् स्यात् भावे ढे च। ईषदाढ्यम्भवं भवता। दुराढ्यम्भव भवता। ईषत्करः कटस्त्वया, दुष्करः सुकरः।

---

डिर्ञ्ग्रन्त.। कारणा। ईषुञ्छे ईषणा। ग्रन्थ क्रिग दर्भे ग्रन्थना। श्रन्थ ग मोचने प्रतिहर्षे श्रन्थना। विदञ्ज्ञतौ वेदना। वदिङ नुत्यभिवादनयो. वन्दना। ञिलासङ उपवेशे आसना॥ ११५८॥

कृञदडुच णेर्णित्वात् वृद्धौ कारि। केचित् तु प्रश्ने आख्याने च सक क्रिय क्यपञ्च कृत्वा काङ्कारिका काङ्कृति काङ्क्रिया काङ्कृत्याम् अकार्षीः. सर्वाङ्कारिका सर्वाङ्कृति सर्वाङ्क्रिया सर्वाङ्कृत्याम् अकार्षम् इत्युदाहरन्ति॥ ११५९॥

जीवङ्ह प्राणे अनि अजीवनि। यात्व गतौ अप्रयाणि। नोऽञ इति णत्वम्। स्त्र्यधिकारेऽपि स्त्रीग्रहणं स्त्र्यधिकारनिवृत्त्यर्थम्॥ ११६०॥

एषामव्ययत्वात् खित्कार्याभावेऽपि ईषत् दु'सो. परात् धातोः खल्विधाना-

## ११६२। आतोऽनोऽदरिद्र:।

आत ५।, अन १।, अदरिद्र ५। ।

दरिद्रावर्जात् आदन्तादीषद्दु:सो: परात् अन: स्यात् भावे ढे च। ईषत् पान: दुष्पान: सुपान:। अदरिद्र: किम्? ईषद्दरिद्रम्।

## ११६३। दृश शास युध धृष मृषो वा।

दृश—मृष ५।, वा ।१। ।

ईषद्दु:सो परेभ्य एभ्योऽन: स्यात् भावे ढे च वा। सुदर्शन: सुदर्श:, दु:शासन: दुःशास:, दुर्य्योधन: दुर्य्योध:, सुधर्षण: सुधर्ष:, ईषन्मर्षण: ईषन्मर्ष:।

## ११६४। तादर्थ्ये चतुम्।

तादर्थ्ये ७।, चतुम् ।१। ।

धोस्तुम् स्यात् तादर्थ्ये। कृष्णं द्रष्टुं याति।

---

दाढ्यादिशब्दव्यवधानेऽपि स्यात् तेन ईषदाढ्योपपदात् भवतेर्भावे खलि गुणे खित्वा-दाढ्यस्य मनि ईषदाढ्य भवम्। एवं दुराढ्य भवम्। ईषत् क्रियतेऽसौ इति कर्म्मणि खलि ईषत्कर. एव दुःखेन क्रियतेऽसौ दुष्कर। सुखेन क्रियतेऽसौ सुकर ॥ ११६१ ॥

ईषत् पीयतेऽसौ इति कर्म्मणि अने ईषत्पान। एव दुष्पान। अत्र दुर्वर्जनात् न षत्वम्। सुपान। अदरिद्र किम्? ईषत् दरिद्रायते इति भावे खलि दरिद्र आत्लोपे ईषद्दरिद्रम् ॥ ११६२ ॥

सुखेन दृश्यतेऽसौ इति कर्म्मणि अने सुदर्शन खलि सुदर्श। एवं सुखेन शिष्यतेऽसौ सुशासन. सुशास। एव दुःशासन दुःशास। युध्यौङ युद्धे अन्त-र्भूतण्यर्थत्वात् सकर्म्मकत्वे दुःखेन युध्यतेऽसौ इति कर्म्मणि अने दुर्य्योधन खलि दुर्य्योध धृषा कि त्समर्थे अनर्थ इह अभिभव। सुखेन धृष्यतेऽसौ सुधर्षण सुधर्ष। मृषुज चान्तौ। ईषत् मृष्यतेऽसौ ई मृ०ष ईषन्मर्ष ॥ ११६३ ॥

स धात्वर्थ स चासौ अर्थ प्रयोजनश्चेति तदर्थ तस्य भावस्तादर्थ्यं तस्मिन्।

## ११६५ क्त्वाच् वा निषेधेऽलं खलुना।

क्त्वाच् ।१।, वा ।१।, निषेधे ७।, अलं ।१।, खलुना ३।।

निषेधार्थयोः अलं खल्वोर्योगे धोः क्त्वाच् स्यात् वा भावे। अलं दत्त्वा अलंदानेन, खलुपीत्वा खलुपानेन।

## ११६६। पूर्वकाले।

पूर्वकाले ७।।

पूर्वस्मिन् काले स्थिताद्धोः क्त्वाच् स्यात्। विष्णुं नत्वा स्तौति।

---

यस्य धातोरर्थ. अन्यधात्वर्थस्य प्रयोजनं भवति तस्मात् धातोर्भावे भविष्यत्काले चतुम् स्यादित्यर्थः। चकारोऽव्ययार्थः दृ ईशौ प्रेक्षे चतुम् औदित्त्वात् इमोऽभावे वर्द्धोऽकि डिति ऋकारस्य रेफे शक्वाजेति षङि तस्य टत्वे द्रष्टुम् अत्र दृशधातोरर्थ या धात्व-र्थस्य प्रयोजनं भवतीति दृशधातोश्चतुम्। अत्र क्रिययोरेककर्तृत्वे सत्येव चतुम् स्यात्। तेन विप्रमन्नं भोक्तुं निमन्त्रयते इति न स्यात् अन्नभोजनाय विप्रं निमन्त्रयते इत्येव स्यात॥ ११६४॥

चकारोऽव्ययार्थः। भोव्रज इत्यादिसूत्रस्य वृत्तौ भावपदव्याख्यानात् इत्यादौ भावस्यैवानुवृत्तिः। तेन डुदाञलि दाने भावे क्त्वाचि दद्धोध इति दतादेशे दत्त्वा अच्चोऽनटि सह वारणेत्यादिना तृतीया दानेन। पा पाने भावे क्त्वाचि दामागै इति ईः पीत्वा पक्षे पानेन॥ ११६५॥

यदा कर्त्ता क्रियाद्वयं क्रियात्रयं करोति तदा परक्रियापेक्षया पूर्वस्मिन् काले वर्त्तमानात् धातोर्भावे क्त्वाच् स्यात् इत्यर्थः। तेन पक्त्वा भुङ्क्ते पक्त्वा भुक्त्वा याति। विष्णुं नत्वा स्तौतीति स्तवनक्रियाया पूर्वकाले वर्त्तमानान्नमो शब्दनत्योरित्यस्मात् क्त्वाचि वनतनेति मलोपे नत्वा। पूर्वकाले किं नमति च स्तौति च इत्यादौ न स्यात्। अत्र क्रिययामेककर्तृत्वे एव क्त्वाच् स्यात्। तेन गुरौ गते शिष्यो भुङ्क्ते इत्यादौ न स्यात्। किन्तु पुत्रं दृष्ट्वा सुखं भवति शत्रुं दृष्ट्वा दुःखं भवतीत्यादौ स्थितस्य इत्यध्याहारादेककर्तृकत्वे क्त्वाच्। यद्यपि कंसपतनानन्तरमेव झनत्कारो भवति तथापि झनदिति कृत्वा कंसः पतति इत्यादौ झनत्कारस्य पूर्वकालविवक्षया क्त्वाच् स्यात्। एवं सुखं व्यादाय निद्रातीत्यादि॥ ११॥

## ११६७ । न कित् स्कन्दस्यन्दः ।

न ।१।, कित् ।१।, स्कन्द स्यन्द ५। ।

स्कन्त्वा स्यन्त्वा ।

## ११६८ । सेमऽक्षुध कुष क्लिश गुध मृड मृद वद वस ग्रहः ।

सेम् ।१।, अक्षुध—ग्रह ५। ।

धोः पर इम् सहितः क्त्वाच् कित् न स्यात्, न तु क्षुधादेः । शयित्वा । सेम् किम् ? श्रुत्वा । क्षुधादेस्तु क्षुधित्वा ।

## ११६९ । तृष मृष कृष वञ्च लुञ्चृतो वा ।

तृष—ऋत ५।, वा ।१। ।

एभ्यः सेम् क्त्वाच् कित् न स्यात् वा । तर्षित्वा मर्षित्वा कर्षित्वा वञ्चित्वा लुञ्चित्वा अर्त्तित्वा । पक्षे तृषित्वा इत्यादयः ।

---

आभ्यां परः क्त्वाच् कित् न स्यात् । स्कन्दिरौ गतिशोषणयोः । क्त्वाच कित्त्वाभावात् इसुङ्क् इत्यनेन नलोपाभावे एकवर्गीयवर्णत्रयमध्यवर्त्तित्वात् दलोपे स्कन्त्वा । स्यन्दङवत्त स्रुतौ क्त्वाचि ऊदित्त्वात् इमोऽभावपक्षे स्यन्त्वा । अत्र नञा निर्दिष्टमनित्यमिति न्यायात् क्त्वाच् स्थानजातस्य यपः कित्त्वे प्रस्कद्य प्रस्यद्य इत्यत्र न लोपः स्यात् ॥ ११६७ ॥

सह इमा वर्त्तते योऽसौ स सेम् । शीङलञि क्त्वाच् वसोऽरस्येति इमि अनेन कित्त्वनिषेधे गुणे शयित्वा । एवम् ऋचश नुत्याम् अर्चित्वा इत्यादि । सेम् किम् ? जित्वा श्रुत्वा ज्ञात्वा । क्षुधऌषौ क्त्वाचि क्षुधवसेति इमि क्षुधित्वा । कुषग निष्कर्षे । कुषित्वा । क्लिशुज चोपतापे । क्लिशूगतु विबाधे एतयो इम् पक्षे क्लिशित्वा । गुध्य वेष्टे गुधग रुषि गुधङ क्रीडे इति त्रयाणां गुधित्वा । मृडगशमोदे मृडित्वा मृदग चुदि मृदित्वा एषु कित्त्वात् न गुणः । वदै वाचि ग्रहस्वपाद्योरिति जौ उदित्वा वसैञौ निवासे क्षुधवसेति इमि ग्रहस्वपाद्योरिति जौ शासवसेति षत्वे उषित्वा । गग्रहञ च ग्रहस्वपाद्योरिति जौ ग्रहेरिमोर्घ इति दीर्घे गृहीत्वा । क्षुधक्लिश वस इति त्रिभ्योऽन्येषु वसोऽरस्येति इम् ॥ ११६८ ॥

## ११७० । थ-फात् नुङः ।

थ फात् ५।, नुङ. ५। ।

नकारोङ थान्तात् फान्ताच्च सेम् क्लाच् कित् न स्यात् वा। ग्रन्थित्वा ग्रथित्वा ग्रन्थित्वा ग्रथित्वा गुम्फित्वा गुफित्वा । नुङः किम् ? कोथित्वा रेफित्वा ।

## ११७१ । नश्-जोऽनिमः ।

नश्-ज ५।, अनिम ५। ।

नशो जान्ताच्च नुङोऽनिमः परः क्लाच् कित् न स्यात् वा । नष्ट्वा नंष्ट्वा, भक्त्वा भक्त्वा । अनिमः किम् ? अञ्जित्वा ।

[८१८] व्युङोऽवोहसादेरिति द्योतित्वा, द्युतित्वा लेखित्वा, लिखित्वा । रुदादेस्तु रुदित्वा विदित्वा मुषित्वा । अवः किम् ? देवित्वा । हसादेः किम् ?, एषित्वा ओषित्वा ।

---

इर्षञ्जि तष तषि । क्लाच कित्त्वाभावे गुणे तर्षित्वा कित् पक्षे तृषित्वा । एव मृषु सेचने मृष्यङु मृष्यञ चान्तौ एषा मर्षित्वा मृषित्वा । कृशिर्ष तु कार्श्ये कर्शित्वा कृशित्वा । वन्चु गत्या वञ्चित्वा कित् पक्षे वचित्वा । एव लुन् चापनयने लुञ्चित्वा लुचित्वा । ऋत स्पर्द्धनैश्वर्ययो अर्त्तित्वा ऋतित्वा ॥ ११६९ ॥

ग्रन्थग मोचे ग्रन्थित्वा ग्रथित्वा । गुन्फश ग्रन्थे गुम्फित्वा गुफित्वा । नकारोङ किम् ? कुथ्यतु पूतित्वे कोथित्वा । रिफशर्फे रेफित्वा ॥ ११७० ॥

नश च ज चेति तस्मात् । नश्लृ नाशे ऊदित्त्वात् वेमूदिदित्यनेन इमोऽभावपक्षे नुष् रध इति नुषि कित् पक्षे हसुङ्ग इति नलोपे शक्र्जेति षत्वे नष्टा भन्जोधौ मोटने औदित्त्वात् इमोऽभावे न लोपे चङ्जिति जस्य गकारे झप्भसोरिति गस्य ककारे भक्त्वा । पक्षे नस्यानुस्वारे जपेजम्नीरिति तस्य ङकारे भङ्क्त्वा । अनिम किम् ? अञ्जघञ्जि इम् पक्षे सेमत्तुवेति कित्त्वनिषेधे नस्यानुस्वारे तस्य ञकारे अञ्जित्वा । वुङोऽवो हसादेरित्यस्योदाहरणमाह द्युत्लङ द्युत्या द्युतित्वा द्योतित्वा लिखश लेखने लिखित्वा लेखित्वा । रुदादेस्तु रुदित्वा विदित्वा मुषित्वा । अवः

## ११७२। पू-क्लिशुदित इम्।

पू क्लिश उदित ५।, इम् ।१।।

एभ्य: क्त्वाच् इम् स्यात् वा। पवित्वा पूत्वा, क्लिशित्वा क्लिष्ट्वा, शमित्वा शान्त्वा।

## ११७३। क्रमोर्घो वा।

क्रम ६।, र्घ १।, वा ।१।।

क्रमित्वा क्रान्त्वा क्रन्त्वा।

## ११७४। जॄव्रश्चो न जि:।

जॄ व्रश्च ६।, न ।१।, जि १।।

आभ्यां क्त्वाच् इम् स्यात् न तु व्रश्चेर्जि:। जरित्वा व्रश्चित्वा।

---

किम्? दिव्‌ जिगाषादौ उदित्वेन क्त्वाच् वेट्त्वात् इम् पक्षे सेमच्छुधकुषेत्यादिना। नित्यकित्त्वाभावे गुणे देवित्वा पक्षे द्युत्वा इति बोध्यम्। हसादे किम्? एषित्वा ओषित्वा। अनयोरपि वेभत्वात् इम् पक्षे कित्त्वाभावो नित्य ॥११७१॥

वृदुश्रीत्यनेन कितामिम् निषेधात् पू इत्यस्याप्राप्तौ विकल्पार्थं ग्रहणम्। क्लिश्शुप्ञ चोपतापे अस्य स्वमते उदित्त्वेऽपि पुनर्ग्रहणम् अन्येषां मते उदित्त्वाभावात्। पूस्वरूपात् क्त्वाचोऽनेन इमि सेमच्छुधकुषेत्यादिना कित्त्वनिषेधात् गुणे पवित्वा पक्षे पूत्वा। क्लिश्शुञ क्त्वाच इमि सेमच्छुवेत्यत्र क्लिशवर्जनात् गुणाभावे क्लिशित्वा पक्षे क्लिष्ट्वा। शमुभिषं शमि उदित्त्वादनेन इमि शमित्वा पक्षे जमृङ्‌ भस्वणाविति दीर्घे शान्त्वा ॥११७२॥

क्रमो र्घं स्यात् क्त्वाचि। क्रमु गतौ क्त्वाच् वेट्त्वात् इमोऽभावपक्षेऽनेन दीर्घे क्रान्त्वा पक्षे क्रन्त्वा। इम् पक्षे क्रमित्वा इति बोध्यम् ॥११७३॥

विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वम्। जॄस्वरूपात् वृदुश्रीत्यनेन कितामिम् निषेधेऽपि अनेन इमि सेमच्छुवेत्यादिना कित्त्वनिषेधात् गुणे जरित्वा। पक्षे वृतो वेम इति दीर्घे जरीत्वा इत्यपि। जॄ इति दीर्घान्तस्य ग्रहणमिति दुर्गसिंह:। जॄ

## ११७५। हाको हिः।

हाकः ६।, हिः १।।

**हित्वा।**

## ११७६। व्यादनञः क्त्वो यप् से।

व्यात् ५।, अनञ ५।, क्त्व ५।, यप् ।१।, से ७।।

**नञ्वर्जात् व्यात् परात् धोः क्त्वो यप् स्यात् से सति। प्रकर्षेण कृत्वा प्रकृत्य, प्रवत्य प्रतत्य प्रहत्य, उदज्य, प्रदाय प्रमाय प्रगाय प्रहाय प्रपाय प्रसाय प्रस्थाय। [७५३] दीङ्ष्ठ्रामिति यपि ङा। प्रदाय [७४५] मिस्योरिति ङा प्रमाय प्रलाय प्रलीय।**

---

न्यकारे इति कृस्तान्तस्य ग्रहणमित्येके। ओव्रश्चू छेदे ऊदित्त्वेन वेमत्वेऽपि अनेन नित्ये मि व्रश्चित्वा। सेम् क्त्वाच. कित्त्वनिषेधादेव ञेरप्राप्तौ अत्र ञेर्निषेधो ज्ञापयति कस्यचिद्विधेर्निषेधेऽपि पुन प्रसक्ति' स्यादिति। तेन हवव्रतेरिति इम् निषेधेऽपि उणादे क्ते इम् स्यात्। यथा भणिति सङ्कुचिति निकुचिति आलोचितिः पठिति. गृहीति क्षिहिति उदिति मुदिति दीधितिरित्यादि ॥११७४॥

हाको हि स्यात् क्त्वाचि। हित्वा। हाक किम्? ओहाङखि गतौ हात्वा ॥११७५॥

नास्ति नञ् यत्र सोऽनञ् तस्मात्। कृञदुङ च प्रकर्षेण कृत्वा इति व्यस्य ग्यनु-कारेति समासे अनेन क्त्वाचो यपि तस्य स्थानिवत्त्वेन कित्त्वात् गुणाभावे स्वस्य तनि प्रकृत्य। वनुम व्याप्तौ प्रवत्य। तनदुञ विस्तृतौ प्रतत्य। हनलौ प्रहत्य। एषु वनतनेति न लोपे स्वस्य तन्। अञ्जूधञि हसुङ्क इति नलोपे उदज्य। दा इति स्वरूपस्य प्रदाय। मा इति स्वरूपस्य प्रमाय। गै प्रगाय। हाक प्रहाय। पा पाने प्रपाय। षोय नाशे प्रसाय। स्था प्रस्थाय। एषु दामागेहामित्यत्र यप्वर्जनात् न ङी। ओदीङ्य चये दीङ्ष्ठ्रामिति ङादेशे प्रदाय। डुमिञन क्षेपे मीङ्यतु मीञग वधे एषां मिस्योरिति ङादेशे प्रमाय। ली इत्यस्य लियस्तु वेत्यनेन ङादेशविकल्पे प्रलाय प्रलीय। अनञः किम्? अकृत्वा न कृत्वा। से किम्?

११७७। म्लोपो वा अनिमः।

म् लोप. १।, वा ।१।, अनिम ६।।

अनिमो मस्य लोपः वा स्यात् यपि। प्रणत्य प्रणम्य। अनिमः किम् ? प्रशम्य।

११७८। घोर्ञेरयः।

घो ५।, ञे ६।, अय १।।

घुपूर्वस्य ञेरयः स्यात् यपि। विगणय्य। घोः किम् ? सम्प्रधार्य्य।

११७९। वापः।

वा ।१।, आप ५।।

आपः परस्य ञेरयः स्यात् वा यपि। प्रापय्य प्राप्य।

११८०। वा-मेच्योर्मिच्यौ।

वा ।१।, मे च्यो ६॥, मिच्यौ १॥।

मेङो मिः चेः च्योः स्यात् वा यपि। अपमित्य अपमाय, प्रचीय प्रचित्य।

---

सपदि कृत्वा इति। कदाचिदनव्ययपूर्वादपि तेन स्थन त्यज्य गच्छति। सन्ध्या-वधू गृह्य करेण गाढमित्यादि कौमरा.॥ ११७६॥

नमौ शब्दनत्यौ मलोपे ह्रस्य तानि प्रणत्य पचे प्रणम्य। एवम् औगम आगत्य आगम्य। अनिम किम् ? विक्रम्य आचम्य। निर्जित्य आहत्य विहत्य इत्यादौ आगमा-देशयोरागमस्य बलवत्त्वादौ ह्रस्य तनागमे घौऽजय्यरे इति न स्यात्॥ ११७७॥

लघोरव्यवहितपरस्य ञेरसम्भवात् हसव्यवधाने इत्यर्थः। गणत्क सङ्ख्याने। ञौ हसाल्लोप इत्यकारलोपे गणिभागात् क्त्वाचो यपि अनेन ञेरयि विगणय्य एवं विघटय्य इत्यादि। घो किम् ? सपूर्वात् धृङ धृत्या ञौ धारिभागात् क्त्वाचो यपि गुर्वक्षरपूर्वत्वात् ञेरयाभावे ञेर्लोपे सम्प्रधार्य्य। एव प्रपाठ्य प्रभाव्य इत्यादि॥ ११७८॥

प्रापय्य प्राप्य। अत्र गुरुपूर्वत्वात् अप्राप्तौ विभाषा॥ ११७९॥

११८१ । न वे-ज्या-व्यो जिः ।

न ।१।, वे ज्या—व्य. ६।, जि' १।।

एषा जिर्नः स्यात् यपि । प्रवाय प्रज्याय प्रव्याय ।

११८२ । संपरि-व्यो वा ।

सम्-परि-व्य ६।, वा ।१।।

आभ्या व्येओजिर्वा स्यात् यपि, संवीय संव्याय, परिवीय परिव्याय ।

११८३ । चणम् वाभीक्ष्ण्य पूर्वकाले ।

चणम् ।१।, वा ।१।, आभीक्ष्ण्ये ७।, पूर्वकाले ७।।

धोः पूर्वकाले चणम् वा स्यात् पौनःपुन्ये । स्मृत्वा स्मृत्वा नमसि, स्मार स्मार नमसि ।

कृतो ये यत्र विहितास्तत्र नूनं भवन्ति ते ।
क्त्वोः कभाव इत्युक्तेरन्यत्रापि प्रयोगतः ॥

तथाच ।

कृत्तद्धितसमासानामभिधानं नियामकम् ।
लक्षणं त्वनभिज्ञाना तदभिज्ञानसूचकम् ॥

---

मेङ प्रतिदाने क्त्वाचो यपि अनेन मि आदेशे स्वस्य तनि अपमित्य । पक्षे एचोऽश्वित्या अपमाय । चिस्वरूपात् क्त्वाचो यपि दीर्घान्तादेशे प्रचीय पक्षे स्वस्य तनि प्रचित्य । पुनर्वाग्रहण परतो वाधिकारनिवृत्त्यर्थम् ॥ ११८० ॥

वेञवे सु[illegible] ज्या[illegible] [illegible]यां व्येञ् इतौ एषा ग्रहस्वपाद्योरिति प्राप्तौ जिर्न स्यात् यपि ॥ ११८१ ॥

सम्परिपूर्वस्य व्येञ् इतावित्यस्य जिर्वा स्यात् यपि । संवीय परिवीय । उभयत्र जौ कृते जीर्घोऽन्त्य इति दीर्घं । सम्परिपूर्वस्य किम् ? प्रव्याय प्रतिव्याय ॥११८२॥

अभीक्ष्णं मुहुरर्थमव्यय तस्य भाव. आभीक्ष्ण्यम् । अत्रापि क्रिययोरेककर्तृकत्वे स्वतीति बोध्यम् । स्मृ स्मृतौ चणम् णित्वात् वृद्धौ स्मारं स्मारं आभीक्ष्ण्ये पूर्व-

वैकल्प्यात् द्विलम्। चित्वादव्ययम्। पचं कृत्वा भृत्वा। अत वाशब्दस्य व्यवस्था वाचित्वात् क्वचित् पौन पुन्याभावेऽपि चणम् स्यात्। तदेवाह विवक्षीमि। अग्रे प्रथमपूर्वेभ्यो धीयणम् वा। अग्रे भोजं व्रजति अग्रे भु क्त्वा व्रजति। एव प्रथम पूर्वम्। कर्मणि क्रुशश्चणम। खणमाक्रोशे। चौरं कारमाक्रोशति। खित्वात् मन्। चित्वात् वृद्धि। चौरं कृत्वा आक्रोशतीत्यर्थ। आक्रोशे किम्? साधु कृत्वा स्तौति। स्वार्थात् कृञ। स्वादुङ्कारं भुङ्क्ते। सुरसङ्कारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। दीर्घात् नेष्यते। स्वादूकृत्य अवीकारी दीर्घ। स्वादी कृत्वा यवागू भुङ्क्ते। कथमित्यमेवमन्यथाभ्य कृञश्चणम्। कथङ्कारं भुङ्क्ते। इत्यङ्कारम्। एवङ्कारम्। अन्यथाकारम्। यथातथाभ्यामचमीत्तरे। यथाकारं तथाकारम्। अहम् भोक्ष्ये तवानेन किम्। अचमीत्तरे किम्? यथा कृत्वा अह भोक्ष्ये तथा कृत्वा अह द्रक्ष्यामि। दृशविद्भ्यां साकल्ये। कन्यादर्शं वृणोति या यां कन्यां पश्यति ता ता सर्वां वृणोतीत्यर्थ.। विप्रवेदं भोजयति य य विप्रं वेत्ति विन्दति वा त त भोजयतीत्यर्थ.। साकल्ये किम्? किञ्चिद्विप्रं दृष्ट्वा भोजयति। यावती जीवविन्दात्। यावज्जीवमधीते यावज्जीवति तावदधीते इत्यर्थ। यावत् वेद भुङ्क्ते यावन्त विन्दति तावन्त भुङ्क्ते इत्यर्थ। चर्मोदराभ्या पूरे.। चर्मपूरं ददाति। उदरपूरं भुङ्क्ते उदर पूरयित्वा भुङ्क्ते इत्यर्थ। वर्षप्रमाणे ऊकार-लोपश्च वा। गोष्पदप्रं गोष्पदपूरं वृष्टो देव गोष्पद पूरयित्वा ववर्षेत्यर्थ। वस्त्रार्थात् क्नोपे। वस्त्रार्थात् परात् ज्ञान्तक्नुयधातोश्चणम् स्यात् वर्षप्रमाणे। वस्त्रक्नोपं चेलक्नोपं वृष्टो देव वस्त्रम् आर्द्रं कृत्वा वृष्ट इत्यर्थ। निमूल-समूलाभ्या गतार्थे कष। निमूलकाषं समूलकाषं कषति समूलं कषतीत्यर्थ। यत्र गतार्थात् चणम् स्यात् तत्र तद्धातुरनुप्रयुज्यते। गता-र्थादिति किम्? चेलक्नोपं वृष्टो देव। समूलात् गतार्थहने। समूल-घातं हन्ति समूलं हन्तीत्यर्थ। शुष्कचूर्णरुक्षाद्गतार्थपिष। शुष्कपेषं पिनष्टि शुष्कं पिनष्टीत्यर्थ। एव चूर्णपेषम्। रुक्षपेषम्। जीवाद्गतार्थग्रह। जीवग्राह गृह्णाति जीवं गृह्णातीत्यर्थ। अकृताद्गतार्थे कृञ अकृतकारं करोति अकृतं करोतीत्यर्थ.। करणाद्गतार्थहन्ते। पादघातं भूमिं हन्ति पादेन भूमिं हन्तीत्यर्थ। हस्तार्थकरणाद्गतार्थग्रहवर्त्तिवृत। हस्तग्राहं गृह्णाति हस्तेन गृह्णातीत्यर्थ। हस्तवर्त्तं वर्त्तयति हस्तेन वर्त्तयतीत्यर्थ। करवर्त्तं वर्त्तते करेण वर्त्तते इत्यर्थ। आत्मा-त्मीयबन्धुवित्तवाचकात् करणाद्गतार्थपुष.। स्वपोषं पुष्णाति स्वेन पुष्णातीत्यर्थ। एव

आत्मपोष आत्मीयपोषं ज्ञातिपोष बन्धुपोष धनपोषम् । छेदनात् करणाद्यर्थात् पिष । छिद्यतेऽनेनेति छेदनं जलादि । उदकपेष पिनष्टि उदकेन पिनष्टीत्यर्थ । एव तैलपेषं घृतपेषम् । आधाराद्यर्थबन्धः । चक्रबन्ध बद्ध चक्रे बद्ध इत्यर्थ । मुष्टिबन्धं बद्ध. मुष्टौ बद्ध इत्यर्थ. । संज्ञायाञ्च । क्रौञ्चबन्धन बद्ध. । एव मयूरिकाबन्ध बद्ध इत्यादि । बन्धनविशेषाणामिय संज्ञा । कर्त्तृजीवपुरुषाद्यर्थनशवह क्रमात् । जीवनाश नष्टः जीवो नष्ट इत्यर्थः । पुरुषवाह वहति पुरुषो भूत्वा वहतीत्यर्थ । विद्युत्प्रणाशम् । अय निपात्यते । विद्युत्प्रणाशं नश्यति विद्युदिव नश्यतीत्यर्थ. । ऊर्द्धाद्यर्थशुषिपूरेः । ऊर्द्धात् कर्त्तृ पराभ्यां गतार्थशुषिपूरिभ्या णम् स्यात् । ऊर्द्धशोष शुष्क । ऊर्द्धपूर पूर्ण. । तृतीयान्तायुपपदेन णमन्तस्य समासो वा वक्तव्य । तृतीयान्तपदादुपदंशे । तृतीयान्तपदादुपदंशेर्णम् स्यात् । तृतीयान्तेन समासश्च वा । मूलकेनोपदंश भुङ्क्ते । हिंसार्थाच्चैककर्मकात् । तृतीयान्तादिपदाद्धिंसार्थधातोश्चानुप्रयोगेण सहैककर्म्मकात् णम् स्यात् । तेन समासश्च वा । दण्डेनोपघात दण्डोपघातं गाश्चालयति । केशेषु केशैर्वा ग्राह्य युध्यन्ते केशग्राहं युध्यन्ते । पार्श्वयो. पार्श्वाभ्यां वा उपपीडं शेते । मुष्टिपीडं दधाने इति भट्टि । एवं पाण्युपकर्षं भर्च्चयति पाणिना उपकृष्य जनो भक्षयतीत्यर्थ. । अपादानाद्धातोर्णम् । त्वराया समासश्च वा । शय्याया उत्थान शय्योत्थाय धावति । द्वितीयान्ताद्धातोर्णम् समासश्च वा । लोष्टं ग्राहं लोष्टग्राह युध्यन्ते । स्वाङ्गाच्चाध्रुवाद्धातोर्णम् समासश्च वा । यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तत् अध्रुवम् । भ्रुवौ विक्षेपं भ्रूविक्षेप वक्ति । अध्रुवादिति किम् ? शिर उत्क्षिप्य कथयति । परिपीड्यमानस्वाङ्गाद्धातोर्णम् समासश्च वा । उरसि परिपेषम् उरःपरिपेषं युध्यन्ते क्रत्स्नमुरः पीडयित्वा युध्यन्ते इत्यर्थः । उरो विदारं प्रतिचस्करे नखैरिति माघ । उपपदवीप्साया धोर्णम् स्यात् समासश्च । शिलायां शिलायामुपविश्य शिलोपवेश लता लतामनुपात्य लतानुपातम् । नदीं नदीमवस्कन्द्य नद्यवस्कन्दमिति । नाम्न आदिशग्रहः समासश्च वा । नामान्यादिश्य नामादेशं ददाति एव नामानिग्राह्य नामग्राह आह्वयति । तसन्तस्वाङ्गात् धोर्णम् । क्वाचौ समासश्च वा । मुखत.कार मुखत.कृत्य मुखतःकृत्वा आस्ते । तसन्तत्वेनाव्ययत्वात् क्वाचौ यप् । तसन्तस्वाङ्गात्तु च्व्यन्तस्य भुवर्णम् क्वाचौ समासश्च वा । मुखतो भाव मुखतो भूय मुखतो भूत्वा आस्ते । एवं तूष्णीम्भाव तूष्णीम्भूय तूष्णीम्भूत्वा । एवञ्च प्रयोगानुसारात् धातुविशेषेभ्य. अर्थविशेषेषु प्रत्ययविशेषाद्

## ११८४ । बहुलं ब्रह्मणि ।

बहुल १।, ब्रह्मणि ७। ।

यत् इह लौकिकप्रयोगव्युत्पत्तये लक्षणमुक्तं तत् वैदिक-प्रयोगव्युत्पत्तौ बहुलं ज्ञेयम्। क्वचित् विहितं न स्यात्। [१] क्वचित् निषिद्धं स्यात् [२]। क्वचित् वा स्यात्। क्वचित् ततोऽन्यत्रापि इत्यर्थः। यथा पूर्वेभिः [१] ब्राह्मणाम् [२] इत्यादौ वेदसिद्धेः।

ब्रह्मशब्दोऽत्र मन्त्रार्थे ।

इति उण्‌णादि पादः ।

इति कृदन्ताध्याय ।

समाप्तम् ।

---

कृत्वाऽन्येऽपि साधुशब्दा व्युत्पाद्या । यथा उणिकृते करोतीति कारु । वातीति वायु । भातीति भवान्। विभित्यस्मादिति मे कृते भीमभीष्मौ निपात्यौ। एव धातुमात्राद्भावे इ । यथा भवन भवि त्यजन त्यजि. नर्त्तन नृति । अत्र किम् ? नौदन नुदि दर्शन दृशिरित्यादि। धातौ स्वरूपकथने तिप्। यथा भवति. अत्ति दीव्यति । एव स्वरूपकथने इर्शुवादेर्न च गुण । भवि: ग्रहि' रन्जि । ब्रुवादिस्तु ब्रुवि. युजि. मुहि सिचि. दुहि' दृशिरित्यादि। अतएव नाम च धातुज-माह निरुक्ते व्याकरणे शकटस्य च तोकम्। यत्र पदार्थविशेषसमुत्थ प्रत्ययत: प्रकृतेश्च हि दृष्टमिति प्राच. ।

कृतो ये यत्रेति—

ये कृत यत्र येष्वर्थेषु विहितास्ते तत्र तेषु नून निश्चित भवन्ति। प्रयोगत. महाकविप्रयोगानुसारेण अन्यत्रापि स्यु.। तत्र हेतुमाह। कृद्‌भो कभाव इति वचनात्। उदाहरण तत्रैव द्रष्टव्यम्। न केवलमहमेव ब्रवीमि प्राचोऽप्येवमाहु. इत्यत आह कृत्तद्धितसमासानामिति ॥११८३॥

बहुलमिति। बहव प्रकारा' सन्त्यस्येति बहुल चूडादित्वात् ल । अथवा उहन् अर्थान् लाति गृह्णाति बहुलम् ॥११८४॥

मुग्धबोध पठन-प्रयोजनम् ।

गीर्वाणवाणीवदनं मुकुन्द-
सङ्कीर्त्तनञ्चेत्युभयं हि लोके ।
सुदुर्लभं तच्च न मुग्धबोधा-
न्नलभ्यतेऽतः पठनीयमेतत् ॥

ग्रन्थकृत् परिचयः ।

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः ।
वोपदेवश्चकारेदं विप्रो वेदपदास्पदम् ॥

वोपदेव प्रशंसा ।

यौर्वाचस्पतिनेव, पन्नगपुरी शेषाहिनेवाभवत्
येनैकेन विदुष्मती वसुमती मुख्येन सङ्ग्रावताम् ।
सोऽयं व्याकरणार्णवैकतरणिश्चातुर्य्यचिन्तामणि-
र्जीयात् कोविदगर्वपर्वतपविः श्रीवोपदेवः कविः ॥

---

ग्रन्थोत्कर्षं ख्यापयन्नाह गीर्वाणेत्यादि। गीर्वाणवाणीवदनं संस्कृतकथनं मुकुन्दसंकीर्त्तनञ्च इत्युभयमेव लोके सुदुर्लभं भवति। तच्च उभयं न मुग्धबोधात् मुग्धबोधभिन्नग्रन्थात् न लभ्यते अतो हेतो एतत् पठनीयम्। नानादेशीय-शिष्यपरम्परया नामोत्कीर्त्तनयशोवर्द्धनार्थं गुरोः पितुरात्मनश्च नाम निर्दिशति। वोपदेव विद्वद्धनेश्वरेत्यादि। उः शिव श्च विष्णुः उश्च श्च वौ वयोरुपसमीपे दीव्य-तीति इदानीं तत् शिष्यसत्कीर्त्तिं वर्द्धयन् श्लोकद्वयमाह यौर्वाचस्पतिनेत्यादि ॥

दुर्गादासो व्यरचयदिमां मुग्धबोधस्य टीकां,
नानाविद्वन्मतविलसितामाशुबोधां सुबोधाम् ।
आलोकन्तामपि शुनबुधाः सूयमाना स्वभावात्
दोषं त्यक्त्वा लवमपि गुणं भूरिवद्भावयन्तु ॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां
मुग्धबोधस्य टीकायां कृदन्ताध्यायः ।

---

सम्पूर्णोऽयं ग्रन्थः ।

